श्रीः

# नरपतिजयचर्यास्वरोदयः

## श्रीमन्नरपतिकविविरचितः

---

### हरिवंशकविविरचितजयलक्ष्मीटीकासमेतः

★



मुद्रक व प्रकाशक-

**खेमराज श्रीकृष्णदास,**

अध्यक्ष-"श्रीवेंकटेश्वर" स्टीम्-प्रेस, बम्बई.

---

२०१३ ] [ सन् १९५६

# प्रस्तावना

★

इह खलु विदाङ्कुर्वन्तु ततो भवन्तो वेदशास्त्रवेदाङ्गपाथोधिनिर्मन्थनोद्धृत-सारसद्रत्नकण्ठाऽभरणाः यत्किल निगमागमाद्यभितैहिकाऽमुष्मिकसत्फलसाधक-साधीयांसो यागादिव्यापारा अन्तरेण सुसमयारम्भं न पूरयन्ति मनोरथान् विदधत इत्यवगम्य प्राचीना महर्षिदैवज्ञा ज्योतिषेऽनेकान्सुविषयविभूषितान् ग्रन्थान्व्यर-रचन्, तेषु विषयविभागाश्च भूयांसः सन्ति। परमत्र "कृते जयार्णवं नाम त्रेतायां ब्रह्मयामलम्। द्वापरे विजया ख्याता कलौ चैव स्वरोदयः॥" इति महदुक्तेः कलौ स्वरोदयस्याधिकफलप्रदत्वात्सत्स्वपि ग्रन्थान्तरेषु ततस्ततः क्लिष्टत्वादिकारणैः सिद्धान्तस्याऽसुखग्राह्यत्वाच्च परमकारुणिकेन 'नरपती' त्यभिधानभूषितकविवरे-णायं "नरपतिजयचर्या" नामको ग्रन्थो निरमायि। सच प्रश्नविविधयुद्धभूम्यादि-वर्णनविषयात्मकः परोपकारमभीप्सुना 'हरिवंश' नामककविवरेण स्वरचित 'जयलक्ष्मी' नामटीकया सतिलकीकृतः चिराय मुद्रयितुमभीप्सितोऽपि सम्प्रति समुपलब्धत्रिचतुःपुस्तकैश्शास्त्रिभिः संशोध्य स्वकीये "श्रीवेङ्कटेश्वर" यन्त्रालये स्वच्छमसृणपुष्टपत्रैः सुशोभनाक्षरैस्संमुद्रितः सर्वाभीष्टप्रदानायोन्मुखो विराजते-तराम्।

विद्वज्जन कृपाकांक्षी–

**खेमराज श्रीकृष्णदास,**

"श्रीवेङ्कटेश्वर" स्टीम्-यन्त्रालयाध्यक्षः-बम्बईस्थः

श्रीः ।

# अथ नरपतिजयचर्या—विषयानुक्रमणिका ।

इत्युनुक्रमणिका समाप्ता ।

श्रीः ।

# अथ नरपतिजयच्चर्या ।

## जयलक्ष्मीटीकोपेता ।

श्रीगणेशाय नमः । नतिं कृत्वा गणेशाय विघ्नविध्वंसकारिणे । निर्विघ्नकृतिसार्थाय कमलापतये नमः ॥ १ ॥ मोहांधकारमग्नानां जनानां ज्ञानरश्मिभिः । कृतमुद्धरणं येन तं नौमि शिवभास्करम् ॥ २ ॥ हरिवंशकविः स्वार्थं पदार्थं च स्वरोदयम् । व्याख्यानं मात्रिकादीनां स्वराणां नामजन्मनाम् ॥३॥ गुरुभ्यो बहुधा श्रुत्वा यथा ज्ञानं यथा धिया । जयलक्ष्मीरिति मया टीका राज्ञी विरच्यते ॥ ४ ॥ अथ कविरानंदस्वरूपं ब्रह्म नमस्करोति ।

श्रीगणेशाय नमः ॥ अव्यक्तमव्ययं शांतं नितांतं योगिनां प्रियम् ॥ सर्वानंदस्वरूपं यत्तद्वंदे ब्रह्म सर्वगम् ॥ १ ॥ विविधविबुधवंद्यां भारतीं वंदमानः प्रचुरचतुरभावं दातुकामां जनेभ्यः ॥ नरपतिरिति लोके ख्यातनामाभिधास्ये नरपतिजयचर्यानामकं शास्त्रमेतत् ॥ २ ॥ कृते जयार्णवं नाम त्रेतायां ब्रह्मयामलम् ॥ द्वापरे विजयाख्यातं कलौ चैव स्वरोदयः ॥ ३ ॥ ब्रह्मयामलमादौ स्याद्द्वितीयं विष्णुयामलम् ॥ रुद्रयामलमाख्यातं चतुर्थं चादियामलम् ॥ ४॥ स्कंदं च यामलं चैव षष्ठं कूर्मस्य यामलम् ॥ सप्तमं यामलं देव्या इति यामलसप्तकम् ॥ ५ ॥ श्रुत्वादौ यामलान्सप्त तथा युद्धजयार्णवम् ॥ कौमारीं कोशलं चैव योगिनीजालसंचरम् ॥ ॥ ६ ॥ रक्षोघ्नं च त्रिमुंडं च स्वरसिंहं स्वरार्णवम् ॥ भूबलं भैरवं नाम पटल स्वरभैरवम् ॥ ७ ॥ तंत्रं रणाह्वयं ख्यातं सिद्धांतं जयपद्धतिम् ॥ पुस्तकेन्द्रं च ढौकं श्रीदर्शनं ज्योतिषं तथा ॥ ८ ॥ मंत्र-

यंत्राण्यनेकानि कूटयुद्धानि यानि च ॥ तंत्रयुक्तिं च विज्ञाय विज्ञानं वडवानले ॥ ९ ॥ एतेषां सर्वशास्त्राणां दृष्ट्वासारोहमात्मना ॥ सारोद्धारं करिष्यामि सर्वसत्त्वानुकंपया ॥ १० ॥

अव्यक्तमिति । अव्यक्तं करचरणादिसितकृष्णादिरहितं शांतं निर्गुणं योगिनां सनकादीनां नितांत प्रियम् । सर्वानंदस्वरूपम् । एवं सर्वगं सर्वव्यापि यद्ब्रह्म तस्मै नमः ॥ १ ॥ पुनः सरस्वतीं नमस्करोति विविधविबुधवंद्यामिति । विविधा ये विबुधा देवास्तैर्वंद्यां भारतीं सरस्वतीं प्रचुरचतुरभावं जनेभ्यो दातुकामां वंद्यमानां नरपतिरिति लोके ख्यातनामा कविनरपतिजयचर्यानामकमेतच्छास्त्रं करोति ॥ २ ॥ अथ नरपतिकवेर्देशकुलव्याख्यापनं करोमि " विद्यालये मालवसंज्ञदेशे धारापुरीरम्यनिवासवासी ॥ नानागमज्ञो नृपलोकपूज्यो बुधः प्रसिद्धो नरदेवनामा ॥ स्वरबलफलवेत्ता देहतत्त्वेष्वभिज्ञो विदितशकुनशास्त्रस्तंत्रमंत्रप्रवीणः ॥ कलितगणितसारासारचूडामणिज्ञो नरपतिरिति नाम्ना तस्य पुत्रो बभूव ॥ ज्ञाने यः सर्वज्ञो नृपगणपूज्यः सरस्वतीसिद्धिः ॥ तेन कृतं शास्त्रमिदं प्रचुरगुणं दोषरहितं च ॥ यो वेत्ति शास्त्रमेतद्गुरुमुखकथितं सद्युक्तिसिद्धं च ॥ वसति विशदा समग्रा करकमले तस्य विजयश्रीः ॥ जित्वा रिपुनृपलक्ष्मीं ददाति निजभूपतेर्न संदेहः ॥ एतच्छास्त्रज्ञबुधश्चतुर्विधे चैव संग्रामे ॥ श्रीमत्यासौवल्लिनगरे ख्याते श्रीअजयपालनृपराज्ये ॥ श्रीपतिनरपतिकविना रचितमिदं तत्रसंस्थेन ॥ गौरांगीं नवयौवनां शशिमुखीं तांबूलगर्भाननां मुक्तामंडनशुभ्रमाल्यवसनां श्रीखंडचर्चांकिताम् ॥ दृष्ट्वा कामपि कामिनीं स्वयमिमां ब्राह्मीं पुरो भावयदंतश्चिन्तयतो जगत्तस्य मनसि त्रैलोक्यमुन्मीलिनीम् ॥" इति नरपतिचर्यास्वरोदये कविप्रशंसा ॥ अथ ग्रंथकृद्ग्रंथकरणे स्वसामर्थ्यप्रकटनं ग्रंथाध्ययनमाह ॥ श्रुत्वादाविति स्पष्टार्थः ॥६॥७॥८॥९॥१०॥

पत्त्यश्वगजभूपालैः संपूर्णा यदि वाहिनी ॥ तथापि भंगमायाति नृपो हीनस्वरोदयी ॥ ११ ॥ तावत्तरंति ते धीरा दोर्भ्यामाहवसागरम् ॥ यावत्पतंति नो चक्रे स्वरास्ते वडवानले ॥ १२ ॥ कथंचिद्विजयी युद्धे स्वरज्ञेन विना नृपः ॥ घणवर्णोपमं तत्तु यथांधचटकग्रहः ॥ १३ ॥ यस्यैकोपि गृहे नास्ति स्वरशास्त्रस्य पारगः ॥ रंभास्तंभोपमं राज्यं निश्चितं तस्य भूपतेः ॥ १४ ॥ स्वरशास्त्रे सदाभ्यासी सत्यवादी जितेंद्रियः ॥ तस्यादेशस्य यः कर्ता जयश्रीस्तं नृपं भजेत् ॥ १५ ॥

अथ स्वरसामर्थ्यप्रधानतामाह पत्त्यश्वेति। स्वरोदयी स्वरशास्त्रं सम्यक् जानातीति स्वरोदयी स्वरज्ञो ज्योतिषिकस्तेन हीनो रहितः पत्त्यश्वगजरथवाहिनीदिग्विजयशीलोपि राजा तथापि भंगमायाति संग्रामात्पलायते किं पुनः स्वल्पसैनिकः॥ ११॥ अथ स्वरबलसहितराज्ञः सामर्थ्यमाह॥ तावत्तरंति ते वीरा इति॥ ते वीराः भटाः स्वरज्ञयुक्ताः स्वरबलाढ्या आहवसागरं संग्रामसमुद्रं तावदेव दोर्भ्यां तरंति संग्रामपारं गच्छंति यावत्कालम् अविघ्नजयप्रापकं स्वरबलं तिष्ठति। तावद्बाहुभ्यां ब्रह्मविष्णुरुद्रदुर्गागणेशनिवृत्तिप्रवृत्तिशक्तिशांतिशक्त्यातीत इच्छामोहद्रोहमदमात्सर्यशब्दरूपरसस्पर्शगंधाद्यधिष्ठितत्वादेवमेव शत्रुञ्जयति किं पुनः खड्गादिशस्त्रसहितः तावदित्याकांक्षयान्यदाह। यावदिति। यावत्ते भटाः। स्वरास्ते वडवानले चक्रे नो पतंति। स्वराणामस्ते स्वरास्तसंस्थे वडवानलः वडवाग्निनी तन्मुखे योनऽलः अग्निः स वडवानलस्तस्य चक्रे समूहे न पतंति स्वराः स्वनाममात्रादयः मात्रा वर्णो ग्रहो जीवादयोऽष्टौ स्वरा अस्तमिताः स एव संग्रामसागरस्तस्मिन् संग्रामसागरे वडवानलास्तचक्रे वडवानलचक्रवत् भूमौ न पतंति तावदेव स्वरबलसहितं संग्रामपारं गच्छंति यदा पुनः संग्रामं कुर्वन्नस्तस्वरसमयं प्राप्ताः भटा संग्रामसागरे विलयं यांति यथा स्वरबलेनाढ्याः पुरुषाः बाहुभ्यामेव समुद्रपारं गंतुकामास्तावन्मात्रं समुद्रं तरंति। यावत् स्थाने समुद्रे वडवानलश्च निर्विद्यते तत्र चेत्पतंति तदा च तत्रैव विलयं यांतीति प्रसिद्धिः एतावता उदितस्वरा जयकारणमेव मुख्यं तेनावश्यमेव विजयार्थिभिः स्वरोदयज्ञाः ग्राह्याः स्वरोदयशास्त्रं पठितव्यमिति॥ १२॥ अथ स्वरज्ञं विना यथा जयो भवति तथाह। कथंचिदिति सुगमम्॥ १३॥ अन्यत्स्वरहीनन्नृपं प्रमाणयति। यस्यैकोपीति। यस्य नृपस्य राज्ये स्वरज्ञो नास्ति तस्य राज्यं रंभा कदली तस्याः स्तंभोपमं भाति तद्राज्यं शत्रुभिः सुखेनाभिभूयते॥ १४॥ अथ पुनः स्वरज्ञमेव प्रशंसति। स्वरशास्त्रे सदाभ्यासीति॥ सुगमम्॥ १५॥

दशकेन शतं तैश्च सहस्रं शतसंख्यया॥ स्वरोदयबलो राजा दशघ्नं हंति लीलया॥ १६॥ पुष्पैरपि न योद्धव्यं यावद्धीनः स्वरोदयी॥ स्वरोदयबले प्राप्ते योद्धव्यं शस्त्रकोटिभिः॥१७॥ स्वरज्ञः शकुनज्ञश्च दैवज्ञो मंत्रपारगः॥ केरलीवित्तथा राज्ञां कीर्तितं रत्नपंचकम्॥१८॥ स्वरचक्राणि चक्राणि भूबलानि बलानि च॥ ज्योतिषं शकुनं चैव षडंगानि वदाम्यहम्॥१९॥ यामलेषु च सर्वेषु यान्युक्तानि स्वरोदये। विंशतिः स्वरचक्राणि वक्ष्येहं तानि चाधुना॥ २०॥

अथ स्वरबलप्रशंसामाह । दशैकेनेति । एकोपि स्वरबली राजा दश राजबलानि लीलया अनायासेन जयति । दशभी राजभिः स्वरबलिभिः शतं शत्रूणां जयति एवं शतैः सहस्रं जयति एतावता स्वरबलमेव जये प्रमाणम् ॥ १६ ॥ अथ प्रागुक्तमेव स्वरबलं च प्रमाणयति । पुष्पैरपीति । पुष्पैरपि कोर्थःपुष्पघातिभिः सहापि हीनस्वरोदयिना भटेन न योद्धव्यम् न युद्धं कुर्यात् ॥ किं पुनः शस्त्रपाणिना सह एतावता यावत्कालं हीनः स्वराणां समयस्तिष्ठति स्वरोदयबले प्राप्ते स्वनाममात्रादिस्वरबलं प्राप्य शस्त्रकोटिभिः शस्त्रधारिणः कोटिभिः सह योद्धव्यमिति ॥१७॥ अधुना यावत्कर्तव्योद्रेकमाह ॥ राज्ञाऽवश्यमेवैषां संग्रहः कर्तव्य इति तदाह ॥ स्वरज्ञ इति ॥१८॥ स्वरचक्राणीति ॥१९॥ यामलेष्विति ॥ २० ॥

मात्रा वर्णो ग्रहो जीवो राशिर्भं पिंडयोगकौ ॥ द्वादशाब्दोदयं चक्रं वर्षायनर्तुमासिकम् ॥२१॥ पक्षाहर्नाडिकं चक्रं तिथिवारर्क्षयोगकम्॥ तत्कालेंदुफलं काष्ठा स्वरं देहोद्भवं तथा ॥२२॥ इति स्वरचक्राणि ॥ पूर्वमुक्तेषु शास्त्रेषु मया ज्ञातानि यानि च ॥ चतुराशीतिचक्राणि तेषां नामानि वच्म्यहम् ॥ २३ ॥ एकादशीतिपदं चक्रं शतपत्रं नवांशकम् ॥ छत्रं सिंहासनं चक्रं कूर्मं पंचविधं त्विदम् ॥ २४ ॥ भूर्देशं नगरं क्षेत्रं गृहं कूर्मं च पंचमम् ॥ पद्मचक्रं फणीशाख्यं राहुकालानलं मतम् ॥ २५ ॥

मात्रावर्णेति ॥ २१ ॥ २२ ॥ इति स्वरोदये चक्रनामानि ॥ पूर्वमुक्तेष्विति ॥ २३ ॥ एकाशीतीति ॥ २४ ॥ भूर्देशमिति २५ ॥

सूर्यकालानलं चक्रं चंद्रकालानलं तथा ॥ घोरकालानलं चक्रं गूढ-कालानलं मतम् ॥२६॥ शशिसूर्यसमायोगे चक्रं कालानलम् मतम्॥ संघट्टं सप्तमं ज्ञेयं सप्तकालानलानि च ॥ २७ ॥ तिथिर्वारं च नक्षत्रं त्रिधा चैव कुलाकुलम् ॥ २८ ॥ कुंभचक्रं द्विधा प्रोक्तं राशिनक्षत्र-संभवम् ॥ प्रस्तारं चक्रवेधं च त्रिधा तुंबुरुमुत्तमम् ॥ भूचरं खेचरं पंथा नाडीचक्रं त्रिधा मतम् ॥ २९ ॥ कालचक्रं फणिद्वंद्वं सूर्याख्यं चंद्रजं तथा ॥ कविचक्रं द्विधा प्रोक्तं स्थानस्वाम्यर्क्षपूर्वकम् ॥३०॥

सूर्यकालानलमिति ॥ २६ ॥ शशिसूर्येति ॥ २७ ॥तिथिर्वारं चेति ॥ २८ ॥ प्रस्तारमिति ॥२९ ॥ कालचक्रमिति ॥ ३० ॥

खलकाख्यं द्विधा चैव कृत्तिकास्थानभादिकम् ॥ कोटचक्राष्टकं प्रोक्तं चतुरस्रादिभेदतः ॥ ३१ ॥ गजमश्वं रथं व्यूहं कुंतं खड्गं छुरिं धनुः ॥ सौरिं सेवानरं डिंभं पक्षिवर्गोपवर्षणम् ॥ ३२ ॥ सप्तरेखोद्भवं चक्रं पंचरेखेंदु भास्करम् ॥ त्रिविधं मातृकाचक्रं विज्ञेयं श्येनतोरणे ॥ ३३ ॥ अहिलांगलबीजोप्तिवृष्टयाख्यं सप्तनाडिकम् ॥ चक्रं सांवत्सरं स्थानचक्रं शृंगोन्नतिस्तथा ॥ ॥ ३४ ॥ एतानि सर्वचक्राणि ज्ञात्वा युद्धं समाचरेत् ॥ जयेदिह न संदेहः शक्रतुल्येऽपि वैरिणि ॥ ३५ ॥ इति चक्रनामानि ॥

खलकाख्यमिति ॥ ३१ ॥ गजमश्वमिति वीरचक्रं च वृष्टिकमित्यपि पाठः ॥ ३२ ॥ सप्तरेखोद्भवमिति ॥३३॥ अहिलांगलेति ॥३४॥ एतानीति ॥३५॥ इति चक्रनामानि ॥

अथातः संप्रवक्ष्यामि भूबलान्यभिधानतः ॥ कपिद्वंद्वे तथा दुर्गे चातुरंगे महाहवे ॥ ३६ ॥ स्वरोदयैश्च चक्रैश्च शत्रुर्यत्र समोऽधिकः॥ तत्र युद्धे बलं देयं भूबलैर्विजयार्थिनाम् ॥३७॥ तेषां नामान्यहं वक्ष्ये ख्यातानां ब्रह्मयामले ॥ चतुराशीतिसंख्यानां यद्बलेन जयी रणे॥३८॥ उड्डी जालंधरी पूर्णा कामा कौल्लेकवीरिका ॥ शिलींध्री च महामारी क्षेत्रपाली च वंशजा ॥ ३९ ॥ भद्रकाली नली काली कालरेखा निरामया ॥ जय लक्ष्मीर्महालक्ष्मीर्जयाविजयभैरवी ॥ ४० ॥

अथेति ॥ स्पष्टम् ॥३६॥ अथ भूबलानां प्रशंसामाह । स्वरोदयैश्चेति । नामजैमात्राद्यष्टभिः स्वरैर्द्वादशाब्दादिकालजैः स्वस्वरैः शत्रुर्यदि समस्तुल्योऽधिको वा भवति तत्र जयार्थिनां राज्ञां भूबलैर्बलं देयम् । स्वरबलतुल्येन शत्रुणा सह जयपराजयौ तुल्यावेव । स्वतः आत्मनः स्वरबलैरधिको यदि शत्रुस्तदा शत्रोरेव जयः । अत्र युद्धे यस्य राज्ञः शूरस्य जयार्थिता भवति । कथमसौ मया जेतव्य इति स्वरज्ञं पृच्छति । तत्र स्वरतो भूबलानि बलं दत्त्वा युद्धाय तं सज्जीकुर्यात् । जयजयेति ॥ ३७ ॥ तेषां भूबलानां नामान्याह ॥ तेषामिति ॥ ३८ ॥ उड्डीति ॥ ३९ ॥ भद्रकालीति ॥ ४० ॥

बाला योगेश्वरी चंडी माया भुंभुककर्तरी ॥ शार्दूली सिंहिली तन्वी महामाया महेश्वरी ॥४१॥ देवकोटिः शिवा शक्तिर्धूम्रा मालावराटिका ॥ त्रिमुण्डा वसरी धर्म्या मृता वृष्टा क्षयाक्षया ॥ ४२ ॥ दुर्मती प्रवरा गौरी काली नारहरी बला ॥ खेचरी भूचरी गुह्या द्वादशी वृष्टिकेवला ॥४३॥ त्रैलोक्यविजया सौरी कराली वडवापरा ॥ रौद्री च शिशुमातंगी चाभेद्यादहनी जिता ॥४४॥ बहुला वर्गभूमिश्च कपाली चानिलानला ॥ चंद्रार्कबिंबभूमिश्च ग्रहराशिविलग्नगा ॥ ४५ ॥

बाला योगेश्वरीति ॥ ४१ ॥ देवकोटीरीति ॥ ४२ ॥ दुर्मतीति ॥ ४३ ॥ त्रैलोक्येति ॥ ४४ ॥बहुलेति ॥ ४५ ॥

राहुकालानली भूमिः स्वरभूमिर्द्विधा मता ॥ रुद्रस्त्रिमासिकश्चैव राहुश्चाष्टविधस्तथा ॥४६॥ चंद्रः सप्तविधः सूर्यश्चतुर्धा योगिनी त्रिधा ॥ कालचक्रं त्रिभेदं च तिथिनक्षत्रवारजम् ॥ ४७ ॥ अमनि भूवलान्यत्र ज्ञात्वा यः प्रविशेद्रणे ॥ अरयस्तस्य नश्यंति मेघा वातहता यथा ॥ ४८ ॥ इति भूबलानि ॥ शत्रोः समाधिके नाम्नि स्वरैश्चक्रैश्च भूबलैः॥स्थानसैन्याधिके शत्रौ बलविज्ञानसंयुते ॥४९॥ अभंगे चाप्यभेदे च दुःसाध्ये दुर्जये रिपौ ॥ जयोपायमहं वक्ष्ये मंत्रयंत्रादिकं बलम् ॥ ५० ॥

राहुकालेति ॥४६॥ चंद्रः सप्तविधेति ॥४७॥ अमूनि भूबलानीति स्पष्टार्थः ॥ ४८ ॥ इति भूबलानि ॥ शत्रोः समाधिकेति ॥ ४९ ॥ अभंगे इति ॥ यथा शत्रुः सुजयो भवति तथा मंत्रयंत्रादिकैर्बलैर्जयोपायं वक्ष्ये ॥ ५० ॥

रणाभिषेचनं दीक्षां रणार्चा रणकंकणम् ॥ वीरपट्टं रणे पट्टं जयपट्टस्य बंधनम् ॥५१॥ मेखलाकवचन्यासं मुद्रारक्षा च कंचुकम् ॥ औषधं तिलकं तज्ज्ञा घुटिकाश्च कपर्दिका ॥ ५२ ॥ योगे घटितशस्त्राणि शस्त्ररक्षाप्य मोटनम् ॥ शस्त्रलेपाश्च विविधा बाणानां पिच्छबंधनम् ॥ ५३ ॥ त्रासकं काहला ढक्का मुरजं भस्मसाध-

नम् ॥ मारणं मोहनं स्तम्भं विद्विषोच्चाटनं वशम् ॥ ५४ ॥ पताका पिच्छकं यंत्रं परविद्याविनाशनमं ॥ शांतिकं निजसैन्यस्य सर्वोपद्रव-नाशनम् ॥५५॥

मंत्रयंत्रादीनां नामानि ॥ रणाभिषेचनमिति ॥ ५१ ॥ मेखलेति ॥ ५२ ॥ योगे घटितेति ॥ ५३ ॥ त्रासकमिति ॥ ५४ ॥ पताका इति ॥ ५५ ॥

बलान्येतानि यो ज्ञात्वा संग्रामं कुरुते नृपः ॥ असाध्यस्तस्य वै नास्ति शत्रुः कोपि महीतले ॥ ५६ ॥ इति मंत्रयंत्रौषधबलानि ॥ गणितं व्यवहारं च होराज्ञानं परिस्फुटम् ॥ त्रिस्कंधं ज्योतिषं वक्ष्ये जयचर्या स्वरोदये ॥ ५७ ॥ खेचरानयनं स्पष्टं पंचांगं तिथि-साधनम् ॥ उदयास्तमनं चक्र क्रांतिविक्षेपयोः कृतिः ॥ ५८ ॥ नतोन्नतप्रमाणं च भावसंधिप्रसाधनम् ॥ ग्रहाणां षड्बलं वक्ष्ये राशिभावफलान्वितम् ॥ ५९ ॥ राशिसंज्ञाप्रभेदं च खेचराणां तथैव च ॥ नृणां जन्मफलं वक्ष्ये ऋक्षराश्यंशलग्नजम् ॥ ६० ॥

बलान्येतानीति ॥ ५६ ॥ स्पष्टार्थः ॥ इति मंत्रयंत्रौषधबलानि ॥ अथ द्वितीयस्कंधे ज्योतिषांगमाह ॥ गणितमिति ॥ ५७ ॥ खेचरानयनमिति ॥ ५८ ॥ नतोन्नतेति ॥ ५९ ॥ राशिसंज्ञेति ॥ ६० ॥

फलं चंद्रार्कयोगानां ग्रहाणां स्वोच्चनीचकम् ॥ आयुर्दायं दशाश्चैव तासांकालप्रवेशजम् ॥ ६१ ॥ तस्माल्लग्नं ग्रहान्स्पष्टान्दशांतर्दशयोः फलम् ॥ ग्रहवर्गाष्टकं स्पष्टं तस्माद्दिनफलम् भवेत् ॥ ६२ ॥ ताजि-काज्जन्मलग्नस्य साधनं च प[रि]स्फुटम् ॥ वर्षमासदिवालग्नं तस्माद्दं-शास्ततः फलम्॥६३॥छायोत्पत्तिं त्रिधा वक्ष्ये विषुमध्यंदिनेष्टगाम् ॥ दिनमानं दिन भुक्तमुदये वा घटीषु च ॥ ६४ ॥ सिद्धच्छायात्रिषष्टिं च दुष्टभा सप्तविंशतिः ॥ लग्नोदयान् स्वदेशीयांस्तेभ्यो लग्नस्य-साधनम् ॥ ६५ ॥

फलं चंद्रार्कयोगानामिति ॥ ६१ ॥ तस्माल्लग्नमिति ॥ ६२ ॥ ताजिकादिति ॥ ६३ ॥ छायोत्पत्तिमिति ॥ ६४ ॥ सिद्धिच्छायेति ॥ ६५ ॥

लग्नमानं ततो होरा द्रेष्काणं सप्तमांशकम् ॥ नवांशद्वादशत्रिंश-दुदयास्तांशकानपि ॥ ६६ ॥ तिथेः प्रकरणं वक्ष्ये वारनक्षत्रयो-स्तथा ॥ योगाख्यं करणाख्यं च मुहूर्तं संक्रमोद्भवम् ॥ ६७ ॥ चंद्रताराबलं चैव पक्षभेदेन संयुतम् ॥ शुभाशुभांश्च योगांश्च ति-थिवारर्क्षयोगजान् ॥ ६८ ॥ सिद्धं संवर्तकं चैव तथा वारशुभा-शुभम् ॥ अवमं त्रिदिनं वक्ष्ये ततो योगं त्रिपुष्करम् ॥ ६९ ॥ यम-घंटं यमदंष्ट्रां क्रकचार्गलपातकान् ॥ कुमारं तरुणं वृद्धं शूलानि शूलयोगिनीम् ॥ ७० ॥

लग्नमानमिति ॥ ६६ ॥ तिथिप्रकरणमिति ॥ ६७ ॥ चंद्रताराबलमिति ६८ ॥ सिद्धं संवर्त्तकमिति ॥ ६९ ॥ यमघंटमिति ॥ ७० ॥

वारशूल तथा कालं कालवेलां परिस्फुटाम् ॥ कालहोरार्धयामं च कुलिकं कंटकद्वयम् ॥ ७१ ॥ फलं ग्रहणधिष्ण्यस्य वत्सभा-र्गवयोः फलम् ॥ दशां चांतर्दशां स्थूलां वक्रातिचारयोः फलम् ॥ ॥ ७२ ॥ पीडास्थानानि खेटानां ग्रहावस्थास्तथैव च ॥ भाव-फलं संधिफलं लत्तावेधमुपग्रहान् ॥ ७३ ॥ शीघ्रवक्रग्रहोद्देशं गोचरं गोचरव्यधम् ॥ विवाहं च प्रतिष्ठा च दीक्षायात्राप्रवेशनम् ॥ ७४ ॥ वास्तुदीपोच्चविन्यासं कालविंशोपकास्तथा ॥ जल-योगार्घकांडं च वर्षमासदिनार्घकृत् ॥ ७५ ॥

वारशूलमिति ॥ ७१ ॥ फलं ग्रहेति ॥ ७२ ॥ पीडास्थानेति ॥ ७३ ॥ शीघ्रवक्रेति ॥ ७४ ॥ वास्तुदीपोच्चेति ॥ ७५ ॥

तिथ्यादिपंचकं ग्राह्यं चंद्रतात्कालसंभवम् ॥ अवस्थानष्टमुष्टिं च मूकां चंद्राद्बदाम्यहम् ॥ ७६ ॥ अंगस्पंदानि सर्वाणि कालचि-ह्नानि यानि च ॥ दुष्टारिष्टान्यहं वक्ष्ये तथा सेषां च शांतिकम् ॥ ॥ ७७ ॥ ज्योतिरंगमिदं सर्वं ये जानंति मनीषिणः ॥ दीपव-त्तान्विजानीयान्मोहांधकारनाशने ॥ ७८ ॥ इति ज्योतिषम् ॥

पोतकी पिंगला काको यक्षः शिवा क्रमेण च ॥ पंचरत्नमिदं वक्ष्ये षष्ठांगे शाकुने मते ॥ ७९ ॥ ॥ इति शकुनम् ॥

इति श्रीनरपतिजयचर्यायां स्वरोदये षडंगे सप्ताध्यायेशास्त्रसंग्रहाध्यायः प्रथमः ॥ १ ॥

तिथ्यादिपंचकमिति ॥ ७६ ॥ अंगस्पंदानीति ॥ ७७ ॥ ज्योतिषांगमिति ॥ ७८ ॥ पोतकीति ॥ ७९ ॥ स्पष्टार्थः ॥

इति जयलक्ष्म्यां शास्त्रसंग्रहाध्यायः प्रथमः ॥ १ ॥

अथातः संप्रवक्ष्यामि प्रोक्ता ये ब्रह्मयामले ॥ मात्रादिभेदभिन्नानां स्वराणां षोडशोदयाः ॥ १ ॥ मात्रिकायां पुरा प्रोक्ताः स्वराः षोडशसंख्यया ॥ तेषां द्वावंतिमौ त्याज्यौ चत्वारश्च नपुंसकाः ॥ २ ॥ शेषा दश स्वरास्तेषु स्यादेकैको द्विके द्विके ॥ ज्ञेया अतः स्वराद्यास्ते स्वराः पंच स्वरोदये ॥ ३ ॥ लाभालाभे सुखं दुःखं जीवितं मरणं तथा ॥ जयः पराजयश्चेति सर्वं ज्ञेयं स्वरोदये ॥ ४ ॥

॥ मात्रास्वरचक्रम् ॥

| अ | इ | उ | ए | ओ |
|---|---|---|---|---|
| क | कि | कु | के | को |
| ख | खि | खु | खे | खो |
| ग | गि | गु | गे | गो |
| घ | घि | घु | घे | घो |
| ङ | ङी | ङु | ङे | ङो |
| वा. | कु. | यु. | वृ. | मृ. |
| उ. | भ्र. | भ्रा. | स्वं. | अ. |

स्वरादिमात्रिकोच्चारो मातृव्याप्तं जगत्त्रयम् ॥ तस्मात् स्वरोद्भवं सर्वं त्रैलोक्यं सचराचरम् ॥ ५ ॥

अथात इति । अथानंतरं शास्त्रसंग्रहाध्यायानंतरं मात्रादिभेदभिन्नानां स्वराणामुदयान् ब्रह्मयामले प्रोक्तान् प्रवक्ष्यामि । प्रकर्षेण कथयामीति संबंधः ॥ १ ॥ अथ स्वराणां षोडशोदयान्वक्तुं स्वरानादावाह । मात्रिकायामिति । पुरा सृष्ट्यादौ मात्रिकायां मात्राचक्रे ब्रह्मणा षोडशसंख्यया स्वराः प्रोक्ताः ते स्वराः अ आ इ ई उ ऊ ऋ ॠ ऌ ॡ ए ऐ ओ औ अं अः एतेषां मध्ये द्वावंतिमौ अं अः इति त्याज्यौ एषु चत्वारो नपुंसकाख्याः ते च ऋ ॠ ऌ ॡ इति शेषा दश स्वराः स्थिताः ते च अ आ इ ई उ ऊ ए ऐ ओ औ एते ये शेषा दश स्वरास्तेषु द्विद्विकेषु एकैकमेव गृह्णीयात् ते च अ आ इ उ ए ओ द्वितीयास्तत्फलेनैव तुल्याः । अथ तेषां दशानां द्विद्विस्थितानां द्वयोर्द्वयोः पूर्व एव गृहीतः तत्किमिति । अत्रोच्यते । अकार आद्यो वासुदेवः प्रधानत्वात् अकार एव गृहीतः । इकारस्तु श्रीः । सा वासुदेवस्य प्रिया अत इकारो गृहीतः । उकारो रुद्रः । एकारः सूर्यः । ओकारश्चंद्रः । अतः अकारानु-

रोषात् पंच ह्रस्वा एव गृहीताः यतस्त एव शुभाशुभं प्रकटीकुर्वंति । आकारेण यत्फल आकारेणापि तदेव फलम् ॥ अस्तदोषादकारश्चेत्पीडितः आकारस्यापि स एव दोषः । एव मिकारादावपि बोद्धव्यम् ॥ २ ॥ ज्ञेया अतः स्वरा इति ॥३॥ अथैषां ग्रहणसिद्धिं प्रकटयति लाभालाभे सुखं दुःखमिति । एषां स्वराणामुदये लाभप्रश्ने लाभं विजानीयात् । तथा अला भमपि । सुखप्रश्ने सुखं दुःखमपि । रोगिघातादीनां जीवितमरणप्रश्ने जीवितं मरण च विद्यात् एवं सर्वप्रश्ने स्वरा एव फलप्रकाशकाः ॥ ४ ॥ स्वराणां सर्वत्र प्रधानतामाह । स्वरादिमात्रिका इति । सर्वेषां चराचराणां उच्चारो नाम ग्रहणम् आकारादिमात्रिकाभिरेवेति । न ह्यकारादि मात्रिकां विना वर्णा उच्चारयितुं शक्याः । अतो मातृकाभिर्जगत्रयं व्याप्तम् अत एव प्रश्ने स्वरा एव फलप्रकाशकाः ॥ ५ ॥

**अकाराद्याः स्वराः पंच ब्रह्माद्याः पंचदेवताः ॥ निवृत्त्याद्याः कलाः पंच इच्छाद्यं शक्तिपंचकम् ॥६॥ मायाद्याश्चक्रभेदाश्च धराद्यं भूतपंचकम् ॥ शब्दादिविषयास्ते च कामबाणा इतीरिताः ॥७॥ पिंड पदं तथा रूपं रूपातीतं निरंजनम् ॥ स्वरभेदस्थितं ज्ञानं ज्ञायते गुरुतः सदा ॥८॥ अकाराद्याः स्वराः पंच तेषामष्टा भिदस्त्वमी ॥ मात्रा वर्णो ग्रहो जीवो राशिर्भं पिंडयोगकौ ॥९॥ प्रसुप्तो भाषते येन येनागच्छति शब्दितः॥ तत्र नामाद्यवर्ण या मात्रा मात्रास्वरः स हि॥१०॥इतिमात्रास्वरचक्रम्॥**

अथ पुनः स्वराणामेव प्रधानतां प्रकटयति । अकाराद्या इति । अ इ उ ए ओ एते पंच स्वराः ब्रह्मादयो देवाः । तत्र अकारो ब्रह्मा । इकारो विष्णुः । उकारो रुद्रः । एकारः सूर्यः । ओकारश्चंद्रमा भूमिश्च । अन्योर्थः । प्रयोजनकर्त्रा अकारस्वरोदये ब्रह्माणं ध्यात्वा कर्म कार्यम् । इकारोदये विष्णुं ध्यायेत् । उकारोदये रुद्रम् । एकारे सूर्यम् । ओकारोदये चंद्रम् । एवं तत्तदुदये निवृत्त्याद्याः पंच कलाः अकारोदये निवृत्तिनामकला । इकारे प्रतिष्ठानामकला । उकारे विद्याप्रतिष्ठिता । शांतिरेकारे स्थिता । ओकारे अतिशांतिः । निवृत्तिशब्देन यात्रानिवृत्तिः । अकारोदये यदि प्रश्नः अकारश्चेदनस्तमितस्तदा निवर्तनं वदेत् । इकारोदये प्रतिष्ठा भवति । उकारोदये प्रश्ने रुद्रं ध्यात्वा विद्या वाच्या । एकारोदये सूर्यं ध्यात्वा शांतिप्रश्ने शुभं वदेत् । ओकारे चंद्रं ध्यात्वा अतिशांतिर्वाच्या । अतिशांतिमुक्तिः । मुक्तिप्रश्ने मुक्तिर्वाच्या । इच्छाद्यं शक्तिपंचकम् । आकारादिपंचसु क्रमेण इच्छा ज्ञानं प्रभा श्रद्धा मेधा इदं शक्तिपंचकं स्थितम् । तत्र उदये तदाश्रितस्योदयो ज्ञातव्यः ॥६॥ ७ ॥ अथान्यत् । "मायाद्याश्चक्रभेदाश्च धराद्यं भूतपंचकम्।गंधादिविषयास्ते च कामबाणा इतीरिताः"।अकाराद्याः

पञ्च स्वरा मायाद्याश्चक्रभेदाः । चतुरस्रं यच्चक्रं तन्मायाख्यभेदम् । तत्राकारोदये यस्य चतुरस्रं चक्रं ग्राह्यं पूजनीयं वा तदाकारोदये चक्रं तत्र पूजयेत् । इकारेऽर्द्धचक्रम् । उकारे त्रिकोणं चक्रम् । एकारे षट्त्रिकोणम् । ओकारे वर्तुलं चक्रम् । अकारादिषु धरादिभूतपंचकम् । पृथिव्यादिपञ्चकम् । अकारोदये पृथिवीगतप्रश्नः । इकारोदये जलगतप्रश्नः उकारोदयेऽनलगतप्रश्नः । एकारोदये वायुगतप्रश्नः । ओकारोदये आकाशविषयप्रश्नः । ऊर्ध्वगते प्रश्नं वदेत् । तेपि स्वरा गंधादिविषयाः । तत्राकारो गंधविषयः । इकारो रसविषयः । उकारो रूपविषयः । एकारः स्पर्शविषयः ओकारः शब्दविषयः । एतावता अकारादिस्वरोदये तत्तदुक्तप्रश्नविषये तत्र शुभाशुभं वदेत् । अयमर्थः गुरूपदेशादेव ज्ञायते।अस्यार्थस्य प्रयोजनं किमपि न व्याख्यातम् । अस्मादधिकतरोर्थः सद्गुरूपासनया बुध्यते इष्टदेवताप्रसादाद्वा । तथा च वक्ष्यति । " पिंडं पदं तथा रूपं रूपातीतं निरञ्जनम् ॥ स्वरभेदस्थितं ज्ञानं ज्ञायते गुरुतः सदा " अत्र वाङ्मात्रं प्रकटम् । न तु परमार्थतस्ते गुरवः ये पिंडं पदं तथा रूपमित्यादि प्रत्यक्षीत्य दर्शयंति ॥ यथायं गौः अयमश्व इति । एतेन किमुक्तं भवति । स्वराभ्यासी सदा भूयात् ॥८॥ अथाकारादिस्वराणां मुख्यप्रयोजनमुपदिशति । अकाराद्या इति । अकारादिपञ्चस्वराणां मात्रादयोष्टौ भेदाः पृथक्पृथक् पंचसु भवंति ॥ ९ ॥ तत्राष्टौ भेदान् वक्तुं मूलमुपदिशति । प्रसुप्तो भाषत इति । येन नाम्ना मर्त्यः प्रसुप्तो भाषते न वा शब्दित आगच्छति तत्र नाम्नि आद्यवर्णे या मात्रा स मात्रास्वरः । यथा देवदत्तनाम्नि आद्यवर्णो दकारस्तत्र एकारमात्रा विद्यते अतो देवदत्तस्य मात्रास्वरः एकार एव । पुनर्यथा यज्ञदत्तस्य नाम्नि यकार आद्यवर्णस्तत्रांतर्भूतः अकारो विद्यते ततो यज्ञदत्तस्य मात्रास्वरोऽकारः । एवं सर्वेषां नाम्नि एवं कृष्णादिनाम्नां मनुजानां मात्रास्वरग्रहणे प्रांचशिष्टानां भाषया इस्वरो ग्राह्य इत्यर्थः । एवं हृषीकेशादिनाम्नि । अथ च महाभाष्ये ऋकारे इकारभागः प्रदर्शितः । अतो ऋकारस्य मात्रास्वर इकारोपि ॥ १० ॥ इति मात्रास्वरचक्रम् ॥

कादिहान्ताँल्लिखेद्वर्णान् स्वराधो ङञणोज्झितान्॥ तिर्यक्पंक्तिक्रमेणैव पंचत्रिंशत्प्रकोष्ठके ॥ ११ ॥ नरनामादिमो वर्णो यस्मात्स्वरादधः स्थितः ॥ स स्वरस्तस्य वर्णस्य वर्णस्वर इहोच्यते ॥ १२ ॥ न प्रोक्ता ङञणा वर्णा नामादौ संति ते नहि ॥ चेद्भवंति तदा

| अ | इ | उ | ए | ओ |
|---|---|---|---|---|
| क | ख | ग | घ | च |
| छ | ज | झ | ट | ठ |
| ड | ढ | त | थ | द |
| ध | न | प | फ | ब |
| भ | म | य | र | ल |
| व | श | ष | स | ह |
| बा | ङु | यु | बृ | मृं |

ज्ञेया गजडास्ते यथाक्रमम् ॥ १३ ॥ यदि नाम्नि भवेद्वर्ण- संयुक्ताक्षर-लक्षणः ॥ ग्राह्यस्तदादिमो वर्ण इत्युक्तं ब्रह्मयामले ॥ १४ ॥ इति वर्णस्वरचक्रम् ॥ मृतस्वराद्बली बालो बालाद्वृद्धस्वरो बली ॥ वृद्धात्कुमारो बलवान् कुमारात्तरुणो बली ॥ १५ ॥

अथ वर्णस्वरमाह । कादिहांतानिति । स्वरादधः अ इ उ ए ओ स्वराणामधः हाकारांतान् ककारादारभ्य हकारपर्यंतान् वर्णान् विलिखेत् किंविशिष्टान् कादिवर्णान् ङञणवर्णपरित्यक्तान् कवर्गचवर्गटवर्गाणां पंचमवर्णा ङञणास्ताम् परित्यज्य लिखेत् । तिर्यक्पंक्तिक्रमेण लिखेत् पंचत्रिंशत्प्रकोष्ठके पंचाधिकत्रिंशत्प्रकोष्ठं कृत्वा यथा चक्रम् ॥ १२ ॥ नरनामादिमो वर्ण इति । अत्रोदाहरणे देवदत्तस्य नाम्नि आद्यवर्णो दकारः स दकार ओकारस्वराधो लिखितोऽस्ति अतो देवदत्तस्य वर्णस्वर ओकार यज्ञदत्तस्य नाम्नि यवर्गीयो यकारः सतु उकारस्वराधो लिखितस्तिष्ठति । एवं यज्ञदत्तस्य वर्णस्वर उकारः ॥ १२ ॥ न प्रोक्ता इति ॥ चेद्भवंतीति । यत्र कुत्रचिद्देशे विषये ङञणा वर्णा भवंति तदा तत्तत्फलपरिपाकः गजडानां फलेन समः ॥ १३ ॥ अथान्यविधिमाह । यदि नाम्नीति । यस्य कस्यचिन्नाम्नि आदिमो वर्णः संयुक्तो भवति । तदा तयोर्वर्णस्वरः को ग्राह्य इत्याकांक्षयाह । ग्राह्यस्तस्यादिमो वर्णस्तद्वशाद्वर्णस्वरः । यथा श्रीपतिरिति कस्यचिन्नाम तत्र शकारोपरि यो वर्णः रेफस्तस्यादिमः शकार इकारादधस्तिष्ठति तद्वशाच्छ्रीपतेर्वर्णस्वर इकारः । एवंसर्वत्र विचारः । अथ यस्य कस्यचिन्नामानि बहूनि भवंति तत्र मात्रास्वरः कस्य नाम्नः प्रमाणेन ग्राह्य इत्याकांक्षया स्वरज्ञा एवं वदंति । लंपटाचार्यभाषिते—" बहूनि यस्य नामानि नरस्य स्युः कथंचन । ततः पश्चाद्भवं नाम ग्राह्यं स्वरविशारदः " सुगममन्यस्य । अथान्यवर्णस्वरं प्रति उचुः " ववौ शसौ षखौ चैव यजा विति परस्परम् । उभौ तुल्यफलौ भिन्नस्वरस्याधः स्थितावपि " । तेन किं जयपराजयादिविषये जयपराजयौ तुल्यौ भवतः । अथ ग्रहवर्णस्वरनिर्णये लंपटाचार्यः । " यदा स्वरादिकं नाम तदा ग्राह्यं पुरोऽक्षरम् । देशे ग्रामे पुरे हर्म्ये नरे नामादिवर्णतः । वर्णस्वरोद्भवं तेषां फलं सम्यक् प्रतिष्ठितम् । स्वरस्य मात्रासंसोक्ता न वर्णत्वं तु यामले ॥ १४ ॥ इति वर्णस्वरचक्रम् मृतस्वराद्बली बाल इति ॥ १५ ॥

शाक्रपुष्यौ तथा हस्तश्चित्रायां द्वादशाङ्किकः ॥ इंद्रभं च गजाः सप्त रुद्रा वर्षे च मानकम् ॥ १६ ॥ सार्पपूर्ण तथाश्लेषा गजबाणायने बलाः ॥ वह्निषड्बाणवह्निश्च नेत्रे ऋतुपलानि च ॥ १७ ॥ गजा रूपं गजा धर्म मासे मानं प्रकीर्तितम् ॥ नवपूर्ण नववेदाः पक्षभागप्रमाणकम् ॥ १८ ॥ ऋक्षवह्नि भवेन्मानं दिनमानक्रमेण च ॥ भवह्नी घटिकामाने त्वंतरोदयगे स्वरे ॥ १९ ॥

अस्वरो मेषसिंहाली इः कन्यायुग्मकर्कटे ॥ उस्वरे तु धनुर्मीना-
वेस्वरे तु तुलावृषौ ॥ २० ॥

द्वादशवार्षिकादिमात्रांतानामंतरभोगपलान्याह ।शाक्रपुष्येति ॥१६॥ सार्पपूर्णमिति ॥१७॥ गजरूपमिति ॥ १८ ॥ ऋक्षवह्नीति । द्वादशवार्षिकांतरोदयप्रमाणपलानि १४ १३ ८१८ वार्षिकांतरोदयप्रमाणपलानि ११७ ८१८ अयनांतरोदयप्रमाणपलानि ५८९०९ ऋत्वंतरोदयप्रमाणपलानि २३५६३ मासांतरोदयप्रमाणपलानि ९८१८ पक्षांतरोदयप्रमाणपलानि ४९०९ दिवांतरोदयप्रमाणपलानि ३२७ घट्यंतरोदयप्रमाणपलानि ३० इति ॥ १९ ॥ अथातो ग्रहस्वरमाचष्टे ॥ अस्वरे मेषेति ॥ २० ॥

॥ ग्रहस्वरचक्रम् ॥

| अ | इ | उ | ए | ओ |
|---|---|---|---|---|
| मे | क | ध | तु | म |
| सिं | मि | मी | वृ | कुं |
| वृ | क | ० | ० | ० |
| मं | बु | गु | शु | श |
| र | चं | ० | ० | ० |
| बा | कु | गु | बृ | मृ |
| उ | भ्र | भ्रां | सं | अ |

ओस्वरे मृगकुंभौ च राशीशाश्च गृहस्वराः ॥ स्वराधः स्थापयेत्खेटान् राशेर्यो यस्य नायकः ॥२१॥ भौमशुक्रज्ञचंद्रार्कबुधशुक्रारमंत्रिणः ॥ सौरिसौरी तथा जीवो मेषादीनामधीश्वराः ॥ २२ ॥ इति ग्रहस्वरचक्रम् ॥

ओस्वरेति । स्वराधः स्थापयेदिति ॥ २१ ॥ अस्वरो मेषसिंहालीति कोर्थः॥ मेषसिंहालिरूपः एव मेषसिंहवृश्चिकराशीनां रूपधरः । एवमिकारादयोपि स्वरा राशिरूपधराः तत्र यः स्वरो यद्राशिरूपस्तस्य तस्य राशेर्योऽधिपतिः स स्वराश्यधिपः । यथा अः स्वरो मेषसिंहालिरूपः । तत्र मेषवृश्चिकयोर्भौमः स्वामी । सिंहस्य सूर्यः । भौमसूर्यौ अस्वरस्वामिनौ । एवं कन्यामिथुनयोः स्वामी बुधः कर्कस्य चंद्रः । तेन बुधचंद्रौ इकारस्वामिनौ ॥ धनुर्मीनस्वामी गुरुः तेन गुरुरुकाराधिपतिःशुक्रःवृषतुलाधिपतिःसत्वेकारस्वामी । मकर कुंभयोरधिपः शनिशनिरोकारस्वरस्वामी । अथोदाहरणम् । देदोचाचीचतुष्टयं रेवतीनक्षत्रस्य चरणाः । देकार वर्णे च रेवतीनक्षत्रं रेवतीनक्षत्रेंण मीनराशिः । उकारः मीनराशिप्रतिमः मीनस्वामी गुरुरुकार स्वामी । अतो देवदत्तस्य ग्रहस्वर उकारः । तथा यज्ञदत्तस्य नोयायीयूवर्णचतुष्टयं ज्येष्ठाचतुश्चरणाः तत्र यकारेण यज्ञदत्तस्य ज्येष्ठानक्षत्रम् । ज्येष्ठानक्षत्रेण वृश्चिकराशिः । अस्वरो वृश्चिकरूपः वृश्चिकस्वामी भौमःतेन यज्ञदत्तस्य ग्रहस्वरोकारः ॥ २२ ॥ इति ग्रहस्वेरचक्रम् ॥

षोडशाक्षरवर्गःस्यात्कादिवर्गास्तु पंचकाः॥ चतुर्वर्णौ यशौ वर्गा संख्यावर्गेषु कीर्तिताः ॥ १ ॥ अवर्गाद्यष्टवर्गाणां वर्णसंख्यास्तु नामतः ॥ नाम्नि वर्णस्वरा ग्राह्या वर्णानां वर्णसंख्यया ॥ पिंडिताः पंचभिर्भक्ताः शेषं जीवस्वरं विदुः ॥ २ ॥ इति जीवस्वरचक्रम् ॥

षोडशाक्षरेति ॥ १ ॥ अवर्गाद्यष्टवर्गाणामिति । देवदत्तनामतः उदाहरणम्। दकारस्य त्रिसंख्या दकारोपरि एकारस्यैकादश । वकारांतर्भूताकारस्यैका संख्या १ वकारस्य चतुष्टयसंख्या ४ दकारांतर्भूताकारस्यैकसंख्या १ दकारस्य त्रिसंख्या ३ संयोगितकारद्वयस्य द्विसंख्या २ अकारस्यापि एकसंख्या १ एवं षाड्विंशतिः ॥२६॥ पंचभक्ते शेषमेकम् १तेनदेवदत्तस्य जीवस्वरः अकारः ॥२॥ इतिजीवस्वरचक्रम् ॥

॥ जीवस्वरचक्रम् ॥

| अ | इ | उ | ए | ओ |
|---|---|---|---|---|
| अ १ | आ २ | इ ३ | ई ४ | उ ५ |
| ऊ ६ | ऋ ७ | ॠ ८ | ९ | ॡ १० |
| ए ११ | ऐ १२ | ओ १३ | औ १४ | अं अः १५।१६ |
| क | ख | ग | घ | ङ ५ |
| च | छ | ज | झ | ञ ५ |
| ट | ठ | ड | ढ | ण ५ |
| त | थ | द | ध | न ५ |
| प | फ | ब | भ | म ५ |
| य | र | ल | व | ४ |
| श | ष | स | ह | ४ |
| वा | कु | शु | वृ | मृ |

मेषवृषावकारे च मिथुनाद्याः षडंशकाः॥ मिथुनांशत्रयं चैवमिकारे सिंहकर्कटौ ॥१॥ कन्यातुला उकारे च वृश्चिकाद्यास्त्रयोंशकाः ॥ एकारे वृश्चिकांत्यांशाश्चापः षट् च मृगादिमाः ॥२॥ अंशास्त्रयो मृगस्यांत्याः कुंभमीनौ तथौस्वरे॥ एवं राशिस्वरः प्रोक्तो नवांशकक्रमोदयः ॥३॥ इति राशिस्वरचक्रम् ॥

॥ राशिस्वरचक्रम् ॥

| मे ९ | मि ३ | क ९ | वृ ६ | म ३ |
|---|---|---|---|---|
| वृ ९ | क ९ | तु ९ | ध ९ | कुं ९ |
| मि ९ | सिं ९ | वृ ३ | म ६ | मी ९ |
| अंश | अंश | अंश | अंश | अंश |
| वा | कु | शु | वृ | मृ |

अथ राशिस्वरचक्रम् ॥ मेषवृषौ इति मेषनवांशाः ९ वृषनवांशाः ९ मि. ६ एवं २४ मिथुनांशत्रयमिति । मिथुनांशत्रयं ३ कर्क ९ सिंह ९ एवम् २१ ॥ १ ॥ कन्यातुलेति ॥ कन्यायाः ९ तुलाया ९ वृश्चिकस्य अंशाः ३ एवं २१ एकारे इति एकारे वृश्चिकस्यांत्यांशाः षट् ६ धनस्य नव ९ मकरादिमाः षट् ६ एवम् २१ ॥ २ ॥ अंशास्त्रय इति ॥ मृगस्य त्रयोंत्यांशाः ३ कुम्भमीनयोरष्टादश १८ एवम् २१ अथ नक्षत्रचरणेनोदाहरणम् ॥ अश्विन्यार्द्रांतषण्णक्षत्रपादानामस्वरः स्वामी ॥ पुनर्वस्वादिपंचनक्षत्राणामुत्तराफाल्गुन्येकचरणसहित-

चरणानामिः स्वरः स्वामी उत्तराफाल्गुनीचरणत्रय हितहस्तादिनक्षत्रचतुष्टयानुराधाचरणद्वयस-हितपादानामुस्वरः स्वामी । अनुराधाचरणद्वयज्येष्ठ दिनक्षत्रचतुष्टयश्रवणत्रयसहितैकविंशतिचर-णानामेकारस्वरः स्वामी । श्रवणचरणैकधनिष्ठादिरेवत्यंतचरणकविंशतिचरणानामोस्वरः स्वामी । अथोदाहरणम् ॥ देवदत्तस्य रेवतीचरणेन ओकारो राशिस्वरः ॥ २५॥इति राशिस्वरचक्रम् ॥

अकारे सप्त ऋक्षाणि रेवत्यादि-क्रमेण च ॥ पंच पंच रकारादावेवम-क्षस्वरोदयः ॥ १ ॥ इति नक्षत्र-स्वरचक्रम् ॥

अकारे सप्त ऋक्षाणीति ॥ रेवती अश्विनी भरणी कृतिका रोहिणी मृगशिर आर्द्रांतानां सप्तानामकारः स्वामी । पुनर्वस्वादि पुष्य आश्लेषा मघा पूर्वा फाल्गुनी पंचनक्षत्राणामिकारः स्वामी । उत्तराफाल्गुनीहस्तचित्रा स्वाती विशाखा पंचनक्षत्राणामेषामुकारः स्वामी । अनुराधादि ज्येष्ठामूलपूर्वाषाढोत्तराषाढा पंचनक्षत्राणामेकारस्वरः स्वामी । श्रवणाद्युत्तराभाद्रपदांतानां पंचानामोकारः स्वामी । अत्रोदाहरणम् । देवदत्तस्य रेवतीनक्षत्रेण नक्षत्रस्वरोकारस्वरः ॥१॥ इति नक्षत्रस्वरचक्रम् ॥ १ ॥

॥ नक्षत्रस्वरचक्रम् ॥

| अ | इ | उ | ए | ओ |
|---|---|---|---|---|
| रे | पु | उ | अ | ध |
| अ | पु | ह | ज्ये | श |
| भ | श्ले | चि | मू | श |
| कृ. रो. | म | स्वा | पू | पू |
| मृ. आ. | पू | वि | उ | उ |

नाम्नि वर्णस्वरात्संख्या संख्या मात्रास्वरा तथा ॥ पिंडे शरहृते शेषे पिंडस्वर इहो-च्यते ॥ १ ॥ इति पिंडस्वरचक्रम् ॥

नाम्नि वर्णेति । अत्रोदाहरणम् । देवदत्तस्य नाम्नि दकारस्य वर्णस्वरः ओकारस्तस्य संख्या ५ वर्णस्वरेऽकारस्तस्य संख्या १ तस्यैव पुनः पंचसंख्या ५ तकारस्य वर्णस्वर उकारस्तस्य संख्या त्रीणि ३ द्वितीयतकारस्य त्रीणि ३ मात्रास्वर एकारस्तस्य २६ देवदत्त अकारास्त्रयः ३ त्रिसंख्या एकमेकत्र संख्या पिंडिता चतुर्विंशति अस्माच्छरहृते शेषेसति शेषं चत्वारि तेनात्र पिंडस्वर एकारः ॥ १ ॥ इति पिंडस्वरचक्रम् ॥ १ ॥

॥ पिण्डस्वरचक्रम् ॥

| अ | इ | उ | ए | ओ |
|---|---|---|---|---|
| दे | व | द | त्त | ० |
| ५ | १ | ५ | ३ | वर्ण |
| ४ | १ | १ | १ | पाश |
| वा | कु | गु | वृ | मू |

**मात्रादिस्वरभेदेन स्वरानुत्पाद्य नामतः ॥**
**योगे शरहृते शेषे योगस्वर इहोच्यते ॥१॥**
**इति योगस्वरचक्रम् ॥**

**॥ योगस्वरचक्रम् ॥**

| अ | इ | उ. | ए. | औ |
|---|---|---|---|---|
| दे | व | द | त्त | ० |
| मा ४ | व ५ | ग्रा ३ | ग्रां ५ | श ५ |
| न १ | पिं १ | यां | ग | स्वर ५ |
| बा. | कु. | यु. | वृ | मृ. |

मात्रादिस्वरभेदेति ॥ अथोदाहरणम् ॥ देवदत्तस्य नामजा मात्रादयः स्वराः । मात्रास्वरः एकारस्तस्य संख्या ४ वर्णस्वर ओकारस्तस्य संख्या पंच ५ ग्रहस्वर उकारस्तस्य संख्या त्रयः ३ जीवस्वरोऽकारस्तस्य संख्यैका १ राशिस्वर ओकारस्तस्य संख्या पंच भस्वरोऽकारस्तस्य संख्यैका १ पिंडस्वर एकारस्तस्य संख्या चतुष्टयम् ४ एवं देवदत्तस्य नामजा मात्रादिपिंडांतस्वराणां संख्यायोगे जातास्त्रयोविंशतिः २३ अस्माद्राशेः शरः ५ शेषेसति शेषं त्रयम् ३ अतो देवदत्तस्य योगस्वर उकारः संपन्नः । इत्येवं नामतो नैसर्गिकान्यष्टौ मात्रादिस्वरचक्राणि समाप्तानि ॥ १ ॥

इति श्रीहरिवंशमहादेवविरचितायां नरपतिजयचर्यास्वरोदये जयलक्ष्मीटीकायां मात्रादिस्वरचक्राध्यायो द्वितीयः ॥ २ ॥

---

**प्रोक्ता नैसर्गिका ह्यष्टौ मात्राद्यानामजाः स्वराः ॥ एतेषामुदयान्वक्ष्ये द्वादशाब्दादिकालजान् ॥ १ ॥ प्रभवादिक्रमेणैषां मकारादिस्वरास्तथा ॥ उदयो द्वादशाब्दानां प्रत्येकं द्वादशाब्दिकः ॥ २ ॥ अस्यांतरोदयो वर्षमेको मासो दिनद्वयम् ॥ लोकाब्धिनाडिकाः प्रोक्ता अष्टत्रिंशत्पलानि च ॥ ३ ॥ इति द्वादशवार्षिकचक्रम् ॥**

**॥ द्वादशवार्षिकचक्रम् ॥**

| अ | इ | उ | ए | ओ |
|---|---|---|---|---|
| प्र. १२ | १२ | १२ | १२ | १२ |
| वर्ष १ | व. १ | व. १ | व. १ | व. १ |
| मा. १ | मा. १ | मा. १ | मा. १ | मा. १ |
| दि. २ | दि. २ | दि. २ | दि. २ | दि. २ |
| घ. ४३ | घ. ४३ | घ. ४३ | घ. ४३ | घ. ४३ |
| प. ३८ | प. ३८ | प. ३८ | प. ३८ | प. ३८ |
| बा | कु | यु | वृ. | मृ |

अथ एभिर्नामजस्वरैर्देवदत्तस्य द्वादशवार्षिकसमयादारभ्य नाड्यंतसमयावधौ दिनफलचर्यामाह प्रोक्ता नैसर्गिकेति ॥ नामजाः स्वराः मात्राद्या अष्टौ नैसर्गिकाः प्रोक्ताः अतो नामत उत्पद्यंते अतो नैसर्गिकाः ॥ १ ॥ अत एव सर्वेषां पृथक् पृथक् प्रयोजनं द्वादशाब्दादिषु समयेषु द्वादशवर्षायनर्तुमासपक्षदिननाड्यंतेषु अष्टधा कालेषु तत्कारणमाह । प्रभवादिरिति । प्रभवादिक्रमेण प्रभवविभवाख्यशुक्लादिबार्हस्पत्यानां षष्ट्यब्दानां द्वादशद्वादशाब्दकैः प्रत्येकम् अकारादयः पंच स्वरा उदयंति । एतदुक्तं भवति । प्रभवादिद्वादशवर्षाणामकारः स्वामी ।

असावेव उदयः। ततः प्रमाथिनामा संवत्सरस्तदारभ्य द्वादशसंवत्सरैः इकार उदयति तेन किं तावदिकारस्वरोधिपतिः। खरनंदादिद्वादशसंवत्सरैरुकारस्वर उदयति तावदुकारो राजा। ततः शोभनसंवत्सरप्रभृतिद्वादशसंवत्सरैरेकारस्वर उदयति तेन किं तावदेकारस्वरो राजा। अथ राक्षससंवत्सरादिद्वादशसंवत्सरैरोकास्वर उदयति तेन किं तावदोकार एव राजा। अत्रोदाहरणम्। संवत् १५७२ समये शाके १४३७ एतावद्वे प्रभवादयो गताब्दाःतेषामानयनं रत्नमालासंहितासु प्रोक्तम्। तथाच "शकेन्द्रकालाः पृथगाकृति २२ घ्नः शशांकनंदाश्वियुगैः ४२९१ समेतः॥ शराद्रिवस्विंदु १८७५ हृतः स लब्धः षष्ट्यावशेषे प्रभवादयोऽब्दाः"। अनेन गणितविधिना प्रभवादयः प्राप्ताः वर्ष १९ मास १ दिन २५ घटी ५ पल ३० एतावत्संवत्सराः शाके १४३७ समये चैत्रशुक्लप्रतिपदि प्राप्ताः। एषां द्वादशवर्ष १६।१। २३।४५।३६ पर्यंतमकारोधिपतिरासीत् सांप्रतं प्रमाथिनामसंवत्सरमारभ्य द्वादशसंवत्सरावधिः इकारस्वर ईश्वरो वर्तते एतेन किं देवदत्तनामोदाहरणे नामतः पिंडस्वराख्य उकार उदितोस्ति तदुदयबलात्पिंडस्वरोदयोक्तकर्मसिद्धिं यास्यति। अथ वर्तमानप्रमाथिनामादिद्वादशवर्षदशासु इकारात्प्रभृति अन्तर्दशास्वराणां भुक्तभोग्यस्वरांतर्दशाकालप्रमाणमाह। अस्यांतरोदयेति। वर्ष १ मास १ दिन २ घटी ४३ पल ३८ एतैर्वर्षादिभिः द्वादशसु उदयस्वरान् अन्तर्दशास्वरावार्षिकचक्रम्। अथ प्रभवादीनां संवत्सराणां प्रत्येकमन्तर्दशासु भोगः। तावदीश्वरः अन्तर्दशाविभागकरणं दिनचर्यायां लेख्यम्॥ २॥ ३॥ इति द्वादशवार्षिकचक्रम्॥

**प्रभवाद्यब्दमेकैकमुदयस्त्वस्वरादिकः॥ द्वादशाब्दस्य वर्षोना तद्भुक्तिर्वार्षिके स्वरे॥ १॥**

**इति वार्षिकस्वरचक्रम्॥**

॥वार्षिकस्वरचक्रम्॥

| अ | इ | उ | ए | ओ |
|---|---|---|---|---|
| प्र | वि | शु | प्र | प्र |
| मा १ | मा १ | मा १ | मा १ | मा १ |

अथ प्रभवादीनां संवत्सराणां प्रत्येकमस्वराधिपतीनाह। प्रभवाद्यब्दमेकैकेति। आकारादिकाः पञ्चस्वराः प्रभवाद्यब्दमेकैकं प्रतिउदयो भवति। कोर्थः प्रभवादीनां प्रत्येकम् अस्वरादिकः स्वामी भवति। तथा उदाहरणम्। प्रभवे वर्तमाने अकारस्य उदयः। विभवे वर्तमाने इकारस्योदयः। शुक्लनाम्नि वर्तमाने उकारस्योदयः। प्रमोदनाम्नि वर्तमाने एकारस्योदयः। प्रजापतिनाम्नि वर्तमाने ओकारस्वरोदयः। एवं षष्ट्यब्देषु प्रवर्तमानेषु अकारादयः पञ्चस्वरा द्वादशधा उदयंति। तत्र अकाराद्यैकस्वरोदये एकादशस्वराणामुदयः स्यात्। एतदुक्तं भवति। प्रभवाद्येकैकवर्षदशासु प्रभवादिपतिः स्वरांतैकादशस्वराणामंतर्दशा स्यात् स एवोदयः। अथांतर्दशोदयकालमाह द्वादशाब्दस्येति। द्वादशाब्ददशास्वराणां भुक्तिवर्षमेकं मासमेकमित्यादि॥ १॥

अस्वरो दक्षिणे स्वामी इस्वरश्चोत्त-
रायणे ॥ वर्षभुक्त्यर्धमानेन भोगः
षाण्मासिके स्वरे ॥ १ ॥ इति
अयनस्वरचक्रम् ॥

॥ अयनस्वरचक्रम् ॥

| अ | इ | उ | ए | ओ |
|---|---|---|---|---|
| दि १६ | दि १६ | दि १६ | दि १६ | दि १६ |
| घ २१ | घ २१ | घ २१ | घ २१ | घ २१ |
| प ४९ | प ४९ | प ४९ | प ४९ | प ४९ |

तत्र वर्षोना भुक्तिः । मासमेकं दिनद्वयम् । लोका-
ब्धिनाडिका अष्टत्रिंशत्पलानि चेति । मास १ । २ ।
४३ । ३८ । एषां प्रभवाद्यंतर्दशास्वराणां भुक्ति.
तत्र यदा प्रभवः प्रवर्तते वर्षपर्यंतमस्वरस्य दशा ।
तत्रांतर्दशा आदौ अस्वरस्यैवांतर्दशामासमेकादिभुक्तिः तदुपरि इकारोंऽतर्दशापतिः तस्यापीयमेव भुक्तिःइकारोपरि उकारस्यांतर्दशातद्भुक्तिप्रमाणेन । उकारादुपरि एकारस्योदयस्तावद्भुक्तिप्रमाणेन एकारादुपरि ओकारस्वरस्योदयः मासमेकादिभुक्तिप्रमाणेन । तदुपरि पुनरकारस्यैवोदयो भवति । एवमेकादशस्वरा अन्तर्दशासु उदयंति । एतेन किम् । द्वादशाब्दादिनाड्यंतर्दशाकालम् एकादशधा विभजेत् । ग्रन्थोक्तांतर्दशाकालोलभ्यते इदमग्रे वक्ष्यति च । अथायनस्वरोदयमाह । अथांतर्दशाभुक्तिः । दिन १६ । २१ । ४९ ॥ १ ॥ इत्ययनस्वरचक्रम् ।

अकारादिस्वराःपंच वसंतादिक्रमोदयः ॥
एकैकस्मिन् स्वरे प्रोक्ता द्विसप्ततिदिनो-
दयः ॥ १ ॥ षड् दिनानि रदा नाड्यो
वह्निवेदपलानि च ॥ अंतरोदयमान
स्यादृतुनाम्नि स्वरोदये ॥ २ ॥ इति
यामले ऋतुस्वरचक्रम् ॥

॥ ऋतुस्वरचक्रम् ॥

| अ | इ | उ | ए | ओ |
|---|---|---|---|---|
| ७२ | ७२ | ७२ | ७२ | ७२ |
| ६ | ६ | ६ | ६ | ६ |
| ३२ | ३२ | ३२ | ३२ | ३२ |
| ४३ | ४३ | ४३ | ४३ | ४३ |

अधुना वसन्तादिऋतुषु अस्वरादीनामुदयमाह । अकारादीति । मृगादिराशिद्वयभानुभोगात् षट् ऋतवः स्युः शिशिरो वसन्त इति संहितोक्तत्वात् मेषादिषु राशिषु रविभोगाद्वसन्तादयः षट् ऋतवो भवंति । मासद्वयात्मकः ऋतुः यावन्मेषवृषस्थो रविः मिथुनराशिद्वादशांशस्थो रविः एवं द्विसप्तत्यंशाः ७२ तान्येव द्विसप्ततिदिनानि । तैर्द्विसप्ततिदिनोदयैरकारस्योदयः । एवं मिथुनांशा अष्टादश १८ कर्कस्य त्रिंशदंशाः ३० सिंहस्य चतुर्विंशतिः २४ एवं द्विसप्तदिनानि ७२ तैरिकारस्योदयः । सिंहस्य षडंशाः ६ कन्यातुलयोः षष्ट्यंशाः ६० वृश्चिकस्य च षडंशाः ६ एवं कृत्वा द्विसप्ततिदिनानि ७२ भवंति तैरुकारस्वरस्योदयः वृश्चिकस्य चतुर्विंशत्यंशाः २४ धनः संपूर्णः मकरस्याष्टादशांशाः १८ एवं

द्विसप्तत्यंशाः ७२ एभिरेकारस्वरोदयो भवति । मकरस्य शेषा द्वादशांशाः १२ कुंभमीन-योश्चांशाः एवं द्विसप्ततिदिनैरोकारस्वरस्योदयः । अनेक क्रमेण अकारादिस्वराः पंच वसंतादिऋतूदये उदयंत इत्युक्तम् ॥ १ ॥ अथात्र ऋतुषु प्रत्येकस्वरदशासु अंतर्दशास्वराणां भुक्तिमाह । षड् दिनानीति । सुगमम् ॥ २ ॥

नभस्यमार्गवैशाखे ह्रस्वरस्योदयो भवेत् ॥ आश्विनश्रावणाषाढेष्विकारो नायकः स्मृतः ॥ १ ॥ उकारश्चैत्रपौषे स्यादेकारो ज्येष्ठकार्तिके ॥ ओकार उदयं याति माघफाल्गुनमासयोः ॥२॥ द्वे दिने ठ्यङ्घयो नाड्य श्चाष्टात्रिंशत् पलानि च ॥ अंतरोदययुक्तोसावत्र वै मासिकस्वरे ॥ ३ ॥ इति यामले मासस्वरचक्रम् ॥

॥ मासस्वरचक्रम् ॥

| अ | इ | उ | ए | ओ |
|---|---|---|---|---|
| भा. | आ | चै | ज्ये | मा |
| मा | श्रा | पौ | का | फा |
| वै | आ | ० | ० | ० |
| २ | २ | २ | २ | २ |
| ४३ | ४३ | ४३ | ४३ | ४३ |
| ३८ | ३८ | ३८ | ३८ | ३८ |

अथ मासस्वरोदयानाह । नभस्यमार्गवैशाखेति ॥ १ ॥ उकारश्चेति ॥ २ ॥ द्वे दिनेति सुगमम् ॥ ३ ॥ इति मासस्वरचक्रम् ॥

अस्वरः कृष्णपक्षेशः शुक्लपक्षेश इस्वरः ॥ पक्षात्मिकांतरे भुक्तिर्मासभुक्त्यर्धमानतः ॥ १ ॥ इति यामले पक्षस्वरचक्रम् ॥

॥ पक्षस्वरचक्रम् ॥

| अ | इ | उ | ए | ओ |
|---|---|---|---|---|
| कृ | शु | ० | ० | ० |
| १ | १ | १ | १ | १ |
| २१ | २१ | २१ | २१ | २१ |
| ४९ | ४९ | ४९ | ४९ | ४९ |

अथ पक्षस्वरमाह ॥ अस्वरः कृष्णपक्षेति । तथा च दिन १ दंड २१ पल ४९ ॥ १ ॥ इति पक्षस्वरचक्रम् ॥

## ॥ दिनस्वरचक्रम् ॥

| अ | इ | उ | ए | ओ |
|---|---|---|---|---|
| क | ख | ग | घ | च |
| छ | ज | झ | ट | ठ |
| ड | ढ | त | थ | द |
| ध | न | प | फ | ब |
| भ | म | य | र | ल |
| व | श | ष | स | ह |
| १ | २ | ३ | ४ | ५ |
| ६ | ७ | ८ | ९ | १० |
| घ ५ | घ ५ | घ ५ | घ ५ | घ ५ |
| प २७ | प २७ | प २७ | प २७ | प २७ |
| बा | कु | यु | वृ | मृ |
| ११ | १२ | १३ | १४ | १५ |

## ॥ घटिकास्वरचक्रम् ॥

| अ | इ | उ | ए | ओ |
|---|---|---|---|---|
| क | ख | ग | घ | च |
| छ | ज | झ | ट | ठ |
| ड | ढ | त | थ | द |
| ध | न | प | फ | ब |
| भ | म | य | र | ल |
| व | श | ष | स | ह |
| १ | २ | ३ | ४ | ५ |
| ६ | ७ | ८ | ९ | १० |
| ११ | १२ | १३ | १४ | १५ |
| घ ५ | घ ५ | घ ५ | घ ५ | घ ५ |
| प २७ | प २७ | प २७ | प २७ | प २७ |
| बा. | कु. | कु | वृ. | मृ. |

अकारादिक्रमान्न्यस्य नंदादितिथिपंचकम् ॥ दिनस्वरोदयो नित्यं स्वस्वातिथ्यादि जायते ॥ अस्यांतरोदयः पंच घट्यस्तारापलानि च ॥ १ ॥ तिथ्यादौ घटिकाः पंच पलानि सप्तविंशतिः ॥ अंतरोदययुक्तोऽसौ दिनस्वरस्य सूरभिः ॥ २ ॥ इति दिनस्वरचक्रम् ॥

अथ दिनस्वरानाह । अकारादाविति सार्द्धश्लोकः इति दिनस्वरचक्रम् ॥

घटीस्वरो घटीः पंच पलानि सप्तविंशतिः ॥ अस्यांतरोदयः प्रोक्तो घटिकार्धप्रमाणतः ॥ १ ॥ इति यामले घटिकास्वरचक्रम् ॥

अथ घटीस्वरमाह । तिथ्यादाविति ॥ १ ॥ इति घटीस्वरचक्रम् ॥

द्वादशाब्दादिनाड्यंताः स्वस्थानाच्च स्वकालतः ॥ उदयांते पुनस्तत्रांतरैरेकादशोदयैः ॥ १ ॥

अथ द्वादशाब्दादिनाड्यंतेषु अंतरोदयमाह । द्वादशाब्दादीति । अत्रांतरोदये कालमानं पंचधा उक्तम् । वर्षमास इति । यतः एतैरेव पंचधा कालमानैः फलं परिणमति ॥ १ ॥

कुत्रोक्तमाह। वर्षमेकं मासमेकमित्यादिकस्य फलस्य परिपाकवर्ष १ । २ । ४३ । ३८ । कस्यापि मासादिभिः कस्यापि द्वे दिने त्रयो नाड्यादिभिः । तावद्वर्षादिरूपमानम् ॥ १ ॥ अथ भुक्तभोग्यांतरोदयस्वरात्कर्तुं गणितमाह । द्वादशाब्द इति । अथोदाहरणम् । अधुना प्रभवादिद्वादशसंवत्सरैरकारस्वरो भुक्तः । वर्तमानकाले प्रमाथिसंवत्सरादारभ्य द्वादशवर्षपर्यंतमिकारस्वरस्योदयो वर्तते । शके १४३७ समये चैत्रशुद्ध प्रतिपदि तस्य भुक्तवर्षाणि चत्वारि ४ पञ्चपञ्चाशद्दिनानि वर्षाणि षष्ट्यधिकशतत्रय ३६० गुणितानि दिनसहितानि १४९५ ॥ शरगोब्धिभुधांशवः षष्ट्या गुणिते जातम् । ८९७०० एतानि भुक्तदण्डानि । षष्ट्या गुणिते पलानि ५३८२००० अथ द्वादशाब्दांतरोदयपलानि व्योमकुञ्जरशैलाग्निसुधाकरयुगेंदवः १४१३७८० ॥ द्वादशाब्दांतरोदये हारः । अनेन हारेण इकारस्वरभुक्ताब्दपलेभ्यो लब्धा भुक्तस्वरास्त्रयः । इकारादारभ्य इ उ एस्वरा भुक्ता ओकारोंतर्दशाधिपत्वेन वर्त्तते तस्यापि भुक्तभोग्यदिनानि ३१६ ॥ ५१ ॥ भोग्यदिनानि ७९ ॥ ५२ ॥ एतावता ओकारस्य उदयः चैत्रशुक्लप्रतिपदारभ्य आषाढकृष्णप्रतिपत्पर्यंतं विद्यते । तदुपरि अकारस्यांतरोदयो भविष्यते । अथ वार्षिकस्वरोदयांतरोदाहरणम् ॥ अधुना षोडशः संवत्सरश्चित्रभानुः शकाब्दो गतः शकाब्दास्तु भुक्ताश्च भवंति । भोग्यवर्षस्य परिचायकाः । यथा आदौ कल्पारंभे चैत्रप्रतिपदि भुक्ताब्द एव न ततो वर्षे प्रमाणदिनेषु व्यतीतेषु पुनश्चैत्रशुक्लप्रतिपदि एकं वर्षं गतं लिख्यते । तद्वर्षभोग्यस्य द्वितीयस्य परिचायकम् । तथा शकाब्दा एकैकेषु व्यतीतेषु वर्षेषु शकाब्दसमूहाः जाताः । तत्र बार्हस्पत्यवर्षाः प्रभवंति । तस्योपपत्तिः । सिद्धांतादिषु वराहसंहितासु रविभगणप्रमाणं रविवर्षाः । गुरुभगणा वराहमिहिरोक्ताः । जिनयमवेदभुजर्तुहव्यभुजः । एकैकस्मिन्वर्षे कियत्कालाधिकगुरो राशिभोगः । तत्प्रमाणेन वराहमिहिरेण जिनयमर्तुहव्यभुजोभगणाकल्पिताः । गुरुभगणा द्वादशघ्ना गुरुवर्षाः स्युः । ततो रविवर्षभगणेभ्यो गुरुवर्षाधिकाः । द्वयोरंतरे गुरुवर्षाधिकाः । ततो ३६४२२४ गुरुभगणाः । भगणाब्दाः ४३७०६८८ सौराब्दाः ४३२०००० ॥ अंतरं ॥ ५०६८८ अपवर्त्तांकः । २३०४ शकादौ गुरुः २ । ८ । ३९ । २२ गुरुवर्षशेषं रविवर्षाणि च केनाप्यपवर्त्य गुरुभगणात् प्राग्गुणकाराः २२ द्वाविंशतिः हाराः प्राप्ताः शराद्रिवस्विंदवः १८७५ गुणभागहाराभ्यामेकवर्षोनगुरोर्मध्यमगत्या रविवर्षाभ्यंतरे भोगो लभ्यते राशिः १। ०।२१।७ प्रभवादेर्भोगो रूपराशिरेव । तदुपरि अग्रिमवर्षस्य अन्तिमकला विकला भोगः । भुक्त एवागच्छति पञ्चकलाभोगः प्रत्यहं गुरोः अतस्तेन भोगेन कलाविकलाभ्यां प्राप्तदिनानि चत्वारि दण्डास्त्रयोदशाद्या अग्रिमवर्षे चैत्रशुक्लप्रतिपदः पश्चादेव त्रयोदशदंडसहितं चतुर्भिर्दिनैः प्रवृत्ता एवं तदग्रिमवर्षस्य प्रवृत्तिरष्टभिर्दिनैः षड्विंशतिदंडैः पश्चादेव प्रवृत्तिर्भवति । एवं सर्वेषां प्रवृत्तिर्ज्ञातव्या । अत एवास्यामिव्याख्यानं टीकायां कृतम् । शकाब्दा भुक्तसंवत्सराः प्रदश्यंते । शेषदिनानि भोग्यस्य वर्षस्य गतान्येव तेनाग्रिमवर्षेण फलप्रवृत्तिर्वक्तव्या । अस्माकं मतमेतत् गणितद्वारेण दर्शितम् ।

अन्येपि ऊहयिष्यंति । ननु तानि दिनानि प्राप्तवर्षस्य भुक्तानि । भुक्तवर्षेभ्यो भुक्तफलानि न प्राप्यते । यथा गुरोरेव भगणादयः । अथोदाहरणम् । शके १४३७ । गतशकाब्दात् प्राप्तवर्षभुक्तवर्षाणि षोडशसप्तदशस्य सुभानोः षट्पञ्चाशद्दिनानि ५६ भुक्तान्यागतानि । तेन चैत्रशुक्लप्रतिपत् यश्च शके १४३५ समये माघशुक्लचतुर्थी सप्तदशमः सुभानुः प्रवृत्तः । तस्माद्भुक्तदिनानि पञ्चपञ्चाशत् ५५ । ४५ पंचचत्वारिंशद्दण्डाः । सुभानोरधिपतिरिकारस्वरः तस्य भुक्तपलानि सप्तशताधिकं लक्षद्वयम् २००७०० अथ वार्षिकस्वरांतर्दशाभोगपलानि सुधांशुधरणीनागपर्वतेंदुसुधांशवः ११७८११ ॥ अयं हारराशिरन्तरोदयस्वरभुक्तपलेभ्यो हारप्राप्तः वार्षिकस्वरात् अंतर्दशास्वराः । इकारस्वरात् द्वितीय उकारस्वरश्चैत्र्यां प्रवर्तते तस्य भोग्यदिनानि नव ९ द्विचत्वारिंशद्दंडाः ४२ तेन किं जातं चैत्रशुक्लदशम्यां द्विचत्वारिंशद्दंडोपरि एकारस्यांतरोदयस्य प्रवृत्तिर्भविष्यति । वैशाखशुक्लद्वादश्यां दंडाः पञ्चविंशतिः २५ चत्वारिंशत्पलपर्यंतम् ॥ ४० ॥ अधुना चैत्रशुक्लप्रतिपदि कस्यायनस्वरस्य उदयोंतरोदयश्च विद्यते तदुदाहरणम् । अस्वरो दक्षिणे स्वामी इस्वरश्चोत्तरायण इति वचनात् चैत्रप्रतिपदि उत्तरायणे इकारोदयः प्रवर्तते । तथा चायननिर्णये वराहः । दक्षिणमयनं सवितुः कर्कटाद्ये मृगादितश्चान्यत इति वचनात् । शके १४३६ समये पौषशुद्धद्वादश्यां १२ मकरेऽर्कत आरभ्य चैत्रशुक्लत्रयोदश्यां संमेषेऽर्कः । अर्द्धायनम् । तेन चैत्रशुक्लप्रतिपदि इकारस्वरस्यैव उदयो विद्यते । अथांतरोदयानामुदाहरणम् । मृगादिभुक्तांशाः ७८ एषां पलानि २८०८०० अष्टशताधिका अष्टाविंशतिरयुतानि । अयनस्वरांतरोदयपलानि ५८९०९ असावंकराशिरयनवस्वरांतरोदयभोगः । अयमेव हारः अनेनायनभुक्तपलेभ्यः प्राप्ता अंतरोदयस्वरास्त्रयः ३ । ४९ । ५ एकोनपञ्चाशद्दंडाः । चैत्रशुक्लप्रतिपदि एकोनपंचाशद्दंडोपरि उकारस्वरोदयः । वैशाखवद्यतृतीयायां दंड ३३ पर्यंतम् । अथ ऋतुस्वरोदयांतरोदयोदाहरणम् । अथ ऋतूनां प्रवृत्तिः सूर्यसंक्रमतः । तथा च संहिताकारः । "मृगादिराशिद्वयभानुभोगात् षडर्तव" इति वचनात् मकरसंक्रमणादारभ्य चैत्रशुक्लप्रतिपदि अष्टादशदिनानि मीनसंक्रमणाज्जातानि । मीनादारभ्य वसंतऋतुः एतेन अकारः स्वरोदया विद्यते । अथांतरोदयः । अथांतर्दशाकालः । षड्दिनानि ६ । ३६ । ४३ ॥ एषां पलानि २३५६३ रामांगेषु गुणाश्विनः । असावन्तरोदयहारः । अथोदयस्वरः ॥ अथोदयस्वरस्य भुक्तपलानि ६४८०० खखनागाब्धिरसाः असौ भोज्यराशिः । एभ्यो हारप्राप्ता अंतरोदयस्वरोदयः दि० प १ दंड ३८ प० तेन वर्तते अस्यांतरोदये अकारइकारौ भुक्तस्वरौ उकारस्वरस्य अंतरोदयो वर्तते । तस्या भोग्यम् । चैत्रशुक्लप्रतिपद्दिनमेकम् अष्टात्रिंशद्दण्डाः नव पलानि चैत्रशुक्लतृतीया अष्टात्रिंशद्दण्डपर्यंतम् ॥ अथ मासस्वरोदयांतरोदयोदाहरणम् ॥ चैत्रकृष्णप्रतिपदारभ्य चैत्रशुक्लप्रतिपत्पर्यंतं षोडश दिनानि । तत्र मासांतरोदयस्वरस्य विभागः । द्वे दिने २ त्र्यब्धयो नाड्यः ४३ अष्टाविंशत्पलानि च २८ एषां

पलानि भागहारः ९८१८ नागेंदुगजखेचराः। उदितस्वरस्योकारस्य भुक्तपलानि ५७६००३ असौ भाज्यराशिः भाज्यभक्तः पंचनांशोनद्वाविंशतिदंडाः तदुपरि एकारस्वरस्यांतरोदयः। चैत्रशुक्लचतुर्थ्यां दंड ५ पर्यंतम्। अथ पक्षस्वरस्योदाहरणम्। अस्वरः कृष्णपक्षेशः शुक्लपक्षेश इस्वरः चैत्रप्रतिपदारभ्य इस्वरस्य उदयो विद्यते। चैत्रशुक्लप्रतिपदि उदयोंतरोदयोरपि इकारस्यैव। अथ दिनस्वरोदयोपि इकारस्यैव। अथ दिनस्वरोदाहरणम्। चैत्रशुक्लप्रतिपदि अकारस्य उदयः आदौ पंचदंडसप्तविंशतिपलानि पर्यंतमंतरोदयोपि अकारस्यैव ॥ १ ॥ २ ॥ इति स्वरचक्रम् ॥ इति घटीस्वरचक्रम्। द्वादशाब्दादि नाड्यंता इति ॥ १ ॥

वर्षमासदिवानाडीपलानि च क्रमादिदम् ॥ कालमानं मया प्रोक्तं पंचधात्र स्वरोदये ॥ २ ॥ द्वादशाब्दस्वरादीनां भुक्तं पलमयं तु यत् ॥ तद्भक्तं स्वस्वमानेन लब्धं शेषं द्विकं भवेत् ॥ ३ ॥ लब्धे भुक्तस्वरा ज्ञेयाः शेषे चैवोदितः स्वराः ॥ अस्मिन् षष्ट्यादिभक्ते तु भुक्तः स्याद्दुदितस्वरः ॥ ४ ॥ उदितस्य स्वरस्य स्युर्नामस्वरवशेन ताः ॥ पंच बालादिकावस्थाः स्वस्वकालप्रमाणतः ॥५॥

वर्षमासदिवेति ॥ २ ॥ द्वादशाब्दास्वरा इति ॥ ३ ॥ लब्धेति ॥ ४ ॥ अथानंतरं द्वादशाब्दादीनाम् उदितांतरोदयस्वराणां पंच बालादिकावस्थेति। नामस्वर वशेन मात्रादिनामस्वरवशेन द्वादशाब्दस्वरादीनां पंचबालादिकावस्थाः भवंति। अवस्थाः कल्प्यंते। तेषामवस्थाभेद एव नास्ति ते तु सर्वेषां साधारणाः अतः सर्वेषां स्वरवशेन तेषां पृथगवस्थाः परिकल्पनोदितस्य द्वादशब्दादिस्वरस्य कस्यचिन्नामवशेन बालसंज्ञा भवति। कस्यचिन्नामस्वरवशेन कुमारसंज्ञा भवति कस्यचिद्युवेत्यादिसंज्ञाः परिकल्प्यंते ॥ ५ ॥

आद्यो बालः कुमारश्च युवा वृद्धो मृतस्तथा ॥ निजावस्थास्वरूपेण फलदा नात्र संशयः॥६॥ किंचिल्लाभकरो बालः कुमारस्त्वर्धलाभदः ॥ सर्वसिद्धो युवा प्रोक्तो वृद्धे हानिर्मृते क्षयः ॥७॥ यात्रा युद्धे विवादे च नष्टे दृष्टे रुजान्विते॥ बालस्वरो भवेद्दुष्टो विवाहादिशुभेऽशुभः ॥८॥ सर्वेषु शुभकार्येषु यात्राकाले तथैव च ॥ कुमारः कुरुते सिद्धिं संग्रामे सक्षतो जयः ॥९॥ शुभाशुभेषु सर्वेषु मंत्रयंत्रादिसाधने ॥ सर्वसिद्धिं युवा दत्ते यात्रायुद्धे विशेषतः ॥ १० ॥

ताः पंच संज्ञा आहुः। आद्यो बालः कुमार इति ॥ अत उक्तं नामस्वरवशेन संज्ञा भवति। तर्हि नामस्वरवशेनैव केन प्रकारेण। तथा व्याख्यायते। य एव नाम स्वरः

स एव द्वादशाब्दादिस्वरांतरोदयस्तदास बालसंज्ञः नामस्वराद्द्वितीयः स्वरः कालजस्तदा कुमारस्वरसंज्ञो भवति । नामजातृतीयो युवासंज्ञः चतुर्थो वृद्धसंज्ञः । पंचमो मृतसंज्ञ इति । अनेन प्रकारेण नामस्वरवशेन संज्ञाः कल्प्यंते । ताः संज्ञा निजावस्थास्वरूपेण फलदाः यस्य यः संज्ञास्वरः स संज्ञास्वरूपफलदः ॥ ६ ॥ तासां संज्ञानां फलमाह । किंचिल्लाभकरोति ॥७॥ कुत्रेदं फलं परिणमति तस्याकांक्षामाह । यात्रायुद्धेति ॥ ८ ॥ सर्वेति ॥ ९ ॥ शुभाशुभेष्विति ॥ १० ॥

दाने देवार्चने दीक्षागुढमंत्रप्रकल्पने ॥ वृद्धस्वरो भवेद्धव्यो रणे भंगो भयंगमे ॥ ११ ॥ विवाहादिशुभं सर्वं संग्रामाद्यशुभं तथा ॥ न कर्तव्यं शुभं किंचिज्जाते मृत्युस्वरोदये ॥१२॥ मृतो वृद्धस्तथा बालः कुमारस्तरुणः स्वराः ॥ यथोत्तरबलाः सर्वे ज्ञातव्याः स्वरवेदिभिः ॥ १३ ॥ यो यस्य पंचमे स्थाने स स्वरो मृत्युदायकः ॥ तृतीये तु भवेत् सिद्धिः शेषा मध्यफलप्रदाः ॥ १४ ॥ मृत्युर्हीनस्वरे नाम्नि जयो नाम्नि स्वराधिके ॥ समनाम्नि भवेत्साम्यं संधिर्जयपराजयौ ॥ १५ ॥ एकस्वरे भवेत्साम्यं द्वितीयोऽर्धफलप्रदः ॥ तृतीये तु फलं पूर्णं तुर्ये बंधः पराद्भयम् ॥ १६ ॥ शत्रोर्मृत्युस्वरे प्राप्ते यूनि प्राप्ते स्वकीयके ॥ तत्काले प्रारभेद्युद्धं विजयो भवति ध्रुवम् ॥ १७ ॥

दाने देवार्चन इति ॥ ११ ॥ विवाहादीति ॥ १२ ॥ अथ पंचबालादिकावस्थानां यथोत्तरं बलमाह । मृतो वृद्ध इति । सुगमम् ॥ १३ ॥ यस्माद्यस्य तृतीयो युवा स तस्मात् जयं लभते । यस्माद्यस्य चतुर्थः तस्माद्युद्धतो रणे भंगं प्राप्नोति यस्य यस्माद्द्वितीयः स द्वितीयात् सर्वतो जयं लभते । यो यस्येति । योधयोर्द्वयोर्यस्माद्वर्णस्वराद्यः पंचमः । स मृत्युदायकः यतः पंचमस्य मृत्युसंज्ञा कथिता अतस्तेन सह युद्धं न कुर्यात् । स्ववर्णस्वरात् वृद्धः मृत इति । मृतबलयोः स्वरयोर्बालस्वरो बली । बालवृद्धयोर्वृद्धः । वृद्धकुमारयोः कुमारो बली कुमारयूनोर्युवा बली अर्थान्मृतबालयोरधिको बालो वृद्धः । बालवृद्धयोर्वृद्धोतिबलः । एवमुत्तरोत्तराधिके तथाधिकबलकल्पना ॥ १३ ॥ १४ ॥ अथ विशेषात् द्वंद्वादिचातुरंगयुद्धसमबलफलमाह । मृत्युर्हीनेति ॥ उभयोर्भटयोर्युद्धे हीनस्वरे सति मृत्युः । यो हीनस्वरः सोधिकस्वरान्मृत्युमभ्येति । वृद्धस्वरात् मृतिं प्राप्नोति । वृद्धोः कुमारतः मृतस्वरो बालस्वरात् मृतिं प्राप्नोति । बालस्वरः । कुमारस्वरात् मृतिं प्राप्नोति कुमारो युवस्वरात् । यत उक्तं मृतो वृद्धस्तथा बाल इति । अथवा अकारादाकारोधिकमातृकः

अकारादिकारः । इकारादीकारः । ईकारादुकारः । उकारादेकारोधिकः स्वरः । एकारादोकारः एवमग्राग्रयोरपि । अथायमर्थः कथ व्याख्यातः । कविप्रोक्तो न भवति । तत्रोच्यते । मृतो वृद्धस्तथा बाल इत्यत्र यथोत्तरबलाः कथिताः । तेनार्थेनैव कविना । कथं नोक्तम् । अत्र नाम्नीति हीनस्वरता उक्ता ननु नाम्नि बालादिकावस्था हीनाधिकोक्ता । स्वराधिके नाम्नि जयः उभयोर्भटयोर्यस्य नाम्नि हीनस्वरो भवति सोधिकस्वरान्मृत्युमेति । उभयोस्तुल्यमेव फलम् । अत्रोदाहरणम् । एकस्य एक एव नाम्न आद्यवर्णे अपरस्य द्विस्वरः अधिकस्वरात् हीनस्वरो म्रियते । स्वराधिकेऽयमेव जयः । तथा एको द्विस्वरः अन्यस्त्रिस्वरः तथापि अधिकस्य जयः । तथा व्याख्यानमस्वरा अकारादयो यथोत्तराधिकाः । अमुमर्थं छंदोलक्षणज्ञा जानंति । समनाम्नि भवेत्साम्यम् । समस्वरे नाम्नि द्वयोर्भटयोस्तुल्यमेव फलम् ।तत्तुल्यतामाह। संधिर्जयपराजयौ । एक द्वित्रिचतुःपंचमातृकैर्ययोर्नाम्नोस्तुल्यता यदि तदा समं भवति मैत्री अथवा संग्रामे जयः । संग्रामादुभयोरपि पराभवः । पलायनमेव पराभवः । इयमेव समता । तथा च समरसारे "हानिं मृतिं विजयमाह तथाधिका सा तुल्या जयं च समरं यदि वापि संधिम्" तुल्यमात्रेत्यर्थः । तथा च मन्त्रिकायाम् । एकमात्रो द्विमात्रश्च त्रिचतुः पंचमात्रिकः । यथोत्तरबला युद्धे ज्ञातव्याः स्वरपारगैः ।" तथैव । एकमात्रिकद्विमात्रिकादिलंक्षणम् । "एकमात्रकवर्णश्च किवर्णश्च द्विमात्रिकः । कुक्षिकस्तुर्यकः केस्तु कोवर्णः पंचमात्रिकः ।" अन्यच । "स्वरव्यंजनयोः संख्या नाम्नोः शर ५ हृताधिके । जयो हीने मृतिः साम्ये संधिर्वा समरागमः ॥ १५ ॥ एकस्वरेति । एकस्वरे द्वयोर्बालस्वरे सममेव न कस्यापि जयो न पराजयः । बालकुमारयोः संग्रामेऽर्द्धफलं कुमारस्य किंचिज्जयः बालयूनोः फलं पूर्णं यूनः सर्वपदे जयः । बालवृद्धयोर्बालस्य वधः । बालेतरयोर्भयमात्रम् ॥ १६ ॥ अथ जयाभिलाषी शत्रुं यथा जयति तज्जयसमयमाह । शत्रोर्मृत्युस्वरेति । यस्मिन् काले शत्रोर्मृत्युस्वरो भवति एवं शत्रोर्मृत्युस्वरे स्वस्य यूनि स्वरे प्राप्ते तत्काले युद्धं प्रारभेत् विजयो भवति नान्यथा किंतु सत्यमेव । सर्वजयहेतौ मुख्यः पक्षोयम् ॥ १७ ॥

तत्काले मात्रिको ग्राह्यो दिने वर्णस्वरस्तथा ॥ पक्षे ग्रहस्वरो ज्ञेयो मासे जीवस्वरोदयः ॥ १८ ॥ ऋतौ राश्यंशको ग्राह्यः षण्मासे धिष्ण्यसंभवः ॥ अब्दे पिंडस्वरो ज्ञेयो द्वादशवार्षिके ॥ १९ ॥ सर्वकालं बली वर्णः सर्वव्यापी न संशयः ॥ तस्मात्सर्वप्रयत्नेन वर्णे वीक्ष्यं बलाबलम् ॥ २० ॥ यथा पदा हस्तिपदे प्रविष्टा यथाहि नद्यः खलु सागरेषु ४ यथा हरेर्देहगताश्च देवास्तथा स्वरा वर्णफलोदयस्थाः ॥२१॥ साधनं मंत्रयंत्रस्य तत्र योगं च सर्वदा॥अधोमुखानि कार्याणि मात्रास्वरबले कुरु ॥२२॥

इदं तात्कालयुवास्वरप्राप्तेति लक्षणं समाचष्टे। तत्काले मातृकेति ॥ १८ ॥ ऋताविति। तत्काले विद्यावादादिचतुर्विधयुद्धकाले नामजो मात्रिकः स्वरः स्वस्य पंचमस्वरःग्राह्यः। मात्रास्वरवशेन युद्धकाले नाडीस्वरस्योदयः स्वस्य युवा स्वराख्यो भवति। शत्रोर्मृताख्यःएवंसति युद्धं कुर्यात् जय एव स्यात्। अत्रोदाहरणम्। देवदत्तविराजयोर्युद्धे तत्काले नाडीस्वरे अकारे प्राप्ते इकारो मात्रास्वरयोर्बलेन देवदत्तस्याकारो युवा विराजस्याकारो मृत्युस्वरः एवं लक्षणे तत्काले प्रारभेद्युद्धमिति सर्वथा देवदत्तस्य जयः अथानयोर्जकाले दिनस्वरायेद्युकारोदयःदकारवकारयोवर्णस्वरयोरोकार अकारश्च द्वयोर्वृद्धकुमाराख्यःतद्वशाज्जयो विराजो देवदत्तं जयति। अथ देवदत्तस्य ग्रहस्वर एकारः। तद्बलात् कृष्णपक्षे अकारस्योदयः स वृद्धः शुक्ले इकारस्योदयः स मृतस्वरः मृताद्वृद्धो जयप्रदः। देवदत्तस्य जीवस्वर ओकारः तद्बलात् वैशाखभाद्रपदमार्गेषु अकारस्य उदयः ते मासा कुमाराख्याः। युद्धे बलं देवदत्तस्य। आषाढश्रावणाश्विनमासेषु इकार उदयति जीवस्वरबलाद्युवाख्या मासाः युद्धे देवदत्तस्य जायदाः। चैत्रपौषयोस्तूकारोदयः तौ जीवस्वरबलाद्वृद्धौ देवदत्तस्य युद्धे भंगप्रदौ ज्येष्ठकार्त्तिकमास एकारस्योदयः जीवस्वरबलान्मृत्युमासौ देवदत्तस्य युद्ध मृत्युदौ। इति मासि बलाबलम्। देवदत्तस्य रेवतीप्रथमपादजन्मसमयत्वात् मीनराश्यधिष्ठितत्वात् राशिस्वर ओकार एव तद्बलात् ऋतुस्वरेऽकारोदये कुमारोदयः। तत्र सक्षतो जयः ऋतुस्वरे इकारे युवाख्ये अक्षतो जयः उकारे ऋतुस्वरोदये वृद्धाख्ये युद्ध देवदत्तस्य पराजयः। एकारे ऋतुस्वरे प्राप्ते राशिस्वरबलात् मृत्युः। देवदत्तस्य नक्षत्रस्वरोऽकारः अकारस्वरबलात् अस्वरो दक्षिणे स्वामीति न्यायात्। अयनस्वरो बालः। दक्षिणस्वरः कुमारः। बालायनस्वरे युद्धे भंगः। कुमारस्वरे सक्षतो जयः। अब्दे पिंडस्वरा ज्ञेया इति न्यायात् देवदत्तस्य पिंडस्वर इकारः तद्बलाद्वार्षिकाकारस्वरोदये मृत्युस्वरोदये तद्वर्षे युद्धे मृत्युः एवमिकारस्योदये बाले पराभवः। उकारे वार्षिकस्वरोदये कुमाराख्ये सक्षतो जयः। एकारे वार्षिकस्वरोदये सर्वजयः। ओकारे वार्षिकस्वरे वृद्धाख्ययुद्धे पराजयः। अथ देवदत्तस्य योगस्वरः उकारः तद्वशाद्द्विदशवार्षिकस्वरे उकारे बालसंज्ञके युद्धे पराजयः अकारे द्वादशवार्षिके पिंडस्वरात् कुमाराख्ये सक्षतो जयः। इकारे द्वादशवार्षिकस्वरे योगस्वरात् युवाख्ये युद्धे सर्वजयः उकारे द्वादशवार्षिकोदये योगस्वरबलाद्वृद्धाख्ये सक्षतः पराभवः। एकारे द्वादशवार्षिकस्वरोदये मृताख्ये सक्षतो मृत्युः। एवं बलानि युद्ध देयानि ॥ १९ ॥ अथ सर्वस्वरबलाद्वर्णस्वरबलमेव सर्वकाले सर्वसाद्बलवत्तरं बलमाचष्टे। सर्वकालं बली वर्ण इति। एतावता वर्णस्वरबलादेव सर्वकालेषु द्वादशवार्षिकायनर्तुमासपक्षदिननाडीषु सर्ववादजये बलाबलं कुर्यात् ॥ २० ॥ पुनरेतद्बलं समर्थयन्नाह। यथापदेति। स्वराः वर्णबलेन बलिनः अबलेनाबलाः ॥ २१ ॥ अथ तेषां कथनेन किं प्रयोजनमित्याह साधनं मंत्रयंत्रेति ॥ २२ ॥

**वर्णस्वरबले सर्वं कर्तव्यं च शुभाशुभम् ॥ सिद्धिदं सर्वकार्येषु युद्धकाले विशेषतः ॥ २३ ॥ मारणं मोहनं स्तंभं विद्वेषोच्चाटनं**

वशम् ॥ विवादं विग्रहं घातं कुर्याद्ग्रहस्वरोदये ॥ २४ ॥ खान-पानादिकं सर्वं वस्त्रालंकारभूषणम् ॥ विद्यारंभं विवाहं च कुर्याज्जीवस्वरोदये ॥ २५ ॥ प्रासादाराममहर्म्याणि देवतास्थापनं तथा ॥ राज्याभिषेचनं दीक्षा कर्तव्यं राशिके स्वरे ॥ २६ ॥ शांतिकं पौष्टिकं यात्रां प्रवेशं बीजवापनम् ॥ स्त्रीविवाहस्तथा सेवा कर्तव्या भस्वरोदये

वर्णस्वरेति ॥ २३ ॥ मारणं मोहनमिति ॥ २४ ॥ खानपानादिकं सर्वमिति ॥ २५ ॥ प्रासादारामेति ॥ २६ ॥ शांतिकं पौष्टिकमिति ॥ २७ ॥

शत्रूणां देशभंगं च कोटयुद्धं च वेष्टनम् ॥ सेनाध्यक्षस्तथा मंत्री कर्तव्यं पिंडिकोदये ॥ २८ ॥ योगेन साधयेद्योगं देहस्थं ज्ञान-संभवम् ॥ आर्णवं शांभवं चैव शाक्तेयं च तृतीयकम् ॥२९॥ इति स्वरोदये षोडशस्वरविवरणम् ॥

शत्रूणां देशभंगमिति ॥ २८ ॥ योगेनेति ॥ २९ ॥ इति षोडशस्वरविवरणम् ॥

तिथिवारं च नक्षत्रं पृथक्पृथक् प्रभाषितम् ॥ यत्तदेकत्र संमील्य कुर्याद्वर्णस्वरादधः ॥ १ ॥ यस्य नामादिमं वर्णं तिथिवारर्क्षजं मृतम् ॥ तद्दिनं वर्जयेत्तस्य हानिमृत्युकरं यतः ॥२॥ अनेन स्वरयोगेन शत्रूणां मारणादिकम् ॥ मंत्रयंत्रक्रियाहोमं साधयेत्तद्दिने बुधः ॥ ३ ॥ इति तिथिवारनक्षत्रस्वरचक्रम् ॥

तिथिवारं च नक्षत्रमिति । तिथिस्वरोदयः वारस्वरोदयः । ग्रहस्वरोदयः । नक्षत्रस्वरोदयः । एषां उदयाः पृथक्पृथक् उक्तायत्र वर्णस्वरवशात् तिथिवारनक्षत्राणांत्रयाणांयुवा लभ्यते यात्रासु युद्धे वादे च विशेषः ॥ १ ॥ अथैषां यंत्रमिलने मृतलक्षणं भवेत्तद्दिनवर्ज्यमित्याह यस्य नादिमं वर्णमिति ॥ २ ॥ अनेनेति यद्दिने

॥तिथिवारनक्षत्रस्वरच०॥

| अ | इ | उ | ए | औ |
|---|---|---|---|---|
| क | ख | ग | घ | च |
| छ | ज | झ | ट | ठ |
| ड | ढ | त | थ | द |
| ध | न | प | फ | ब |
| भ | म | य | र | ल |
| व | श | ष | स | ह |
| १ | २ | ३ | ४ | ५ |
| ६ | ७ | ८ | ९ | १० |
| ११ | १२ | १३ | १४ | १५ |
| मं.र.२ | बु.चं. | बृ | शु | श |
| रं ७ | पु | उ ५ | अ ५ | श्र |
| शा. | कृ. | मृ. | वृ | मृ |

तिथिवारर्क्षजं मृतमिति लभ्यते शत्रोर्नामवशेन तद्दिने मन्त्राभिचारेण शत्रुं साधयेदित्यर्थः ॥३॥
इति तिथिवारनक्षत्रस्वरबलम् ।

बालस्वरादिकावस्था भानुसंख्या भवंति ताः ॥ उदयं च क्रमेणैव स्वरभुक्तिप्रमाणतः ॥ १ ॥ घटिकाख्ये दिने वर्षे पक्षे मासे ऋत्वयने तथा ॥ द्वादशवर्षे अवस्था ज्ञायते स्वरे ॥ २ ॥

॥ स्वरावस्थाभागचक्रम् ॥

| घ. | दि. | प. | मा. | ऋ. | अ. | वर्ष | द्वा.व. |
|---|---|---|---|---|---|---|---|
| दि. ०० | ० | १ | २ | ६ | १५ | ३० | ३६० |
| घ. ० | ५ | १५ | ३० | ० | ० | ० | ० |
| प. २७ | ० | ० | ० | ० | पक्ष | मास | अब्द १ |

भपलानि घटी पंच सांद्र्यहोर्द्धदिनद्वयम् ॥ ऋतुषट्कं पक्षमासाब्दमवस्थाप्रमितिः क्रमात् ॥ ३ ॥ भुक्तस्वरप्रमाणं तु स्वस्वभोगेन तद्व्रजेत् ॥ गतावस्थागतांकेन शेषं तत्कालजा मता ॥ ४ ॥ मूला च १ बाला २ शिशु ३ हासिका च ४ कुमारिका ५ यौवन ६ राज्यदा च ७ ॥

अथ बालकुमारादीनां संख्याप्रमाणमाह । बालस्वरादिकावस्थेति ॥ १ ॥ द्वादशावस्थाः कुत्र भवंत्याकांक्षयाह । घटिकाख्येति ॥ २ ॥ घटिकादिकालेऽवस्थानां स्थितिप्रयाणमाह । भपलेति ॥ ३ ॥ भुक्तस्वरेति । अथ बालादीनां प्रत्येकं द्वादशावस्थोदाहरणम् । चैत्रशुक्ला प्रतिपदा भुक्तघटिका ३३ दिनावस्थाहारप्रमाणं पञ्चघट्यः पञ्चहारेण प्राप्ताः षडवस्था भुक्ताः ६ शेषं घटी सप्तमावस्था विद्यते । यस्य प्रतिपद्बालसंज्ञा कुमाराख्या युवाख्यावृद्धा मृता च तत्रबाला सप्तमी राज्यदा कुमाराख्या शांतिकरी सकामतुष्टिर्युवाख्या वृद्धाख्या रात्रिनिद्रा मृताह्वि दाहा । एता बालाद्यवस्था पञ्चघटीप्रमाणेन त्रयस्त्रिंशद्घटिकासु निर्णीताः । तत्रदेवदत्तस्य दिनचर्यायां वर्णस्वरः उकारवशेन देवदत्तस्य प्रतिपत् कुमाराख्या तद्बलासु देवदत्तस्य शांतिकरी अवस्था भविष्यति । अनेनोदाहरणेन सर्वेषामवस्थाफलं निर्णेतव्यम् । एतानि पञ्चावस्थाफलानि द्वादशद्वादशसंख्यानि स्वस्वभुक्तिप्रमाणेनघटिकाख्ये दिने पक्षे मासे ऋत्वयने तथेत्यादिसमयेषु वक्तव्येत्यर्थः ॥ ४ ॥ अथाऽवस्थागणनमाह मूला च बाला चेति ॥ ५ ॥

क्लेशा च ८ निंद्या ९ ज्वरिता १० प्रवासा ११ मृता च १२ बाला स्वरजा अवस्थाः ॥ ५ ॥ स्वस्था १ शुभा २ मोघ ३

तिहर्ष ४ वृद्धि ५ महोदया ६ शांतिकरी ७ सुदर्पा ॥ ८ ॥ मंदा ९: शमा १० शांतगुणोदया च ११ मांगल्यदा १२ द्वादशधा कुमारे ॥६॥ उत्साह १ धैर्यो २ ग्र ३ जया ४ बला च ५ संकल्पयोगा च ६ सकाम ७ तुष्टिः ८॥ सुखा ९ च सिद्धा १० च धनेश्वरी च ११ शांताभिधा १२ द्वादशधा युवाख्ये ॥ ७ ॥ वैकल्य १ शोषा च २ तथा च मोघा ३ च्युतेंद्रिया ४ दुःखित ५ रात्रि ६ निद्रा ७॥ बुद्धिप्रभंगा च ८ तपा च ९ क्लिष्टा १० ज्वरा ११ मृता १२ द्वादशधा च वृद्धे ॥८॥ छिन्ना १ च बंधा २ रिपुघातकारी ३ शोषा ४ मही ५ ज्वालन ६ कष्टदा च ७॥ व्रणांकिता ८ भेदकरी च ९ दाहा १० मृत्युः ११ क्षया १२ द्वादशमृत्युजा इमाः ॥ ९ ॥ एवं षष्टिरवस्थाः स्युरवस्थापंचके सदा ॥ सर्वासु तासु विज्ञेयं स्वनामसदृशं फलम् ॥१०॥ इति बालस्वरादीनां षष्टिः स्वरावस्थाः ॥

स्वस्थेति ॥ ६ ॥ उत्साहेति ॥ वैकल्यशोषेति ॥ ७ ॥ ८ ॥ छिन्ना चेति ॥ ९ ॥ एवमिति ॥ १० ॥ इति बालस्वरादीनां षष्टिरवस्थाः ॥

पूर्वस्मिन्नस्वरः स्वामी इस्वरो दक्षिणे तथा ॥ उस्वरः पश्चिमे ज्ञेय ए सौम्ये मध्य ओस्वरः ॥ १ ॥ यस्यां दिश्युदयं यासि स्वरस्तत्पंचमीं दिशम् ॥ वर्जयेत्सर्वकार्येषु यात्राकाले विशेषतः ॥ २ ॥ पृच्छति पृच्छकस्थास्तुः स्वरस्यास्तमितां दिशम् ॥ हानिर्मृत्युर्भयं भंगो जायते नात्र संशयः ॥ ३ ॥ इति दिशास्वरचक्रम् ॥

॥ दिशास्वर चक्रम् ॥

| श्री | पू. नंदा अ. १।६।११ | श्री |
|---|---|---|
| ए. उ. रिक्ता ४ १४।९ | ओम पूर्णा ५।१०।१५ | द.इ.भद्रा २।७।१२ |
| श्री | प. उ. जया ३।८।१३ | श्री |

युद्धादिषु स्वस्वबलमाह । पूर्वस्मिन्नस्वरेति ॥ १ ॥ यस्यां दिशीति । पंचमीं दिशं वर्जयेदित्यत्र यात्राद्यष्टौ स्वराः ॥ तेषां कस्य बलेन दिशं पंचमीं मृतां वर्जयेत् ॥ किमपि नोक्तम् । अत एव ज्ञायते कवेरभिप्रायः । वर्णस्वरादेव यो वर्णस्वरो यस्य तस्य सा दिक् । तत्पंचमीं वर्जयेत् । यथा देवदत्तस्य वर्णस्वर ओकारः । ओकारस्य मध्ये स्थितिः मध्यात्प्रादक्षिण्येन

देवदत्तस्य पंचमी दिक् उत्तरा देवदत्त उत्तरां यात्रां युद्धे विवादे च सर्वदा वर्जयेत् । संग्रामे सेनामध्ये तां दिशं न समाश्रयेत् ॥ २ ॥ अथ दिक् स्वरोस्तमिते प्रश्नफलमाह पृच्छक इति ॥ ३ ॥ इति दिशास्वरचक्रम् ।

तिथ्यादावुदयं याति तिथिस्वराद्घटीस्वरः ॥ बालस्वरादिकः प्रश्ने फलं तस्य वदाम्यहम् ॥१॥ तिथिभुक्तघटीसंख्यां कृत्वा पलमयीं ततः॥ ऋक्षवह्नि ३२७ हृते शेषे स्वरतत्कालसंभवः ॥ २ ॥ यदुद्दिश्य कृतः प्रश्नः फलं तस्य प्रजायते ॥ यत्र नोद्दिश्यते किंचित्तत्र प्रष्टुः शुभाशुभम् ॥ ३ ॥

तिथ्यादाविति । तिथ्यादौ तिथिप्रारंभसमये तदादितो यः तिथिस्वरः तस्मात्स्वरात्सार्द्ध । ५ । २७ ॥ पंचघटी । स्वर उदयति चेत्प्रष्टुर्यस्य बालकुमारादिलक्षणो घटीस्वरो भवति तस्य प्रष्टुः फलं ब्रवीमि ॥ १ ॥ तत्करणमाह ॥ तिथिभुक्तघटीति । चैत्रशुक्लप्रतिपदि अस्वरस्योदयः । तिथिभुक्तसंख्या घट्यः पंचदश १५ तस्य पलानि नव शतानि ९०० ऋक्षवह्नि ३२७ हृतानि लब्धं स्वरद्वयम् २ शेषम् २४६ शेषे अकारात्तृतीयस्वरः उदितः यदि देवदत्तेन प्रश्नफलवक्तृसमीपात् प्राक्दक्षिणे पश्चिमे वा उत्तरेऽवस्थितेन प्रश्नःकृतः सर्वतोभद्रचक्रोक्तलक्षणेनास्तमिता दिक । यत्कार्यमुपलक्ष्य प्रश्नस्तदा तत्कार्यहानिर्वक्तव्या । संग्रामादिसाहसकर्मणि भयभंगः युद्धे मृत्युर्नैरुज्यप्रश्ने मृत्युः इत्यादीनि वदेत् ॥ २ ॥ अथवा सा दिक् बालाद्या तदर्थमाह । यदुद्दिश्य इति । यदि देवदत्तेनान्यमुद्दिश्य प्रश्नः कृतः यज्ञदत्तस्येदं कार्यं भविष्यति । तदा यज्ञदत्त स्वरवशेन बालाद्यादिदिशमवधार्य फलं ब्रूयात् । यदि लाभादिकं नोक्तं कस्याप्यभिधानमपि न । तदा देवदत्तस्यैव नामस्वरवशेन अस्तमितबालादिदिशं ज्ञात्वा फलं ब्रूयात् ॥ ३ ॥

बालोदये यदा पृच्छा लाभार्थे स्वल्पलाभदा ॥ रुजार्ते चिररोगं च गमे हानिः क्षयं रणे ॥ ४ ॥ कुमारोदयवेलायां लाभो भवति पुष्कलः ॥ रुजो नाशं जयं युद्धे यात्रा सर्वत्र सिद्धिदा ॥ ५ ॥ युवोदये भवेद्राज्यं क्लेशच्छेदं च तत्क्षणात् ॥ संग्रामे शत्रुहंता च यात्रा च सफला भवेत् ॥ ६ ॥ वृद्धोदये न लाभः स्यात् क्लेशिनां क्लेशवर्धनम् ॥ संग्रामे भंगमायाति यात्रायां न निवर्तते ॥ ७ ॥ मृतोदये यदा प्रष्टा पृच्छति स्वं प्रयोजनम् ॥ तत्सर्वं मृत्युदं ज्ञेयं युद्धे मृत्युः सभंगकः ॥ ८ ॥ ओजस्वराः पुमांसः

स्युः स्त्रियो युग्मस्वरान् विदुः ॥ स्वस्वस्वरोदये जाते पुंसां स्त्रीणां बलं भवेत् ॥ ९ ॥ गर्भार्थे पुंस्वरे पुत्रः कन्या कन्यास्वरोदये । युग्मे युग्मं क्षयं नष्टे मातुर्मृत्युश्च संक्रमे ॥ १० ॥ द्युनाडीस्वरयोः पुंसोः पुंयुग्मं स्त्रीयुगं स्त्रियोः ॥ तयोस्तु पुंस्त्रियोः पुंस्त्री युग्मं गर्भे विनिर्दिशेत् ॥ ११ ॥ इति यामले तात्कालिके स्वरचक्रे प्रश्नभेदाः ॥

अथ बालादिस्वरबलमाह । बालोदयेति ॥ ४ ॥ कुमारेति ॥ ५ ॥ युवोदयेति ॥ ६ ॥ वृद्धोदयेति ॥ ७ ॥ मृतोदयेति ॥ ८ ॥ अथ स्वराणां संज्ञांतरमायप्रश्नमाह । ओजस्वरा इति । ओजस्वराः अ उ ओ एते त्रयो विषमाः पुमांसः पुरुषाः । समस्वराः इ ए अन्येपि समस्वराः योषित् स्त्रीसंज्ञकाः । स्वस्वस्वरोदये विषमाख्यः पुरुषस्वरोदये पुंसां बलं भवति । स्त्र्याख्यसमस्वरोदये स्त्रीणां स्त्रीजातीनां बलं भवति । एतावत् । स्वस्वस्वरोदये तत्तदाख्यकार्याणि सिद्धिं यांति ॥ ९ ॥ तद्बलात् पृथक् प्रश्नमाह गर्भार्थे इति ॥ प्रष्टा पृच्छति । अस्मिन् गर्भे पुत्रः पुत्री वा भविष्यति तस्मिन्सति तत्काले अकारस्य उकारस्य ओकारस्योदयो भवति तदा पुत्रो भविष्यतीति वाच्यम् । तत्काले इ ए अनयोरुदयस्तदा गर्भप्रश्ने कन्या वाच्या । युग्मे युग्ममिति । पुंस्त्र्याख्यस्वरोदये युग्मं वदेत् । नष्टे स्वरोदये अस्तमिते पापविद्धे गर्भस्य नष्टता वाच्या । संक्रमे पुंस्त्र्याख्यस्वरोदये समाप्तौ मातुर्मृत्युर्वाच्यः ॥ १० ॥ अथ युग्मस्वरोदये प्रकारमाह । द्युनाडीति । द्युस्वरस्तिथिस्वरः । नाडीस्वरस्तत्काले पञ्चघटिकात्मकांतरोदयस्वरः तौ यदि विषमौ पुंसंज्ञकौ भवतः तदा पुत्रद्वयं वदेत् एवं स्त्र्याख्यौ दिनस्वरनाडीस्वरौ तदा कन्याद्वयं वदेत् ॥ तौ यदि पुंस्त्रियौ तयोरेकः पुमान् एकास्त्री तदा पुत्रकन्ये भवत इति वदेत् । अनयोरेकस्मिन्नष्टे तस्य नष्टता स्वरस्य नष्टता । अस्तमितलक्षणेन ग्रहवेधेन वा ॥ ११ ॥ इति नाडीस्वरे प्रश्नभेदाः ॥

जन्मर्क्षे जन्मपादो यस्तद्वर्णे योक्षरः स्वरः ॥ तेन नाडीस्वरो ज्ञेयः स्वभावः प्राणिनामिह ॥ १ ॥ चपलः कातरो मूर्खः कृपणश्चाजितेंद्रियः ॥ असत्यो बहुभाषी च जातो बालस्वरोदये ॥ २ ॥ व्यवसायी कलाभिज्ञः स्त्रीरतः सुभगः सदा ॥ दीर्घायुर्विग्रही शूरः कुमारोदयसंभवः ॥ ३ ॥ सर्वलक्षणसंपूर्णो राजा भवति धार्मिकः ॥ सार्वकालं जयी युद्धे जाते युवोदये शिशुः ॥ ४ ॥ स्त्रीजितो धार्मिकः कामी विवेकी स्थिरसाहसः ॥ सत्यवादी सदाचारः

पुमान्वृद्धोदयोद्भवः ॥ ५ ॥ क्लेशीसमत्सरः क्रूरो निष्कर्मो विकलेंद्रियः ॥ सर्वकार्यालसी दुष्टो जन्मर्क्षस्य मृतोदये ॥ ६ ॥ इति यामले तात्कालिके स्वरचक्रे जातस्य शुभाशुभनिश्चयः समाप्तः ॥

॥ स्वरप्रकरणे विशेषः ॥

| अ | इ | उ | ए | ओ |
|---|---|---|---|---|
| क १<br>छ ६<br>ड ११ | ख २<br>ज ७<br>ढ १२ | ग ३<br>झ ८<br>त १३ | घ ४<br>ट ९<br>थ१४ | च ५<br>ठ १०<br>द १५ |
| आ | ई | ऊ | ऐ | औ |
| ध<br>भ<br>व | न<br>म<br>श | प<br>य<br>ष | फ<br>र<br>स | ब<br>ल<br>ह१५ |

अथ जन्मनक्षत्रचरणवर्णवशात् फलमाह । जन्मर्क्षे जन्मपादेति । यस्य जन्मनक्षत्रस्य चरणे जन्म तच्चरणस्य ये वर्णाः । अ इ उ ए ओकृत्तिकेत्यादिचरणवर्णाः तद्वर्णे यः स्वरो भवति तत्स्वरवशात् जन्मकाले यो नाडीस्वरः तस्मिन् बालकुमारादिसंज्ञास्थापनीया । यथा देवदत्तस्य जन्म रेवत्याः प्रथमचरणे तत्र एकस्वरो विद्यते । जन्मनि नाडीस्वर उकार आसीत् । एकारवशतो नाडीस्वरः मृतसंज्ञो जातः तत्स्वभावेन जन्मफलम् ॥ १ ॥ बालकुमारादिनाडीसंज्ञकस्वरे जन्मफलमाह । चपलः कातर इति ॥ ॥ २ ॥ व्यवसायीति ॥ ३ ॥ सर्वलक्षणसंपूर्णेति ॥ ४ ॥ स्त्रीजित इति ॥ ५ ॥ क्लेशी समत्सरेति ॥ ६ ॥ इति तात्कालिकस्वरचक्रे जातस्य शुभाशुभनिर्णयः ॥

ककारादिदकारांताः पंचह्रस्वस्वरास्तथा ॥ बलिनः स्युः सिते पक्षे शेषाः सर्वे सितेतरे ॥ १ ॥ एकस्वरः पृथग्वर्णः पक्षयोरुभयोर्यदि ॥ तत्र पक्षबलं ग्राह्यं शुक्लकृष्णविभेदतः ॥ २ ॥ एकपक्षाक्षरे चैकः स्वरश्चेद्योधयोर्द्वयोः शुक्ले गौरोऽपरे कृष्णो युद्धे जयति निश्चितम् ॥ ३ ॥ पक्षवर्णस्वरैकत्वे कृष्णौ गौरौ भटौ यदि ॥ स्वरासन्नाक्षरो ह्रस्वो दीर्घो दूराक्षरो जयी ॥ ४ ॥

अथ भटयोर्द्वंद्वयुद्धे विशेषमाह । ककारादीति । शेषाः आईऊऐऔअं इत्यादयः सप्तदीर्घाः धनपफबभमयरलवशषसहेत्यादयो वर्णाः कृष्णपक्षे बलिनः । स्वस्मिन् स्वस्मिन् पक्षे स्वस्वजयः । येषां योधानां ककारादिदकारांता वर्णा अइउएस्वराश्च नाम्नि आदौ भवंति तेषां बलं सितपक्षे भवति ॥ एवं शेषैरपि कृष्णपक्षे बलं ज्ञेयम् ॥ ॥ १ ॥ अथ योधयोः स्वरवर्णैक्ये पक्षबलं सममेव । तत्र योधस्य जयार्थं किं बलं देयमित्याह । एकः स्वरः पृथक् वर्ण इति योधयोः सितपक्षस्वरः एक एव वर्णो यदि तदा पक्षबलं शुक्लपक्षे गौरवर्णस्य बलम् । अथ कृष्णपक्षोक्तस्वरवर्णयोधयोर्यदि तदा यः कृष्णवर्णः स जयी कृष्णपक्षे शुक्लपक्षे गौरवर्णः ॥ कृष्णपक्षे वर्णाद्यो भवति कृष्णश्च

शुक्लपक्षवर्णः स्वराद्यस्तदा पक्षे जयपराजयौ तुल्यौ ॥ २ ॥ अयमेवार्थः प्रकटयति । एकपक्षाक्षर इति ॥ शुक्लपक्षवर्णा यदि कृष्णपक्षस्वराः योधयोः कृष्णपक्षवर्णाः शुक्लपक्षस्वराः एवं योधयोर्यदि तदा शुक्ले गौरो जयी भवति (कृष्णपक्षे कृष्णो जयी भवति । अत्र वर्णानमेव प्राधान्यम् न स्वराणाम् । यतः शुक्लकृष्णयोरपि वर्णत्वम् ॥ ३ ॥ अथ पक्षस्वरवर्णगौरकृष्णभेदतुल्ये सति जयप्रकारमाह । पक्षवर्णस्वरैरिति । स्वरवर्णगौरकृष्णैकत्वे सति यः स्वरासन्नवर्णो ह्रस्वो गौरो वा कृष्णो वा स जयी भवति । दीर्घो योधयोर्द्वयोः उच्चस्वरो दूरवर्णश्च एवं द्वयोर्यः स जयी भवति । अथोदाहरणम् । योधयोरेकस्य नामवर्णः ककारः ह्रस्वः । अन्यस्य खकारो द्वावपि तुल्यप्रमाणौ ह्रस्वौ द्वावपि दीर्घौ तदा कवर्णो भटो जयी भवति । ह्रस्वौ द्वावपि द्वावपि दीर्घौ यतः ककारः स्वरनिकटे ॥ अथवा द्वावपि दीर्घौ तदा खकारवर्णभटो जयी । अथवा खकारगकावर्णाभ्यां भटयोर्नाम तदा स्वरासन्नः ह्रस्वयोर्मध्ये खकारवर्णभटः गवर्णभटं जयति । दीर्घौ तौ तदा गकारभटः खकारभटं जयति । एवं वर्णस्वरचक्रे ह्रस्वदीर्घयोः स्वरासन्नदूरवर्णैर्जयं बलं दद्यात् ॥ ४ ॥

> प्रमाणनामवर्णैक्यं युद्धकारकयोर्यदि ॥ तत्र युद्धे बलं देयं यायिस्थायिविभेदतः ॥ ५ ॥ योधयोः सर्वभेदैक्ये स्वरे यूनि कुमारके ॥ यायी जयी तथा स्थायी बालवृद्धांतिमस्वरे ॥ ६ ॥ आद्ये तिथौ त्रयो वर्णा द्वौ द्वौ वै शेषयोर्यदि ॥ एवं तिथित्रये ज्ञेया वर्णसंख्या तिथिस्वरे ॥ ७ ॥ वर्णतिथ्यादितिथ्याख्याजन्महानिर्मृतिस्तथा ॥ भीर्जन्मनि रुजा हानौ मृतौ मृत्युर्न संशयः ॥८॥
> इति यामले स्वरप्रकरणे विशेषनिर्णयः ॥

अथ शुक्लकृष्णपक्षादिबलमारभ्य दीर्घो दूराक्षरो जयी आसन्नार्थे तयोः सर्वभेदतुल्यतायां जयोपायमाह । प्रमाणनामवर्णेति । सर्वभेदतुल्यतायां स्थायियायिभेद एव जयोपायः । अथ सर्वभेदजये यस्याधिको न जये भेदलाभो भवति । तथा चायं द्वंद्वयुद्धं कारयेत् । स्वस्य योधस्य बहुभेदबलानि देयानि पश्चात्स्थायियायिभेदेनाधिकं कुर्यात् ॥ ५ ॥ अथ स्थायियायिबलमानमाह । योधयोःसर्वभेदेति । द्वयोर्योधयोः पूर्वोक्ते सर्वजयभेदैक्ये तुल्येसति यायी जयी भवति । कुत्र जयी भवतीत्याकांक्षायां यूनि कुमारके स्वरे सति तत्काले नाडीस्वरे यूनि कुमारे वा प्राप्ते यायी बलमाश्रयेत् । बालवृद्धान्तिमे बालवृद्धमृतस्वरे युद्धकाले स्थायी जयति । स्थायी बलं समाश्रयेदित्यर्थः । पुनः स्थायियायिबलं पुनरुक्त्या प्रकटयति । कुमारयुवयोर्यायी जयी भवति नापरः बालवृद्धांतिमे स्थायी जयी भवति जयिनोऽजयिनो जयपराजयावेवम् ॥६॥ अथ सर्वकाले सर्वकार्ये तिथिविशेषमाह । आद्ये तिथाविति । पश्चात्तिथिप्रधानस्वरो नोक्तः ।

अधुना उच्यते । अकारे नंदात्रयः । तत्राकारादिकोष्ठे सप्त वर्णाः । अकछडधभवाः । तत्र प्रतिपदि अकछा वर्णात्रयः । षष्ठ्यां डधौ वर्णौ । एकादश्यां भवौ वर्णौ । इति विभागः । एवमिकारादिषु तिथीनां विभागः ॥ ७ ॥ अथास्मिन् चक्रे को विचार इत्याह । वर्णतिथ्यादि इति । तिथिवर्णादौ स्वस्वचक्रे तिथ्याख्यातिथीनां तिसृणामाख्या नाम भवति । किं तन्नामेत्याह । जन्महानिर्मृतिस्तथा । अद्यतिथिरेव जन्मनाम भवति । द्वितीयस्य हानिसंज्ञा तृतीयस्य मृतिनाम । एतदुक्तं भवति । अकछा यस्य नामवर्णास्तस्य प्रतिपज्जन्मसंज्ञा । षष्ठी तस्य हानिसंज्ञा । एकादशी मृतिः । यस्य डधौ वर्णौ तस्य षष्ठी जन्मसंज्ञा । एकादशी हानिः । प्रतिपन्मृतिः । यस्य भवौ वर्णौ तस्यैकादशी जन्मसंज्ञा । प्रतिपद्धानिसंज्ञा । षष्ठी मृतिः । एवमिकारादिषु वर्णतिथिसंज्ञा कल्प्या । अथ त्रयाणां फलमाह । भीर्जन्मनि । जन्मसंज्ञतिथौ भीर्भवति । संग्रामाद्यशुभकर्मणि हानौ तिथौ रुजो भवंति । मृतौ तिथौ मृतसंज्ञेतिथौ मृत्युर्भवति । अथ सर्वासां तिथीनामनिष्टफलश्रवणात् किमपि कर्म न कर्तव्यमिति । कालत एव नास्ति । तत्र तिथिर्नास्तीति विचार्य कवेरभिप्रायं व्याख्यास्यामीति । आद्ये तिथौ त्रयो वर्णाः तिथिचक्रमिदं नामवर्णवशात् । मृतसंज्ञेषु तिथिषु जन्महानिमृतिसंज्ञातानष्ट दष्टरुग्णशत्रूसमागमादिषु मृततिथिफलमिदं बोद्धव्यमिति ॥ ८ ॥ एतावत्स्वरप्रकारचक्राणि समाप्तानि ॥

यदुक्तं यामले तंत्रे ज्ञातं गुरुप्रसादतः ॥ स्वराद्दिनफलं वक्ष्ये पुंसां कर्मप्रकाशकम् ॥ १ ॥ योगपिंडर्क्षराश्याख्यजीवखेटाक्षरस्वरान् ॥ उत्पाद्य नामतश्चाष्टौ मात्रां तान् स्थापयेत्क्रमात् ॥ ॥ २ ॥ तस्याधस्ताल्लिखेच्चाष्टौ द्वादशाब्दादिकान्स्वरान् ॥ स्वस्वभोगेन संयुक्तान् भोगश्चैकादशांशकः ॥ ३ ॥ यथोत्तरबला योगादिकाः कालस्वरास्तथा ॥ कालोदयस्वराश्चापि ज्ञातव्याः स्वरवेदिभिः ॥ ४ ॥ अकारादिस्वराधःस्थां संख्यां वेद ४ प्रमाणिकाम् ॥ विन्यस्य क्रमयोगेन ते च विंशोपकाः स्मृताः ॥५॥

अथ नामजकालजस्वरमुत्पाद्य तैः षोडशस्वरैर्दिनफलं वक्तुं दिनचर्याप्रकारमाह । तदुक्तमिति । सुगमम् ॥ १ ॥ योगपिंडर्क्षेति । सुगमम् ॥ २ ॥ तस्याधस्ताल्लिखेदिति । आदौ योगस्वरं स्थापयेत् । ततः पिंडर्क्षराश्याद्यान् स्थापयेत् । तेषामधो द्वादशाब्दादिकालजान् स्थापयेत् तत्र योगस्वरकोष्ठकाधः द्वादशाब्दकालजं स्वरं स्थापयेत् । पिंडस्वरादधो वार्षिकस्वरं स्थापयेत् । नक्षत्रस्वराधोऽयनस्वरं स्थापयेत् । राशिस्वराध ऋतुस्वरं स्थापयेत् । जीवस्वरादधो मासस्वरं स्थापयेत् । ग्रहस्वरादधः पक्षस्वरं स्थापयेत् । वर्णस्वरादधः स्तिथिस्वरं स्थापयेत् । मात्रास्वरादधो नाडीस्वरं स्थापयेत् । तदधः किं

स्थापयेदित्याह । स्वस्वभोगेन संयुक्तानिति । द्वादशवार्षिकादिस्वराधः एकादशांशिकांतरोदय-स्वरभोगात् वर्षमेकं मासमेकं दिनद्वयं लोकाब्धिनाडिका अष्टत्रिंशत्पलानीत्यादीन् स्वस्वभोगात् स्वस्वाधः स्थापयेदित्यर्थः ॥ ३ ॥ अनिर्णीतफलकथनाय नामजानां कालजानां स्वराणां यथोत्तरबलमाह । यथोत्तरबला योगा इति ॥ ४ ॥ अकारादि स्वराधःस्थामिति ॥ अ ४ इ ४ उ ४ ए ४ ओ ४ ॥ एवंयोगेन विंशतिः २० ॥ ५ ॥

योगाद्द्वादशवर्षे स्युरवस्थाः पिंडतोऽब्दके ॥ भस्वरादयने ज्ञेया राशिस्वरादृतुस्वरे ॥ ६ ॥ जीवान्मासस्वरेवस्था गृहात्पक्षस्वरे तथा ॥ वर्णाद्दिनस्वरे ज्ञेया मात्रास्वराद्घटीस्वरे ॥ ७ ॥ द्वादशाब्दादिकः कालो यात्राकारादिकस्वरे ॥ स्थितस्तत्र शुभो न स्यात्पंचावस्थाः शुभोपि च ॥ ८ ॥ स्वरौ वृद्धांतिमौ दुष्टौ बालपूर्वदलं तथा ॥ शेषं सार्धद्वयं भव्यमिति ज्ञेयाः शुभाशुभाः ॥ ९ ॥ द्वादशवार्षिकाद्या ये स्वांतरोदयसंस्थिताः ॥ ते शुभा एकतः स्थाप्या अशुभास्त्वन्यतः पृथक् ॥ १० ॥ शुभाशुभस्वरूपस्य राशियुग्मस्य मध्यतः ॥ एकस्मात्पतिते शेषे ज्ञेयं तद्दिनजं फलम् ११ ॥

योगांतद्वादशे वर्षेति ॥ ६ ॥ जीवान्मासस्वरेति ॥ ७ ॥ द्वादशाब्दादिकः काल इति ॥ ८ ॥ स्वरौ वृद्धांतिमाविति ॥ ९ ॥ द्वादशेति ॥ १० ॥ शुभाशुभेति ॥ ११ ॥

त्रिंशत्या ताडिते शेषे चतुःषष्ट्या विभाजिते ॥ लब्धा विंशोपकास्तत्र शुभाशुभप्रकाशकाः ॥ १२ ॥

विंशत्येति । अथोदाहरणद्वारेण फलितार्थं यथाज्ञानं तत्कारणं दर्शयामि "लिखेदूर्ध्वेनवोर्द्धगा रेखाश्चतस्रस्तिर्यगास्थिताः । नामजान् कालजांश्चाष्टौ तत्रोक्तविधिना लिखेत् ।" तत्र देवदत्तस्य दिनचर्या । अत्र शुभाशुभराशिद्वये विचारः अथ शुभपक्षे योगस्वरादुकारात् द्वादशवार्षिकांतरोदय उकारः युवा तस्य संख्या ४ क्षत्रस्वरोऽकार अयनस्वर इकारः कुमारस्तस्य संख्या ४ राशिस्वर ओकारः तद्वशात् ऋतुस्वरः अकारः कुमारः तस्य संख्या ४ जीवस्वरः अकारस्तद्वशान्मासस्वरो युवा तस्य संख्या ४ तदंतर्दशा हि युवा ४ वर्णस्वर उकारः तद्वशाद्दिनस्वरः कुमारः तस्य संख्या ४ अत्र स्वरोदयोपि युवा तस्य संख्या ४ मातृकास्वर एकार तद्वशाद्घाटीस्वरो युवा तस्य संख्या ४ अंतरोदयोपि युवा ४ एवं शुभ संख्या ३६ अथाशुभपक्षे

योगस्वर उकारस्तद्वशात् द्वादशवार्षिकस्वर इकारो मृतः तस्य संख्या ४ पिंडस्वरो नकारस्तद्व-शात् वार्षिक इकारो वृद्धस्तस्य संख्या ४ अंतरोदये उकारः स तु मृतः तस्य संख्या ४ ऋस्वरः अकारः अंतरःवरोदय उकारो मृतस्तस्य संख्या ४ राशिस्वर उकारस्तद्वशात् ऋक्षं-तरो वृद्धस्तस्य संख्या ४ ग्रहस्वर उकारस्तद्वशात् पक्षस्वरो नृपांतरोदयौ मृतौ तत्संख्या अष्टौ ८ एवमशुभसंख्या अष्टाविंशतिः २८ शुभसंख्या ३६ शुभाशुभयोरंतरे शुभपक्षस्य शेषं शुभ-संख्या ८ विंशत्या ताडिते शेषे चतुःषष्टिः ६४ विभाजिते । अनया प्रक्रियया गुणिते जातम् १६० चतुःषष्ट्या ६४ लब्धं २ । ३२ पदार्द्धं शुभं फलम् । किं तच्छुभफलं तद्विचार्य लिख्यते । कविना नोक्तम् । शुभपक्षे युवाद्वादशाब्दांतरोदयः । मासस्वरो युवा । अंतर्दशायु बादीनांतरोदयनाडीस्वरयुवा नाड्युदयोपि युवा अंतरोदयोपि शुभपक्षे यूना स्वराः पंच युनां ये निसर्गवलिनस्ते ग्राह्याः तत्र योगस्वरान् यथोत्तरवलिना नाडीस्वरो नाडीस्वरस्य अधिपति-मात्रास्वरः । मात्रायां स्त्रीजनात्फलं वदेदिति ग्रंथकारः । देवदत्तस्य चैत्रशुक्लप्रतिपदि आरंभ समये सार्द्धपंचघटीषु शुभफलं भविष्यतीति पादार्द्धं किं तच्छुभफलम् । आकांक्षा अपूर्णैव स्थिता । अथास्य शास्त्रस्य परमप्रयोजनं दिग्विजयिनां राज्ञां विजयः । यैर्यैर्भूबलादिभिर्विजयो भवति चातुरंगसंग्रामं जयति । यानि भूबलान्यावश्यके न गृह्याणि तान्यस्मिन्नेव स्वरोदये अंत-रांतरोक्तानि एकत्रकृत्वाऽनुभूतानि लिख्यते । प्रथमतो नामवर्णवलात् यद्यपि मात्रादयः स्वरा उक्तास्तथापि तेषां वर्णस्वर एव प्रधानः मात्रादयो राज्ञां द्वादशवर्षाभ्यंतरे दिनफलकथनार्थं कथिताः । तथा च स्वरोदयकारेणैवोक्तम् वर्णस्वरसामर्थ्यम् ' सर्वकालं वली वर्णः' इति । द्वंद्वयुद्धार्थे चापि वर्णस्य समार्थ्यमुक्तम् । तथा च ककारादि इति इत्यादिना द्वंद्वयुद्धे वर्ण-स्वरबलादेव जय उक्तः । अथादौ पंचस्वराणां दिग्वलं ग्राह्यम् । पूर्वस्मिन्नस्वर स्वामी इति । यस्यां दिशीति । विशेषत इत्यंतम् । अथान्यत्स्वराणां बलं मृतो वृद्धस्तथाबाल इति । यो यस्येति । मृत्युर्हीनेति एकमात्रेति पारगैरित्यन्तम् । अथान्ययुद्धे बलाबलम् । शत्रो-र्मृत्युः स्वरेति नान्यथेत्यंतम् । अथ द्वंद्वयुद्धे बालादिपंचस्वराणां बलाबलम् । मृतो बाल-स्तथेति एकत्र तिथिवारर्क्षैः कुमारैस्तरुणस्वरैः यद्दिने जयदा त्याज्या बालवृद्धांतिमस्वराः । अन्यद्बलाबलम् प्रमाणनामवर्णैक्यमिति । कुमारयुवयोर्यायीति । "प्राक् क्षेत्रगो भवेद्यायी पश्चाद्गामी स्थिरः स्मृतः । प्राग् घाती चापि यायी स्यात्पश्चाद्घाती परःस्मृतः । यायी काले जयं यायी लभते नात्र संशयः । स्थायी स्थिरेऽन्यथा हानिं स्वकालादितरेतरैः । पूर्वादिदिक् स्वरगतः सुखं यूनि जयो भवेत् । जयः सथातः स्यादाद्यः शेषयोरजयो भवेत् ।" अथा-न्यद्बलम् । "पृष्ठेऽर्के पुरतश्छाया दक्षिणेऽर्केथ वामगा । जयी यायी वहत्यर्के जयी

## ॥ दिनफलस्वरचक्रम् ॥

| योग | पिंड | नक्षत्र | राशी | जीव | ग्रह | वर्ण | भांश |
|---|---|---|---|---|---|---|---|
| द्वाद. १२ | वर्ष १ | अयन ६ | ऋतु ७२ | मास ३० | पक्ष १५ | तिथि ६० | घटी ५।२७ |
| १. | ० | ० | ० | ० | ० | ० | ० |
| १ | १ | ० | ० | ० | ० | ० | ० |
| २ | २ | १६ | ६ | २ | १ | ० | ० |
| ४३ | ४३ | २१ | ३२ | ४३ | २१ | ५ | ० |
| ३८ | ३८ | ४९ | ४३ | ३८ | ४९ | २७ | ३० |
| ० | अ ४ | इ ४ | उ ४ | ए ४ | ऊ०४ | ० | ० |

स्थायी विधुस्वरे। वामाग्रगा शशिच्छाया यातुश्चंद्रवहे सति। जयः सूर्यवहे स्थातुः क्षयो वामे शुभः शशी। "अथान्यद्वलं" समरसारे "प्राचीमुदीचीं वा चंद्रेति"।"प्राक् सौम्यवह्निराक्षसयमपश्चिममरुच्छिवांते च। तिथिवृत्तिथिपदमस्थात्प्रहरार्द्धं राहुयोगिनी जयदा"। पृष्ठे दक्षे योगिनीराहुयुक्तेति। अथान्यो योनिनीराहुः। "रमगुवुशुशचवाराः पूर्वतोस्माद्दिगीशादूभ्रमति युगयुगा ४ शा भुक्तिदंडेन शुक्रे। अहनि निशि च वामे शुक्रवामेन कृष्णे रिपुबलशतहंता पृष्ठगश्चाप्रहर्ता। नागा ८ ग्नि ३ रस ६ रूपा १ ब्धि ४ नगाश्च प्रहरार्द्धकैः। कालाः सूर्यादिवारेषु वर्जनीया कवौ रणे। समुद्रा ४ द्य ७ क्षि २ पंचा ५ हि ८ गुण ३ र्तु ६ प्रहरार्द्धकैः। सूर्यारिज्यबुधाः शनीयमनिशानाथाह्वयाः पूर्वतः सव्ये स्थानपतेर्धनत्यगुरसौ शुक्रे च चतुर्थे दिशि। यामार्द्धेन चरत्ययं निशि दिने गत्या पुनर्वामया पक्षे चासितसंज्ञके हि जयदो दक्षे च पृष्ठे तमः॥ भानुवारक्रमादेते वर्जनीया जयार्थिभिः"। समरसारे। वारेशमैंद्र्यां विनिवेश्येति। वारप्रवृत्तेर्घटिकाद्विनिघ्नेति। स्वराश्याधिपखेटस्य वैरिहोरोदये रणम्। वर्जयेत्सुभटावश्यं द्वंद्वे कोटौ कवौ सदा। शुक्रारशनिसूर्याणामीशानादिषु राशयः। ज्ञस्य वायौ प्रतीचींदोर्नैर्ऋत्योदग्गुरोर्गृहम्। द्वितीययामार्द्धत एव सूर्यः प्रत्यक्क्रमाद्धंति ततस्तृतीयाम्। यामे च यामे च पुनस्तृतीयां प्रागंत्यखंडेन यमोत्तराशे। ईशादिकोणं रविवन्निहंति प्रदक्षिणं शीतमयूखमाली। यामे तृतीयां च ततस्तृतीयद्वितीययामं विनिहंति याम्याम्। गूढाख्यप्रहरार्द्धेन हंति चंद्रोग्निदिक् क्रमात्। हिता यात्राभिमुख्येन हित्वा षष्ठीमसंगरः। प्रागादीशा रविसितकुजराहुयमेंदुसौम्यवाक्पतयः। यस्यां वासरनाथस्तद्दिग्योधो रिपुं हंति। हंति सूर्यः शनिं शुक्रो बुधं हंति कुजो गुरुम्। तमोर्कमर्कजो भौमं शशी शुक्रं विधुं गुरुः। या दिक् प्रहर्तव्या दिग्नाथहतदिग्गजा। दिग्नाथकालहोरायां वासरे च विशेषतः। विरुद्धप्रहरार्द्धराहुशशिसूर्यगूढाख्यायां रविबलचंद्रबलहोरादीनामप्राप्तबलस्य घातमाह। समासारग्रंथे। वामांसेत्रविरुद्धयामदलजेति। अथ यस्य योधस्य जन्मराशेर्जन्मोदयाद्वा यत्संख्ये स्थाने ग्रहा भवंति तद्वशात्तदंगे घातमाह। लग्नाद्राशेश्च पुंसः शशि १ रवि १२ शि ११ दिक् १० व्योमगो ९ द्वीपं ८ वेद ४ स्थानेष्वर्थ ५ र्तु ६ संस्था रविशशिकुजवित्पूज्यशुक्रादिखेटाः। घातं कुर्युर्यथोक्ताःशिरसिच वदने हृत्प्रदेशे स मूर्ध्नि वक्षस्यूरुप्रदेशे गुद इति तदनु ग्रंथिदोर्गंडभागे। शनिचंद्रौ गुरुः सूर्यसितौ कुजबुधौ त्यजेत्। प्रागादिषु निषिद्धार्द्धयामे शूलं

विशेषतः । द्वंद्वयुद्धे मातृकायाम् । द्वादशोदूर्ध्वालिखेद्रेखाः षट्६ रेखास्तिर्यगाश्रिताः । नपुंसकां-स्वरहितान्स्वरान्वर्णान् लिखेद्बुधः कचवर्गांतरहितानंकांश्चाधो लिखेत् क्रमात् । बाणा ५ । ५ वह्नी ३ । ३ ऋतू ६ । ६ । नागा ८ । ८ । ८ । ९ । नंकानंते ९ ग्रहं लिखेत् । योधयो-र्वर्णमात्राणां संख्यां कुर्यात्पृथक् पृथक् । द्विशेषैका १ जयीशून्ये शेषे योधः पराजयी । अष्टभि ८ र्भाजिते प्राप्ते योर्यदि शेषके । शून्यं० वेदा ४ रसा ६ बाणाः ५ शैला ७ रामा ३ माभु-वोभुजः मातृकायां क्रमाज्जेता पश्चादग्राग्रगो भटः । यस्य वेदा ४ जयी योधः शेषयोः शून्य-वेदयोः । वेदर्त्वो ४ । ६ जयिनः षट् स्युर्बाणजेता रसार्थयोः ६ । ५ ॥ शैलार्थयोर्जयी शैल, ५ । ७ शैलास्यो ३ । ७ विजयी शुचिः । जयभाग्धरणी ज्ञेया संग्रामे गुणरूपयोः ३१ । सर्वे स्माज्जयिनौ वाहू किं पुनर्बाहुरूपयोः ॥ १ ॥ २ ॥ प्राग्वत्षड ६ ग्नि ३ भुज २ वेद ४ मतं-गज ८ र्तु ६ खेटा ९ ब्धि ४ वह्नि ३ गगनं० जित योनिषत्काः । वर्णादधो नरभिती रहिते द्विरूपैः ११ जेता स एव बलपोऽष्ट ८ हृतेधिको यः । अथ चक्रद्वयम् सेनापतिः कार्यो द्वितीये शत्रुपायनम् । अथ बलानां नियममाह । " स्वरच्छायानिलार्केन्दुयोगिनीराहुभूबलम् । प्राप्य युद्धाय तिष्ठेत नान्यथा बलवत्तरम् " । स्वराः के । अकाराद्याः स्वराः पंच पूर्वाशादिषु संस्थिता इति । अथ छायेति । " पृष्ठेऽर्के पुरतश्छाया दक्षिणेऽर्केथवामगेति" । सूर्यचंद्रयोर्गूढ-च्छाया । पृष्ठस्थो वायुः सूचयेज्जयम् । अथार्केन्दुरिति प्राचीमुदीचीं वेति चंद्रभानुरिति । मासेंदोर्मासभानुरिति भानुबलम् । प्राक् सोमाग्नीत्यादियोगिनीराहुः । भूबलं किं क्षेत्रपाली प्रधानात्तदा । जयपराजयचक्रम् । द्वंद्वे हि बलम् । अथ स्वरोदयात् ग्रंथात् बलानि लिख्यन्ते " अ इ उ ए कृत्तिकाद्यं होडाचक्रं प्रतिष्ठितम् । द्वंद्वयुद्धे महाहवे । कवौ कोटे च विद्वद्भि-श्चक्रमेतद्विचार्यते । आदित्यभुजमानर्क्षे योधयोर्यदि जन्मभम् । तद्दिनर्क्षे यदा युद्धं जायते विजयैषिणोः । चातुरंगे च कोटे च फलं तत्र वदाम्यहम् । भूपतेर्जन्मनक्षत्रे तज्जन्मचरणोदये । अर्काक्रांते यदा युद्धं जायते मृत्यवे हि तत् । अन्येषु त्रिषु पादेषु युद्धं घाताय केवलम् । घातः शिरसि वदने घातः स्याद्धृदयोदरे । यस्मिन्राशौ रविस्तस्मात् सप्तमो यदि योधयोः । राशि-स्तत्स्थे विधौ युद्धं घाताय मरणाय वा । दुर्गरोधे वधे देवं चातुरंगे कवावपि । यस्य कस्यापि योधस्य मृत्युं घातं वदेत्सुधीः । योधयोः सप्तमे राशौ सूर्याक्रांतभतोयदि । प्रकोष्ठेदक्षिणेंस्कंधेघातः शिरसि जायते । मुखात्प्रदक्षिणांगे तु दुर्गभंगः प्रजायते । कोटाधिपो वा म्रियते राजा वा युधि नश्यति ॥ ५ ॥ स तस्मात्सप्तमं योधो वर्जयेदर्कतः स्वयम् । अथान्यत्संप्रवक्ष्यामि होढाज्ञानेन सूर्यभात् । दशमे योधभे युद्धं तज्जन्मचरणोदये । मृत्युः स्यात्तस्य वातेन दक्षहस्तोदराद्भवः । द्वादशर्क्षे यदा युद्धं भास्करान्म्रियते भटः । यातेन हस्तौ भज्येते परं जीवति युद्धकृत् । रविभाद्योधभे युद्धं जायतेथ चतुर्दशे । जन्मपादोदये घाताद्बाहुपाताद्विनश्यति । तथा पंचदशे युद्धं सूर्यभाद्योधभं यदि । जन्मपादोदये बाह्वोः पतनान्म्रियते

भटः। एकोनविंशभेप्येवं संग्रामे म्रियते भटः । एकविंशति २१ मे युद्धं दक्षपादादि नश्यति । पृष्ठे वा जायते घातस्तत्रक्षेत्रे मृतो भटः । चतुर्विंशतिनक्षत्रे योधभं भानुभाद्यदि । जन्मपादे च दिक्संख्ये तुलावृषभयोर्मृतिः । द्वादशैकादशे १२ । ११ मृत्युर्मुहूर्ते मृगमीनयोः । मुहूर्तं वर्जमेदेषां रणे द्वंदे विशेषतः । सूर्यभाद्दशमे ऋक्षे द्वादशेऽथ चतुर्दशे । तिथ्येकींवशच्चतुर्विंशे सूर्यभाद्वर्जयेद्रणम् । १० । १२ । १४ । १५ । २१ । २४ । चतुर्भिर्घटिकाभिः स्यादुदयाद्योगिनी भ्रमः । प्राक् प्राच्यां १ धनदे २ वह्नौ ३ नैर्ऋत्ये ४ दक्षिणे ५ जले ६ । पवने ७ गिरिशे ८ त्वेषां भ्रमत्येव पुनः पुनः । यस्तूदयाख्यां जानाति चातुरंगे जयी भवेत् । योगिनी जयदा पृष्ठे दक्षिणे च सदा भवेत् । अथ तत्कालवारोदयः । "यस्मिन्नहनि यो वारस्तस्य भुक्तिरुदाहृता । चतस्रो घटिका ४ स्तस्मात्षष्ठः पुनरुदेति च । घटिकाभिश्चतसृभिर्ज्ञेयस्तत्कालवासरः । यथा सोमाद् शनिः षष्ठः शनेः सुरगुरुर्यथा । यस्य योधस्य यो राशिस्तस्य योधिपतिः स्मृतः ॥ तस्य वारे तदुदयप्रश्ने निष्फलतां व्रजेत् ॥ तत्कालदिननाथाश्चैद्वैरिणोश्चापि निष्फलम् । द्वंद्वयुद्धे रणे वापि प्रश्ने युद्धं पराजयम् । यथा यस्य जयो भंगो ज्ञायते च परिस्फुटम् । मेषादीनां च राशीनां ध्रुवकैः कथयाम्यहम् । रामाक्षा ५३ रामविशिखाः ५३ षड्रामा ३६ जलधीषवः ५४ । तिथयः १५ खाब्धयो ४० द्व्यब्धि ४२ पंचाक्षाः ५५ पंचभूमयः ॥ १५ ॥ षड्रामा ३६ षट्‌ सरिन्नाथाः ४६ षडक्षा ५६ ध्रुवका अमी । मेषादीनां क्रमाज्ज्ञेया योधयोर्ध्रुवयोर्युतिः । कार्या वह्नि ३ हृता शेषात्फलं वक्ष्यामि संगरे । प्राक्प्रहारी जयी द्वंदे द्विशेषे २ लभते जयम् । एकशेषे १ऽथवा शून्ये पश्चात् घाती जयं लभते । प्राक् प्रहारी पदान्पञ्चगत्वाग्रे प्रहनिष्यति । पश्चाद् घाती पदान्पंच पश्चाद्गत्वा हनिष्यति । द्वंद्वयुद्धे विशेषं च वक्ष्यामि किमपि स्फुटम् । यस्मिन् दिने निशानाथः समगो जन्मराशितः । यस्य योधस्य स जयं लभते नान्यभे मृतौ । जन्मपाद्रोदये पृष्ठे दक्षे घातोऽभिजायते । तस्माद्भटो मृतो वाच्यो रणे कोटेऽथवा कवौ । सप्तविंशतिनक्षत्रे सूर्यभाद्यदि योधभे । संग्रामे मृत्युमाप्नोति जन्मपादोदये भटः ॥" अथ दग्धतिथयो रणे वर्ज्याः । "कोदण्डाद्रिषमर्क्षेषु सचतुर्थेषु नाड्यपि । द्वितीयाद्याः समा दग्धाः स्थिते कमलबोधने । २ । ४ । ६ । ८ । १० । १२ । एताश्च तिथयो दग्धा वर्जनीयाः सदा रणे । मेषलग्नेऽजमरणं कन्यायां गोगृहस्य च । स्त्रीपुंसोः कर्कटे मृत्युस्तुलायां कर्कटस्य च ॥ सिंहस्य वृश्चिके मृत्युः कन्या मीने मृतिं लभेत् । तुलायां मिथुने मृत्युर्वृश्चिकस्य वृषे मृतिः । धनुषो वृषभे मृत्युर्धनुषि मकरस्य च । तुलायां कुंभमरणं मीनस्य मिथुने मृतिः । अथान्यत्संप्रवक्ष्यामि संयोगाद्वारवर्गयोः । पक्षी मरणमाप्नोति संग्रामे रविवासरे । मार्जारमृत्युश्चंद्रेह्नि भौमेह्नि मृगभूपतेः । शुनो बुधेह्नि मरणं नागानां गुरुवासरे । अश्वकानां भृगुदिने शनौ मृत्युर्गजाजयोः । अवर्गादिभटा युद्धे रविवारादिषु क्रमात् । तदर्द्धयामहोरायां वर्जयंति विशेषतः । उदयाद्द्विमुहूर्तेन मेषवृश्चिकयोर्मृतिः । परतो द्विमुहूर्तेन मिथुनाबलयोर्मृतिः । मुहूर्ते युग्मपरतो मरणं कर्कटस्य तु । कोदंडतौ-

लिसिंहानां मरणं परतो भवेत् । पादप्रभायां शशि १ संयुतायां द्विभाजितायां धरणी-१ समाजे । शक्रांतकस्थो मृतिमेति योधः शेषश्च तुल्ये विधुतो यदि स्थः । हरेदू यातभान्यंगरामा ३६ न्वितानि द्विपैः ८ शेषदिश्यन्तकः कीर्तितोसौ । शुभो दक्षिणां-गेऽथ पृष्ठे च वायुः पुरो वामभागे च भंगप्रदा स्यात् । शलाकासप्तके चक्रे मासर्क्षा-दिकतारके । प्रायश्चक्रे न्यसेन्मासधिष्ण्ये मासविधुं तथा । दिनभे दिनशीतांशुं तस्मा-त्तात्कालिकं विधुम् । सपादयुग्मघटिका २ । १५ भुक्तिः समुद्रयाद्भवेत् । मासेंद्रोर्हि-नशीतांशोश्चंद्रस्तात्कालसंभवात् । धिष्ण्ये पंचदशे १५ भानुं स्थापयेत्सर्वदा बुधैः । दक्षे पृष्ठे रविं कुर्याद्वाममग्रे निशाकरम् । जयतीह न सन्देह एकोऽपि शतमाहवे । अथ चरयोगिनी । ऐंद्रे समीरणदिशि त्वथ दक्षिणे च ईशे तथा वारुण अग्निकोणे । कुबे-रनैर्ऋत्यककुप्चतुर्भिर्नाडीस्थिता सा चरयोगिनीह" एवं प्रतिपदा द्वेद्वे घटिके दिशि दिशि तिष्ठति । "ईशानयाम्ये च तथा प्रभञ्जने शचीपतौ नैर्ऋतगुह्यकेश्वरे । कृशा नुकाष्ठावरुणे ककुब्भिर्नाडीद्वयस्था तिथियोगिनीह । जयदा यायिनां वामे स्थायिनो दक्षिणा भवेत् । उभयोर्जायते युद्धं योगिनी वामदक्षिणे । दक्षिणे जयदा प्रोक्ता वामे चैव पलायनम् । वामेथ सन्मुखे भंगो जयदा पृष्ठदक्षिणे ॥" अथ संग्रामे योगिनी । ऊर्द्ध पश्यति वाणभूपरि १५ मितं पादद्वयं खेंदुभि १० र्वामं बाहु विधुत्रिभिः ३१२ परमथो सव्यं च रामेंदुभिः १३ ॥ अग्रं नंदघटीभि ९ रप्यभिहितं पश्येत्सदा योगिनी दृष्टिं तां परिवर्जयंति विबुधाः सर्वार्थसिद्ध्यै सदा " अथ राहुः ॥ "शर्वांतके मरुच्छ-क्रस्क्षोयक्षाग्निपाशिनाम् । दले राहुर्भ्रमत्यह्वोपरेण च । वरुण ५ वह्नि ३ धनेश ७ निशाचर ४ त्रिदशनाथ १ मरु ६ यम २ शूलिनाम् ८॥ भ्रमति दिक्षु विशाशकलेन न प्रथमकेन ततोऽथ परेण च । दिक्स्वाद्येन जन्मनक्षत्रमारभ्य गणयेद्दिनभं बुधः । सूर्यनक्षत्रमारभ्य गणयेन्नामभं बुधः । नवभिस्तु हरेद्भागं शेषतो वाहनं वदेत् । गर्दभस्तुरगो हस्ती मेष-जंबूकसिंहकाः । काको मृगो मयूरश्च नवैते नरवाहनाः । गर्दभे धननाशः स्यादश्वे च विजयी भवेत् । गजे बहुगजावाप्तिर्मेषे भोगमवाप्नुयात् । जंबुके भंगमायाति सिंहे युद्धे जयो भवेत् । वायसे च भवेत्कष्टं मृगे कार्यं च सिद्ध्यति । मयूरे धनलाभः स्यात यात्रायाः फलमादिशेत् ।" इति वाहनचक्रम् । अथ वाराधिपान् खेटांल्लिखेत्प्राच्यादि-घृष्णगोः । यत्रात्मजो भवेत्तत्र कालपाशोहि पंचमः । दक्षे पृष्ठे शुभः कालः पाशो वामाग्रगः शुभः ।" अथ तात्कालकालः । रुद्रः ११ शरीरं कालस्य पात्रं वेदे ४ थ कर्त्तरि । षड्विंशे तिथिसंयुक्ते वसुशेषे क्रमाद्दिशः ।" अथ भूमिः क्षेत्रपाली । विलोमे पूर्वतो मासा-श्चैत्राद्या दिक्चतुष्टये । प्रहराः सव्यमार्गेण मासस्थानादि गण्यते । क्षेत्रपाली महाभूमि-र्बलानां च बलोत्कटा । बलिनां स्याद्बलवती भूरन्या पृष्ठदक्षिणे । इंद्रांत २ कां १ बुपति ५ वैश्रवणेश्वरासु ७ दिक्षु क्रियादिरविसंक्रमणं क्रमेण । स्यादुद्गमक्षितिरतः प्रहरा-र्द्धभुक्त्या कामाह्वया भ्रमति वाष्टसु दिक्षु नूनम् ॥ १ ॥ शक्रा १ लकेश ७ वरुणां ५ तक ३ नायकासु काष्ठासु चैत्रमुखमासपरिभ्रमेण । अर्कोदये भ्रमति भूस्तत ईश

२१ सूर्ये १२ सर्पाष्ट ८ तुल्यघटिका गतिरेककालः। रुद्रां ८ बुनाथ ५ शिखि ३ गुह्यक ७ राक्षसें ४ द्र १ वातां ६ तके ३ शजल ५ वह्निधनाधिपानाम्। चैत्रादिमासकपरिभ्रमणेन नूनं प्राहुर्विशुद्धमतयोऽवनिमेकवारम्। ऐंद्रे १ वायौ जले ५ रुद्रे ८ वारुणे ६ ऽग्नौं ३ दुराक्षसे ४। प्राच्यां १ तक ३ जले सौम्ये ७ चैत्रमासादिसंक्रमः। दिनं दिनार्द्धयामं च प्रहरार्द्धं तदग्रतः। एवं भुक्तिप्रमाणेन दक्षपृष्ठगतो जयी। अथ लोहपातज्ञानम्। संघटचक्रे प्रागुक्ते कृतिकाद्ये त्रिकोणके। ग्रहयोफलं वाच्यं नानापातसमुद्भवम् ॥ १ ॥ एकरेखागतैर्लोहं राह्वर्कार्किशिखींदुभिः। मंदार्कशत्रुभिर्लोहं ज्ञेंदुभ्यां लोहमादिशेत् ॥ २ ॥ कृत्तिकात्रयरेखायां भानुभानुजराहवः। तत्र चक्रगतश्चंद्रो मेषे लोहं विनिर्दिशेत् ॥ ३ ॥ प्राजापतेर्भे भृगुसूर्ययुक्ते चतुर्थनाड्यां खलु धीरचंदः। मेषोदये चाद्भुतवायुपातः सकृत्सकृच्चैव जलं प्रवर्त्तते ॥ ४ ॥ सौम्ये रौद्रे तद्दिशो यातु रेखा जीवे भौमे भानुजे तत्रसंस्थे ॥ कुंभे मीने जायते चांबुपातश्चंच-द्राग्नी गर्जते वासवश्च ॥ ५ ॥ पुष्याश्लेषास्थानयोर्या च रेखा तत्र स्थाने ह्यागतौ राहुकेतू। लग्ने कीटे संस्थितौ भौमचंद्रौ प्राहुश्चार्या निश्चितं वज्रपातः ॥ ६ ॥ पित्र्ये पूर्वे ११। १ रुद्र-दिक्संख्यरेखा भानुर्भौमो धीषणस्तद्गतश्च ॥ सिंहे लग्ने जायते वह्निपातो मध्यं पादं न स्पृशे-दंगनायाः ॥ ७ ॥ रक्ता कृष्णा एकरेखा ग्रहाः स्युः पिंगा रक्ता राशयः संस्थिताश्च। अत्य-द्भुतो जायते लोहपातो दिवसस्यार्द्धे नूनमाहुर्मुनींद्राः ॥ ८ ॥ शनिस्तथा भास्कर एकरेखा-गतस्त्रिकोणे खलु एक एव। सिंहे च भानुर्मकरे शनिश्च उभे च लग्ने खलु शीघ्रलोहम् ॥ ९ ॥ असुरेंद्रस्य रेखाया रंध्र ९ दिक् १० सुत ५ सप्तमाः ७। चंद्रचांद्री स्थितौ तत्र वायुपातं विनिर्दिशेत् ॥ १० ॥ एकोनविंशरेखायां जीवसूर्यमहीसुताः। लग्नांशे प्रथमे लोहं द्वितीयांशे तु वज्रकम् ॥ ११ ॥ यत्र रेखास्थितः सूर्यो रेखायां तत्र चंद्रमाः। राहुस्तत्र गतश्चैव लोह-पातं विनिर्दिशेत् ॥ १२ ॥ कृत्तिकाद्यष्टमीरेखा स्यार्की यत्र संस्थितौ। तत्र स्थाने महालोहं लग्नांशे यत्र वर्त्तते ॥ १३ ॥ यत्र रेखास्थितश्चंद्रो भूसुतो वाक्पतिः कविः। जलजं यस्य लग्नांशं ब्रूयाद्वृष्टि तदाद्भुतम् ॥ १४ ॥ चक्रे त्रिकोणे खलु आयुरेखाः स्थिताः परा वा द्वयकृष्णखेटाः। तस्मिन्समायाति विधुर्द्विरेखो वह्निर्ध्रुवः स्यात्समये कृशानोः ॥ १५ ॥ आदौ चरांशे खलु लोहपातं मध्ये चरांशे सलिलं च वायुः ॥ अंत्ये चरांशे सलिलं सवत्र प्रसिद्धपातं कथितं त्रिकोणे ॥ १६ ॥ शेषे स्थिरांशे कथयंति वह्निं मध्ये स्थिरांशे सलिलं च वायुः ॥ आदौ स्थिरांशे कचलोहपातं उड्डीशवाक्यं कथयंति तज्ज्ञाः ॥ १७ ॥ एकरेखागतश्चंद्रो रविणा राहुणाऽसृजा ॥ जायते तदहर्युद्धं दारुणं लोमहर्षणम् ॥ १८ ॥ शनिना यदि चंद्रः स्यादेक-रेखागतस्तदा ॥ कवियुद्धाभिघाते च निर्दिशेदविशंकितः ॥ १९ ॥ चंद्ररेखागतः क्रूरः संग्रामं सूचयेत्क्वचित् ॥ द्वौ चेदवश्यमादेश्यं त्रयश्चेत्सैन्यघातकाः ॥ २० ॥ अवश्यायां शुना युक्तं क्रूरखेटद्वयं त्रयम् ॥ एकरेखागतं चापि भवेदाहवसंस्थितिः ॥ २१ ॥ तुषारकिरणो युक्तः क्रूरेण

च शुभेन वा ॥ संग्रामसूचको न स्यादपरः क्रूरयुग्भवेत् ॥ २ ॥ रौहिणेयोशनोभ्यां च नीहाराभ्यांगुरुद्गतः ॥ एकरेखागतो युक्तो जलपातस्तथा भवेत् ॥ २३ ॥ कृशानुकेतुभौमाभ्यां गुरुणा भृगुणा जलम् ॥ लोहपातं विनार्किभ्यां युक्तः कुर्यान्निशाकरः ॥ २४ ॥ सूर्याराभ्यां भयं कुर्यात्तमोर्किभ्यां युतो मृतिम् ॥ ज्ञगुरुभ्यां युतः संधिं समं शुक्रेण शीतगुम् ॥ २५ ॥ धी ५ विक्रम ३ व्यय १२ द्यून ७ धर्म ९ शत्रु ६ तनूषु १ यः ॥ शशांकादपसव्येन स्थितः सोपि युतः स्मृतः ॥ २६ ॥ ग्रहाणां क्रूरसौम्यानामिदं ज्ञात्वा बलाबलम् ॥ युद्धं पातं च घातं च ब्रूयात्तदनुसारतः ॥ २७ ॥ एकरेखागतैः क्रूरै राहुयुक्तो निशाकरः ॥ रक्तपातो भवेत्तत्र यावत्तैः संयुतः शशी ॥ २८ ॥ गुरुणा भृगुणा ज्ञेन यदा चंद्रः समन्वितः ॥ एकरेखागतो वापि जलपातस्तदा भवेत् ॥ २९ ॥ आदित्येन यदा युक्तो महीपुत्रेण वा शशी ॥ एकरेखागतो वापि युद्धं द्वाभ्यां महाहवः ॥ ३० ॥ एकत्र बुधशुक्रौ च यदि तत्र गतः शशी ॥ यदि तत्र गतो भानुः समुद्रमपि शोषयेत् ॥ ३१ ॥ एकरेखां यदारूढौ चंद्रमोधरणीसुतौ ॥ यदि तत्र गतो जीवस्तत्र वृष्टिर्न संशयः ॥ ३२ ॥" अथ चंद्रस्य वक्रत्वमाह ॥ "वह्निभादिंदुपर्यंतं यावंति स्युरुडत्यथ ॥ तेन द्विगुणितांकोनापसव्यं गणयेद्विधुम् ॥ २८ ॥ लोहपातं वदेद्राज्ञे संग्रामयक्षेत्रसंस्थयोः ॥ वर्षासु जलपातं च वायुपातं शुचौ वदेत् ॥ अनले घनपर्जन्ये वज्रपातं वदेत्सुधीः ॥ अर्कोदये यस्मिन्राशौ ये ग्रहास्तेष्वेव पंचघटीपर्यंतं तिष्ठति । तदुपरि द्वितीयराशौ स्थाप्याः पुनर्दशदंडोपरि तृतीयराशौ स्थाप्याः एवं संस्थाप्य चिंतयेत् ॥ इति पंचपातचक्रं त्रिकोणम् ॥" "त्रिनाडिके कृत्तिकाद्ये फणिचक्रेपि पूर्ववत् ॥ दिननक्षत्रसंयोगाल्लोहपातं तदा वदेत् ॥ ७ ॥ ६ ॥ इति त्रिनाडीचक्रम् ॥ वेधश्चक्रे द्वादशारे त्रिकोणोभयसप्तमे ॥ यो यत्रांकोदये खेटस्तं तत्रैव विनिर्दिशेत् ॥३॥ पंचपंचघटीमानाल्लग्नाल्लग्नं व्रजेद्ग्रहाः ॥राहुकेतु सृष्टिमार्गे संहारेर्कोदयो ग्रहाः ॥ भ्रमंति राहुवद्वक्रा अन्ये संहारगामिनः ॥ क्रूरग्रहयुते विद्धे लग्ने लोहं विनिर्दिशेत् ॥ स्वल्पाधिकबहूत्पातमर्कादिग्रहयोगतः ॥ शत्रुसंयोगतो घोरं मित्रसौम्यैर्न जायते ॥ इति द्वादशारलौहम् ॥ अथ लौहपाते स्थानसंघट्टमाह ॥ "अश्वादिसप्तकेरण्ये पुष्यषट्के पुरांतिके ॥ चित्रादिसप्तके तोये क्षेत्र वैश्वाच्चतुष्टये ॥ लौहं वर्षति मार्गेषु पूर्वभाद्रपदात्रये" ग्रामजलसमीपप्रयाणे लौहपातमाह ॥ "तिथिः पंच ५ गुणा कार्या दिनभेन समन्विता ॥ त्रिभि ३ र्भक्ता शेषमेकं जले लोहं विनिर्दिशेत् ॥ द्वयं ग्रामे तथाकाशे शेषे शून्यं यदा भवेत् ॥" संग्रामदेव्या दृष्टिमाह ॥ "तिथेः प्राक् घटिकाः पंचदशो १५ दूर्ध्व वीक्षते शिवा ॥ दश १० वामे दश १० दक्षे दशा १० ग्रेधस्थितिभ्रमः ॥ यत्रास्ति भैरवी दृष्टिस्तत्र लोहं प्रवर्षति ॥" अथ कविचक्रमाह ॥ " उत्प्रयाणे प्रयाणे वा निशीथे मृगयां गते ॥ शोकार्ते व्यसनं प्राप्ते स्त्रीमद्यासक्तचेतसि ॥ विवाहमित्रसंयोगे शत्रुणा च समागमे । तीर्थे देवालये व्यग्रे सैन्यघाते निनायके ॥

बहुधा कविकालस्तु कथितोऽवलभूपतेः ॥ एतां ज्ञात्वा कविं कुर्यात्संहतिं नृपतिं परम् ॥ कविचक्रं प्रकर्तव्यं चतुरस्रं त्रिनाडिकम्। अग्निभात्त्रीणि ऋक्षाणि प्रवेशे रुद्रकोणतः। निर्गमे त्रीणि ऋक्षाणि मध्यात्प्राग्दिशि विन्यसेत्। स्तंभधिष्ण्यानि चत्वारि मध्यस्थानि चतुर्दिशि। प्रवेशे रुद्रचक्रादिकविचक्रमिदं भवेत्। कविः शिखी १ पिंगलिका २ कपोत्यर्कात्प्रवेशभे। युद्धार्णवा तु निर्याणे उल्लेखी चटकी वक्री। जीवपक्षस्थिते चन्द्रे प्रवेशर्क्षेपि चाकुले। प्रवेशं निर्गमं ज्ञात्वा कवियुद्धं प्रकाशयेत्। कवियुद्धं यत्र धिष्ण्ये तदग्रर्क्षेस्ति पापकः। तदा भवेन्मार्गगमो मार्गरोधश्च पृष्ठगे। जीववारेऽर्कभे शिख्यां समयुद्धं प्रजायते। स्वातावर्केहि पिंगल्यां यायिनो वह्निजं भयम्। पुनर्वसौ भौमदिने कपोत्यां यायिनो मृतिः। युद्धार्णवायां मंदेऽह्नि वह्निभे म्रियते गमी। वैश्वे चन्द्रेह्नि वोल्लेखी हयं त्यक्त्वा पलायते। चटक्यां वारुणे ज्ञेह्नि यायी तत्सैन्ययोर्मृतिः। बक्र्यां पुष्ये भृगुदिने यायी बंधनमाप्नुयात्। सदोषामपि निर्दोषामुल्लेखीं वर्जयेत्कवौ। उदयास्तौ स्वरौ येषां जन्मस्थः सप्तमो विधुः। तद्दिने ते भटाः सर्वे वर्जनीयाः कवौ रणे। क्रूराः प्रवेशभे यत्र तद्दिशि स्यात्प्रवेशनम् ॥ सौम्याश्चके निर्गमर्क्षे शुभस्तद्दिशि निर्गमः। जन्मस्थः सप्तमश्चन्द्रः पञ्चमो नवमोऽथवा। पुरस्य पुरनाथस्य तदा भंगं विनिर्दिशेत्। जन्मलग्ने जन्मराशौ ताभ्यां सप्तमकेपि च। पुरस्य पुरनाथस्य तत्काले भंगमादिशेत्। भूबलं पृष्ठतः कृत्वा पुरश्च पुरभक्षकम्। घातपातदिशं हित्वा कवियुद्धं समाचरेत्। निर्गमर्क्षे स्थिते चन्द्रे क्रूरखेटैर्बहिः स्थितैः। निशीथे वेष्टकान् सुप्तान् निहन्युः पौरवसिनः। तीक्ष्णैः साधारणैः क्रूरैर्युद्धयोगे त्रिपुष्करे। केचिन्नरेशभात्केचित्स्थानभाचक्रमूचिरे। इति कविचक्रम् ॥ सूर्यभादिंदुपर्यंतं वह्निभागावशेषितम्। नर एकं १ भ्रमौ द्वौ २ तु शूलं पूर्णे विनिर्दिशेत्। नरेण द्विगुणा बुद्धिर्भ्रमौ दूरान्निवर्त्तते। शूले संजायते सिद्धिः संग्रामेपि चतुर्विधे। रविसोमकुजाः सौम्यशनिर्जीवस्तमः कविः। प्राच्यादिदिनभात्त्रीणि न्यसेत्क्रूरस्थिते मृतिः। जन्मभेऽर्कार्किभे मृत्युर्भंगः स्यात्कुजराहुगे। शुभस्थानाश्रिते सिद्धिर्योद्‌धुस्ताराश्रये कवौ। अथ भरवैगौरीसंवादे त्रिकोणसंघट्टे। "त्रिकोणं नवभिर्दंडरेखाभिर्वेधसंयुतम्। कृत्तिकादिगते देवि चन्द्रः पापग्रहं त्यजेत्। अपसव्ये भवेचंद्रः सव्ये चैव दिवाकरः। एकरेखां गतौ तौ तु लोहं तत्र विनिर्दिशेत्। कृत्तिकादीनि सव्यानि मघादीन्यपि सर्वतः। मैत्रेयादीनि सव्यानि वसुसप्तापसव्यतः। सव्यापसव्यमेवं तु गणयेदुक्तकर्मणि। भौमज्ञगुरुयुक्तेंदुरथवा राहुसंयुतः। अग्निज्वालां करिष्यंति लौहपातैर्न संशयः। एकनाडी यदा प्राप्तौ राहुर्कौ केतुमंगलौ। तद्दिने जायते युद्धं चातुरंगे महाहवे। शन्यर्कौ बुधचद्रौ वा जायते दारुणो रणः। कुजराह्वोर्यदा दृष्टिश्चंद्ररेखा युतौ यदि। एकनाडी समायातौ चंद्रमोधरणीसुतौ। तत्र पश्चाद्गते जीवः पाषाणं जलपातनम्। उदयादिगता दंडा नवघ्ना नख २० भाजिताः। भुक्तास्त्वानर्क्षसंयुक्ताः शेषे तात्कालिका ग्रहाः ॥ ९ ॥" इति संघट्टचक्रम्। "सेना पादौ कुंतपरा नरांगं तत्पतिः स्मृतः। उदरे खड्गिणः प्रोक्ता हृदये वाहवाहकाः। स्कंधौ गजा भुजौ

रध्या करांगुल्यो धनुधराः । वाद्यवादनकं पृष्ठे मंत्री जिह्वा द्विजा रदाः । दैवज्ञोक्षी नृपः प्राणं श्रवणौ हेरवारकाः । पताका छत्रचमरध्वजाः क्लेशकलापकाः । सेनोपकरणं सर्वं रोमावलिरिति स्मृतम् । प्रस्थानर्क्षं शीर्ष्णि देयं १ श्रुतौ २ नेत्रे २ द्वयंद्वयम् । एकं १ घ्राणे रसनायामेकं १ दत्तेषु सागराः ४ । पृष्ठे २ स्कंधे २ भुजे २ गुल्यां २ हृदये च द्वयंद्वयम् । एकैकमुदरे १ गुह्ये १ चत्वारि चरणद्वये । सर्वोपकरणं शेषं न्यासः सेनास्वरूपकः । यदंगस्थाःक्रूरखेटास्तदंगो भिद्यते परैः । सौम्यग्रहा यदंगस्थास्तदंगो जयमाप्नुयात् । राहुस्थाने गतो वाहाद्विनेभिरथाद्वयम् । पदातिभिः कुजस्थाने मंदस्थाने गजाद्वयम् । चातुरंगः कृता पीडा केतुस्थाने प्रजायते । यदंगे सकलाः क्रूरास्तदंतगो मृत्युमाप्नुयात् । मिश्रामिश्रफलाः सौम्यमंदा वा यदि वास्तगाः । मंदे शिरोंघ्रिघ्राणस्थे नृपः शस्त्राद्विनश्यति । अत्रैव राहुशिखिनौ राज्ञो बंधनदायकौ । ददाति सक्षतं भौमस्तरणिर्भंगदायकः । नाभेरधस्थिताः पापाऊर्ध्वैः सौम्या जयावहाः । विपरीता मृत्युकराः सैनिकस्य नृपस्य च । मिश्रा भंगप्रदा युद्धे पापा यदि बलान्विताः । विजयो जायते राज्ञः सौम्याः पादबलाधिकाः ॥ १२ ॥ इति सेनाचक्रम् ॥ ९ ॥

योगे स्वकर्मतः पिंडे शरीराद्वे सुहृज्जनात् ॥ राशौ स्वकुलतो जीवे स्ववित्ताद् गृहतो रिपोः ॥ १३ ॥ वर्णे स्वस्वामिनोर्ज्ञेयं मात्रायां स्त्रीजनात्फलम् ॥ एवं ज्ञात्वा वदेद्विद्वान् दिने फलं शुभाशुभम् ॥ १४ ॥ इति यामले दिनफलस्वरचक्रम् ॥ गुह्याद्गुह्यतरं सारमप्रकाश्यं प्रकाशितम् ॥ इदं स्वरोदये ज्ञानं ज्ञानानां मस्तके स्थितम् ॥ १ ॥ सूक्ष्मात्सूक्ष्मतरं ज्ञानं सुबोधं सत्यप्रत्ययम् ॥ आश्चर्यं नास्तिके लोके आधारमास्तिके जने ॥ २ ॥ दुष्टे च दुर्जने क्षुद्रे ह्यसत्ये गुरुतल्पगे ॥ हीने सत्ये दुराचारे स्वरज्ञानं न दीयते ॥ ३ ॥ शांते शुद्धे सदाचारे गुरुभक्तैकमानसे ॥ दृढकृत्ये कृतज्ञे च देय एष स्वरोदयः ॥ ४ ॥ इति यामले स्वरप्रशंसा ॥

योगेति ॥ १३ ॥ १४ ॥ इति दिनफलस्वरचक्रम् । कथितस्वरनिर्णयस्य सकलाज्ञे यस्योपयोग्यतामुपदर्शयति । गुह्यादगुह्येति ॥ १ ॥ सूक्ष्मेति नास्तिके मिथ्यादि नो आश्चर्यं विस्मयकारणम् ॥ २ ॥ ३ ॥ ४ ॥ इति स्वरप्रशंसा ।

अथान्यत्संप्रवक्ष्यामि शरीरस्थं स्वरोदयम् ॥ हंसचारस्वरूपेण येन ज्ञानं त्रिकालजम् ॥ १ ॥ कुंडलिनी महाशक्तिर्नाभिस्था–

हिस्वरूपिणी ॥ ततो दशोर्ध्वगा नाड्यो दश चाधोगतास्ततः ॥ २ ॥ द्वेद्वे तिर्यग्गते नाड्यौ चतुर्विंशतिसंख्यया ॥ कुंडलिन्या महाशक्तेः मूलमार्गा भवंत्यमी ॥ ३ ॥ तेभ्यः सूक्ष्ममुखा नाड्यः शरीरस्यातिपोषिकाः ॥ शतानि सप्त जायंते सप्तोत्तराणि संख्यया ॥ ४ ॥ प्रधानादशनाड्यस्तु दशवायुप्रवाहिकाः ॥ नामानि नाडिकानां च वातानां च वादाम्यहम् ॥ ५ ॥

अधुना पंचस्वरव्याख्यानानंतरं देहथवामदक्षिणस्वरयोराद्यमुनिप्रोक्तस्वरूपयोःहंसचाराख्ययोः श्लोकानां व्याख्यानं यथाज्ञानं करोमि । अथान्येति । अथशब्दोत्रानंतर्ये ॥१॥ अथानंतरं पंच स्वरकथनानंतरं हंसचारस्वरूपेण शरीरस्थं स्वरोदयम् । दक्षिणवामस्वरोदयंवक्ष्यामि कुंडलिनीति । यथा सदा उदयति दक्षिणः स्वरो वामः स्वरो वा तथा व्याख्यास्यामि । शक्तिनां मध्ये महाशक्तिः । देहिनां नभिस्थाने विद्यते । तस्य नाम कुंडलिनीति । किंरूपा अहिस्वरूपिणी । सर्पिणी च कुंडलीभूता विद्यते । सा देहस्थानां नाडीनां मूलभूता । तथाच । तत इति । ततस्तत्स्था कुंडलिनी भूता या दश नाड्य ऊर्ध्वगताः॥ २ ॥ द्वेद्वे तिर्यग्गते इति । तस्या एव कुंडलिन्याः । द्वेद्वे नाड्यौ तिर्यग्गते ज्ञेये एवं चतुर्विंशतिनाड्यः कुंडलिनीशक्तेर्मूलमार्गाज्जाताः ॥ ३ ॥ ताभ्य इति । ताभ्यश्चतुर्विंशतिनाडिकाभ्यः सप्तोत्तराणि शतानि जायंते ताः शरीरस्य देहस्य अतिपोषिकाः पुष्टिकारिण्यः । यतः कृताहाराऽन्नादे रसवाहिन्यः । यत्र यत्र प्रतता विस्तृताः तत्रतत्र रसान् नयंति । तत्तन्मार्गगता रसाः शरीरं पुष्णंति ॥ ४ ॥ प्रधाना दश इति । तासां मध्ये दश नाड्यः प्रधाना विद्यंते । तास्तु दशसंख्यानां वायूनां प्रवाहिकाः । ताभ्यो दश वायवः शरीराद्बहिः प्रभवंति ॥ तासां दशनाडीनां वातानां च दशानां नामानि वदामि ॥ ५ ॥

इडा १ पिंगला २ सुषुम्ना ३ गंधारी ४ हस्तिजिह्विका ५ ॥ पूषा ६ यशा ७ च व्यूषा ८ च कुहूः ९ शंखिनिका १० तथा ॥ ॥ ६ ॥ प्राणोऽपानः समानश्च उदानो व्यान एव च ॥ नागः कूर्मः कृकश्चैव देवदत्तो धनंजयः ॥ ७ ॥ प्रकटो वायुसंचारो लक्ष्यते देहमध्यतः ॥ इडा पिंगला सुषुम्नाभिर्नाडीभिस्तिसृभिर्बुधैः ॥ ८ ॥ इडानाडीस्थितश्चंद्रः पिंगला भानुवाहिनी ॥ सुषुम्ना शंभुरूपेण शंभुर्हंसस्वरूपकः ॥ ९ ॥ शक्तिरूपः

स्थितिश्चंद्रो वामनाडीप्रवाहकः ॥ दक्षनाडीप्रवाहश्च शिवरूपी दिवाकरः ॥ १० ॥

अथ नाडिकानां नामानि । इडा पिंगलेति सुगमम् ॥ ६ ॥ अथ वातानां नामानि । प्राणोपानेति । एते दश वायवः । इडा नाडी हृदयाद्दक्षिणनासापुटाभिमुखी तस्यां प्राणो नाम वायुर्वहति।पिंगला नाम नाडी हृदयाद्वामनासापुटाभिमुखी । तत्रोदानवायुस्तिष्ठति। गांधारी नाडी नाभेरधोगता तत्रापानो वायुः जिह्विका नाम नाभिस्था तत्र समानो वायुः सममेव प्रवहति । व्यानो नाम वायुः सुषुम्नायां तिष्ठति । एवं नागादयः पंच पूषाद्याः पंचसु स्थिताः । एकोऽर्थः। अन्योर्थः प्रथित एव । नासापुटद्वयाक्षिपुटद्वयश्रोत्रपुटद्वयमुखनाभिवायुब्रह्मरंध्रादिमार्गेभ्यो दशवायवः प्रभवंति । अत्रार्थे सनकादियोगिनः प्रमाणम् । एषां प्रयोजनाभावात् सुगमार्थाः ॥ ७ ॥ अथ दशनाडीनां मध्ये तिस्रः प्रथिताः । ताभ्यो वायवो लक्ष्यंते । ता आह । प्रकटो वयुरिति सुगमम् ॥८॥ इडा नाडी इति । अस्यार्थोग्रे विधेयः ॥ ९ ॥ शक्तिरूप इति । अत्र वामनासापुटाद्यो वायुः संचराति स चंद्रः । दक्षिणनासापुटाद्यो वायुः स सूर्यरूपी शंभुर्महेशः । शक्तिरूपी चंद्रः । ययोः शिवशक्ती उच्यते । शंभुः स एव हंससंज्ञः ॥ १० ॥

हकारो निर्गमे प्रोक्तः सकारोंतः प्रवेशने ॥ हकारः शंभुरूपस्थः सकारः शक्तिरुच्यते ॥ ११ ॥ एकैकघटिकाः पंच क्रमेणैवोदयंति ताः ॥ पृथिव्यापस्तथा तेजो वायुराकाशमेव च ॥ १२ ॥ मध्ये पृथ्वी अधश्चाप ऊर्ध्वं वहति चानलः ॥ तिर्यग्वायुप्रवाहश्च नभो वहति संक्रमे ॥ १३ ॥ धराद्येकैकतत्त्वस्य एकैकघटिकोदयः ॥ अहोरात्रस्य मध्ये स्युस्तेन द्वादश संक्रमाः ॥ १४ ॥ आदौ चंद्रः सिते पक्षे भास्करस्तु सितेतरे ॥ प्रतिपदादितो हानिर्त्रीणित्रीणि क्रमोदयः ॥ १५ ॥

तस्य लक्षणं वदति । हकारो निर्गम इति । अत्र शब्दार्था एवानंदकारिणः । प्रयोजनाभावात् मायाग्रस्तानाम् ॥ ११ ॥ अथ विज्ञानां ज्ञानहेतुप्रयोजनमाह । एकैकेति ॥ १२ ॥ अथैतयोः प्रवहतोः पंचकलानां ज्ञानमाह । मध्ये पृथिवीति । वामे वा दक्षे वा नासापुटे वायौ वहति पूर्णे पृथिवी नाम तत्त्वम् नासापुटादधो यो वहति ओष्ठं स्पृशन् स वायुर्जलसंज्ञः । ऊर्ध्वं वहति चानलः । नपुटस्योर्ध्वभागं स्पृशन् यो वायुर्वहति तस्य वायोरनल इति नाम । तिर्यग्वायुप्रवाहश्चेति । दक्षिणस्वरो वामो वा द्वयोर्मध्ये स्वोदये यो वायु

स्तिर्यग्वति । तस्य प्रवाहवायोर्वायुतत्त्वमिति नाम । नभो वहति संक्रम इति । वामो वा दक्षिणो वा स्वोदये वहन् द्वितीयपुटादपि बहिर्निःसरति । द्वितीयपुटे क्रमाद्वर्द्धते । स्वपुटात्क्रमाद्व्रजति । यावत्प्रवहकालस्तावत्तिष्ठति । उभयोः स कालोग्रे व्याख्यातव्यः । वामदक्षिणस्वरस्थान् ग्रहानाह । वामस्वरमाह । "विचंद्रशुक्रगुरुवो वामनाड्यां धरादितः। रविभौमयमाः सर्पकथिताः सूर्यनाडिगाः" वामस्वरे वहति यावत्पृथिवीतत्त्वं वहति तावद्बुधग्रहस्योदयः । अप्तत्वे वहति चंद्रस्योदयः । तेजसि वहति शुक्रस्योदयः । वायुतत्त्वे वहति गुरोदयः । एवं दक्षिणवायो वहति रविभौमयमराहवः । पृथिव्याद्युदयक्रमेण उदयंति । ग्रहोदये प्रश्ने ग्रहफलमादिशेत् । यथा लग्नवर्तिनि बुधफलं तथा तदुदयेपि । एवं सर्वग्रहेषु शुभाशुभफलम् ॥ १३ ॥ अथ पृथिव्यादीनां स्थितिकालमाह । धराद्येकैकतत्त्वेति । सुगमम् ॥ १४ ॥ दक्षिणवामयोः प्राक् प्रवहन् समयमाह । आदौ चंद्रः सितेति त्रिषुत्रिषु प्रागुदयं स्वस्वपक्षयोः सितपक्षे प्रतिपत्त्रिषु तिथिषु प्राक् वामस्वरोदयः । परतस्त्रिषु प्राक् दक्षिणस्वरस्योदयः । तत्परतस्त्रिषु तिथिषु वामस्वरस्योदयः तेन किम् । पंचदशसु तिथिषु प्राक् वामस्य त्रय उदयः द्वौ दक्षिणस्य एवं तथा च। "प्रतिपत्त्रिषु चंद्रस्य चतुर्थ्यास्त्रिषु भास्वतः। सप्तम्यादित्रिषु विधोर्दशम्यादिषु भास्वतः। ततस्त्रिषु विधोः प्राक् स्यादुदयः स्वेरवेरपि। स्वपक्षे अयमुदयः। प्रतिपत्प्रभृतिरवेर्ज्ञेयः। पञ्चपञ्चघटीमानादेकैकस्य हि यो भवेत्। आदौ चन्द्रस्ततः सूर्यः सितेन्येर्कस्ततो विधः। एवं क्रमेण स्वरयोः पक्षे द्वादशसक्रमाः। सुगमः ॥ १५ ॥

चंद्रोदये यदा सूर्यश्चंद्रःसूर्योदये यदा ॥ अशुभं हानिरुद्वेगस्तद्दिने जायते ध्रुवम्॥१६॥शशांकं चारयेद्रात्रौ दिवा चार्यो दिवाकरः ॥ इत्यभ्यासरतो नित्यं सयोगी नात्र संशयः ॥ १७ ॥ यात्राकाले विवाहे च वस्त्रालंकारभूषणे॥ शुभकर्मणि संधौ च प्रवेशे च शशी शुभः ॥ १८ ॥ विग्रहे द्यूतयुद्धेषु स्नानभोजनमैथुने ॥ व्यवहारे भये भंगे भानुनाडी प्रशस्यते ॥ १९ ॥ होमश्च शांतिकं चैव दिव्यौषधिरसायनम् ॥ विद्यारंभं स्थिरं कार्यं कर्तव्यं च निशाकरे ॥ २० ॥

अथ विपरीतोदयफलमाह । चन्द्रोदये यदा सूर्य इति । शुक्लपक्षे प्रतिपदादिषु यदि प्राग्रवेरुदयस्तद्दिने हानिः अशुभं किमपि उद्वेगो वा निष्कारणात् । एवं कृष्णपक्षे चन्द्रोदयः प्राक् तदापि हानिरुद्वेगादयः ॥ १६ ॥ अथ वामदक्षिणस्वरयोर्वशीकरणमाह । शशांकं चारयेदिति । वामस्वरश्चन्द्रो दक्षिणः स्वरो रविः । तेन दिनाधिपो रविः । रात्रिपतिश्चंद्रः ।

शशांकं चारयेदिति । प्रागुक्तं प्रतिपदादिषु त्रिषुत्रिषु "आदौ चन्द्रः सिते पक्षे भास्करस्तु सितेतरे" इति सूर्योदयादारभ्य प्रवृत्तिरुक्ता न तिथ्युदये । तिथिर्भूताधिकाले प्रारब्धा भवति । तिथ्युपलक्षणम् । तेन शुक्लादौ प्राक् चन्द्रोदयः । कृष्णे सूर्योदयः "अत उक्तं शशांकं चारयेद्रात्रौ" इति । अभ्यासात् स्वराभ्यासिभ्यो योगिभ्य उपदेशमादाय अभ्यासं कुर्वन् रात्रौ वामस्वर एव यथा वहेत्तथाभ्यासं कुर्यात् । दिवा काले सम्पूर्णदक्षिणस्वरवहस्तिष्ठति एवमभ्यासाद्योगी भवति ॥ १७ ॥ अथ वामदक्षिणयोः स्वरयोः कार्ये पृथक् प्रधानतामाह । यात्रा इति । एतानि वामस्वरे वहति कुर्यात् इत्याभिप्रायः ॥ १८ ॥ विग्रहेति । भय इति । भयोपस्थिते यदि प्रश्नो दक्षिणस्वरे वहति तदा भयं भवतीत्यर्थः । एवं भंगप्रश्नेपि ॥ १९ ॥ सुगमम् ॥ २० ॥

दूरयुद्धे जयी चंद्रः समासन्ने दिवाकरः ॥ वहन्नाडीपदेश्चे च कृते यात्रातिसिद्धिदा ॥ २१ ॥ सूर्ये वहति चंद्रे वा पूर्णपादं प्रचालयेत् ॥ चंद्रे समपदैर्यात्रा सूर्येऽसमपदैः क्रमात् ॥ २२ ॥ पृथ्वीजले शुभे तत्त्वे तेजो मिश्रफलोदयम् ॥ हानिमृत्युकरौ पुंसामुभौ हि व्योममारुतौ ॥ २३ ॥ आपः श्वेताः क्षितिः पीता रक्तवर्णो हुताशनः ॥ मारुतो नीलवर्णः स्यादाकाशो धूम्र एव च ॥ २४ ॥ योधद्वयकृते प्रश्ने पूर्णे च प्रथमो जयी ॥ रिक्तसंस्थे द्वितीयस्तु जयी भवति नान्यथा ॥ २५ ॥

अन्यदाह । दूरयुद्धेति । दूरयुद्धे भाविबाहुकाले युद्धे सति चन्द्रो जयी । कोर्थः । वामस्वरो जयी । दूरयुद्ध इत्युपलक्षणम् । दूरयुद्धे ज्ञानविषये जयाय वामस्वरबलेन यात्रा कुर्यादित्यर्थः । समासन्ने दिवाकरे इति तथा । निकटस्थे युद्धे सूर्यवाहेन युद्धाय यात्रां कुर्यात् । परन्तु वहन्नाडीपादेन य एव स्वरो वहति वामि वा दक्षिणो वा । वामे वहति वामपदं चालयेत् । दक्षिणे दक्षिणं चालयेत् ॥ २१ ॥ तत्र पादचालने विशेषमाह । सूर्ये वहतीति । सुगमम् ॥ २२ ॥ अथान्यत् । पृथ्वीजलेति । अथ प्रश्ने शुभप्रश्ने शुभाशुभम् । वामे स्वरोक्तकार्याणां प्रश्ने पृथ्वीतत्त्वे वहति जलतत्त्वे वा तदा वामस्वरवेलायां वामस्वरोक्तकार्यस्य शुभं वदेत् । तेजसि तत्त्वे मिश्रं फल । व्योममारुतयोः प्रवहतोः हानिःकार्यहानि । मृत्युरिति कष्टं वाच्यं प्रश्नः दक्षिणस्वरे वहति प्रष्टुः प्रश्नफलं ब्रूयात् ॥ २३ ॥ अथ प्रष्टुर्विषयरूपमाह । आपः श्वेत इति प्रष्टुः प्रश्नविषये वस्तुनि पृथिव्यांदिवर्णं ब्रूयात् ॥ २४ ॥ अथ योधयोः स्वरबलात् जयाजयमाह । योधद्वयेति । यथा केनापि प्रश्नः कृतो देवदत्तयज्ञदत्तयोर्मध्ये को नेता भविष्यतीति प्रश्ने पूर्णस्वरे सति प्रथमो जयी यस्य प्रथमं नामग्रहणं स जयी

वाच्यः। अर्थादितरः पराजयी। अथ रिक्तस्थे प्रष्टरि योधयोर्मध्ये यस्य यस्य पश्चान्नामग्रहणं कृतं स जयी वाच्य इत्यर्थः। पूर्णरिक्तताग्रे कथयिष्यति॥ २५॥

युद्धकाले यदा चंद्रः स्थायी जयति निश्चितम्॥ यदा सूर्यप्रवाहश्च यायी च विजयी तथा॥ २६॥ पार्थिवे सक्षतं युद्धं संधिर्भवति वारुणे॥ विजयो वह्नितत्त्वेन वायौ भंगो मृतिस्तु खे॥ ॥ २७॥ पूर्णनाडीगतं पृष्ठे शून्यमंगं तदग्रतः॥ शून्यस्थाने कृतः शत्रुर्म्रियते नात्र संशयः॥ २८॥ पूर्वोत्तरदिशोश्चंद्रे भानौ पश्चिमयाम्ययोः॥ स्थितस्तत्र जयी युद्धे स्थायी यायी क्रमेण च॥ २९॥ वामनाड्युदये चन्द्रः कर्तव्यो वामसंमुखः॥ सूर्यवाहे तथा सूर्यः पृष्ठदक्षिणगो जयी॥ ३०॥

अथ वामदक्षिणप्रवहतोर्यथा जयस्तथाह। युद्धकाले यदेति। युद्धकाले यदा चंद्रो वामः स्यात्तदा स्थायिबलंदक्षिणस्वरश्चेत्तदा यायिबलम्। स्थायियायिबलं स्वरप्रकरणे व्याख्यातम्॥ २६॥ अथ युद्धकाले प्रश्नकाले वा पृथिव्यादितत्त्वफलमाह। पार्थिवेति। खे आकाशतत्त्वे मृतिरिति शेषं सुगमम्॥२७॥ अथ युद्धकाले पूर्णहीनवामदक्षिणयोः स्वरयोः कर्तव्यमाह। पूर्णनाडीगतमिति स्थायी वा यायी वा विजयाकांक्षी युद्धक्षेत्रे युद्धकाले घातकाले पूर्णस्वरं पृष्ठे कुर्यात्। शून्यनासापुटं तदंगं सकलं च वामं वा दक्षिणं वा शत्रुसम्मुखे दद्यात्। एवं शून्यस्थानकृतः शत्रुर्म्रियते घातेनेत्यर्थः॥ २८॥ अथ वामस्वरयोर्वशाद्दिग्बलमाह। पूर्वोत्तरदिशोरिति। चंद्रे वहति वामस्वरे वहति स्थायी योधः पूर्वदिशि उत्तरदिशि वा स्थितो भूयात्।-यायी पश्चिमदक्षिणदिशि क्षेत्रे जयाय स्थिरो भूयात्॥ २९॥ अथ वामदक्षिणे वहति भूबलमाह। वामनाड्युदय इति। युद्धकाले वामस्वरे वहति चंद्रो वामसम्मुखः कार्यः। दक्षिणे स्वरे वहति संग्रामकाले सूर्यं पृष्ठदक्षिणस्थं कुर्यात्॥ ३०॥

शयने वा प्रसंगे वा युवत्यालिंगनेपि वा॥ यः सूर्येण पिबेच्चंद्रं स भवेन्मकरध्वजः॥ ३१॥ जीवेन गृह्यते जीवो जीवो जीवस्य दीयते॥ जीवस्थानगतो जीवो बालाजीवांतकारकः॥ ३२॥ रात्र्यंतयामवेलायां प्रसुप्ते कामिनीजने॥ ब्रह्मजीवं पिबेद्यस्तु बालाप्राणहरो नरः॥ ३३॥ अर्केन्दुयोगे पुन्नार्य्योस्तस्मिन्काले रते सति॥ तत्क्षणे दीयते चंद्रो मोहमायाति कामिनी॥ ३४॥

चंद्रचारे विषं हंति सूर्ये बालां वशं नयेत् ॥ सुषुम्नायां भवेन्मोक्ष एको देवस्त्रिधा स्थितः ॥ ३५ ॥

अथान्यत् । शयनेति । यः सूर्येण पिबेच्चंद्रमिति । "शशांकं चारयेद्रात्रौ दिवा चार्यो दिवाकरः" । इति प्रथममुक्तम् । अत्र चंद्रोदयो रात्रौ भवति तं वामस्वरं दक्षिणेन पिबति । कोर्थः । दक्षिणमेव दिवानिशं चारयेत् । अयमस्माकमर्थः । दिवा दक्षिणस्वरस्योदयो भवति तेन दिवा वामस्वरेणैवाभ्यासं कुर्यात् । मकरध्वज इव भवति सुंदर इत्यर्थः । वाशब्द उभयत्र समुच्चायार्थः । शयनप्रसंगे युवती यदा आलिंगति तदा यदि वामो वहति तदा तं वामं दक्षिणस्वरेण पिबेत् । स्वरेणैव रतो भूयादित्यर्थः ॥ ३१ ॥ जीवेनेति । जीवेन प्राणेन जीवः प्राणो गृह्यते । कोर्थः । दक्षिणस्वरे वहति यदि वामो भवितुमुद्यतो भवति तदा दक्षिणेनैव वामं पिबेत् । वामस्वरोदये दक्षिणमेव स्थिरं कुर्यात् । एवं वामेन दक्षिणं पिबेत् । एवं कृते जीवेन गृह्यते जीवो व्याख्यातम् । एवं कृते वामस्वरस्थानगतो दक्षिणः दक्षिणस्थानगतो वामः तत्कृते बालाजीवांतकारकोयं स्यात् । बाला सुषुम्नामृत्युस्तस्यांतकारकः । कोर्थः मृत्युं जयतीत्यर्थः । वायुर्वर्द्धते वायुधारणादायुर्वर्धते अमुमेवर्थमग्रे फलयति ॥ ३२ ॥ रात्र्यंतेति । रात्रेरवसानयामे निद्रां विहाय ब्रह्मवेत्ता योगाभ्यासं कुर्यादिति गुरुपरंपरा । तदा स्वराभ्यासं कुर्वन् ब्रह्म जयेत् । तत्र वेलायां सुषुम्नायां वेलायां मृत्योर्जीवहरो नरो भवति ॥ ३३ ॥ अर्केंदुयोग इति । तथा च योगशास्त्रे । "शिव अलिङ्ग्यते शक्त्या क्षणे यस्मिन् गते सति । तत्क्षणे दीयते चंद्रो मोहमायाति कामिनी " ॥ ३४ ॥ चंद्रचार इति । सुगमम् ॥ ३५ ॥

भुक्तमात्रे च मंदाग्नौ स्त्रीणां वश्यार्थकर्मणि ॥ शयनं सूर्यवाहेन कर्तव्यं सर्वदा बुधैः ॥ ३६ ॥ श्रांते शोके विषार्ते च ज्वरिते मूर्च्छितेपि वा ॥ सज्जनस्यापि बोधार्थं चंद्रचारं प्रवाहयेत् ॥ ॥ ३७ ॥ ऊर्ध्वं वामाग्रतो दूतो ज्ञेयो वामपथे स्थितः ॥ पृष्ठे दक्षे तथाधस्तात्सूर्यवाहगतो मतः ॥ ३८ ॥ पूर्णनाडीस्थितो दूतो यत्पृच्छति शुभाशुभम् ॥ तत्सर्वं सिद्धिमायाति शून्य शून्यं न संशयः ॥ ३९ ॥

अथ दक्षिणस्वरे यत्कर्तव्यं तदाह । भुक्तमात्रेति ॥ ३६ ॥ श्रांते शोकेति । भुक्तमात्रेत्याद्युक्तार्थेषु दक्षिणस्वरे वहति तानि तानि कुर्वीत । एवं श्रांत इत्यदि कर्मणि चंद्रवाहं प्रवाहयेत् । वामस्वरेणैव कुर्यात् ॥ ३७ ॥ अथ वामदक्षिणस्वरयोः प्रयोजनमवश्यमेववेत्यर्थमाह । ऊर्द्ध्वं वामाग्रत इति । अथ वामदक्षिणस्वराभ्यासी ज्योतिर्वित् दूतं

प्रष्टारं लक्षयेत्। असौ पृष्ठगो वामस्वरानुगतो वाइति वितर्कयेत्। तत्र निर्णीतार्थमाह। य ऊर्ध्वस्थो भवति दूतो यत्र कुत्रचित् आत्मनः सकाशात् उच्चपीठादिप्रदेशस्थःस वामगतःस्था प्यः।वामस्थितः वामगत एव।अग्रगतश्चेत्पृच्छति तदापि वामभागगत एव बोद्धव्यः। तथा तेनैव प्रकारेण पृष्ठे पश्चात् स्थितः दक्षिणे च स्थित अधस्तात् स्थितः आत्मनः सकाशात् नीचस्थ आत्मानं प्रष्टुर्दूतात् ऊर्ध्वस्थं बुद्ध्वा एवं पृष्ठदक्षिणाधस्थं दूतं दक्षिणगतं ज्ञायते। एवं प्रश्नकाले पृष्ठदा-क्षिणगते उच्चस्थो वामगतः नीचस्थो वामाग्रतोपि दक्षिणः ॥ ३८ ॥ अस्यार्थः प्रश्नोत्तरेणैव फलयति। "सूर्ये च विषमान् वर्णान् समवर्णान् निशाकरे। वाहस्थो भाषते दूतस्तदा लाभोन्यथा नहि। पूर्णनाडीगतो दूतो यत्पृच्छति शुभाशुभम्" अथव्याख्या। सूर्ये दक्षिणस्वरे वहति सति दक्षिणलक्षणगतो दूतोऽभिलषितप्रश्ने विषमान्वर्णान् वदति एकत्रिपंचादीन् तदा प्रष्टुर्वांछितं पूर्णं स्यादिति वदेत्। एवं निशाकरे वामस्वरे वहति समवर्णान् द्विचतुःषष्ठादीन् स्वामिलिखिते प्रश्ने वदति तदाप्यभिलषितं भविष्यतीति वदेदिति। अन्यथा नहि। सूर्यस्वरे समवर्णान् वामे विषमान् इति अन्यथा विपरीतं वदेत्। पूर्णनाडीगत इति अस्यार्थोपि स एव शुभं कल्याणादि अशुभं संग्रामादि द्वयमपि पूर्णनाडीगतस्य प्रष्टुर्भवति। शून्य इति। ऊर्ध्वं वमाग्रतो दूत इत्युक्तलक्षणेन शून्यगतः सन् पृच्छति। तदा शुभाशुभमपि दृष्टं तन्नष्टं भवति न सिद्धिमायाति अत्र न संशयः कार्य इत्यर्थः ॥ ३९ ॥

**पृथिव्यादित्रितत्त्वेन दिनमासाब्दकैः फलम् ॥ शोभनं च तथा दुष्टं व्योममारुतवह्निभिः ॥ ४० ॥**

अथ शुभाशुभादीनां लाभालाभसमयज्ञानमाह। पृथिव्यादित्रितत्त्वेनेति। अथ प्रष्टुः वामदक्षिणपूर्णगतस्य लाभालाभजयपराजयादिप्रश्ने यदि पृथ्वीतत्त्वं प्रश्नकाले भवति अप्तत्त्वं वा तेजो वा स्यात्तदा शुभाशुभप्राप्तौ कालं वदेत्। स कः काल इत्याह। दिनमासाब्दकैः फलम्। पृथ्वीतत्त्वे वहति दिवसेन फलं भविष्यति। अप्तत्त्वे वहति मासेन फलम्। तेजसि तत्त्वे अब्देन फलम्। परन्तु तत्फलं शुभाशुभं किं जयलाभालाभादि सर्वं यदा केनापि प्रश्नः कृतः। मया राजतो जीवनं कदा प्राप्तव्यं तदा पूर्णगतस्य दूतस्य पृथिवीतत्त्वे वहति दिनै-नैकेन प्राप्तव्यं त्वया जीवनमिति वदेत्। अयमेव शोभनार्थः। तथा दुष्टं व्योममारुतवह्निभिः। स एव प्रष्टा यदि शून्यगतः सन् पृच्छति वामदक्षिणयोरेकतमे वहति व्योममारुतवह्नीनामे-कतमे च तदा दुष्टं फलं वदेत्। जीवनं न प्राप्तव्यमित्येवं दुष्टमिति। अथ पूर्णस्वरे वहति पूर्णगतस्य प्रष्टुर्व्योममारुतवह्निभिः। दुष्टं वक्तव्यं नो वेति कल्पे विरोधात्। स एव प्रष्टा यदि शून्यग इति व्याख्यातं कवेरभिप्रायोऽयमेव। व्योमतत्त्वे वहति दिनैकेन फलम्। वायुतत्त्वे मासेन। वह्नितत्त्वे वर्षेण फलम्। तत्र कस्यापि प्रष्टुरभिलषितम्। मम शत्रुः कदा मृतो भविष्यति तत्र पूर्णगतस्य प्रष्टुः पृथिवीतत्त्वे दिनैकेन मृतो भविष्यति। अप्तत्त्वे मासेन। तेजसि वर्षेण पूर्णगतस्य इदमपि शोभनम्। शून्यगतस्य प्रष्टुः शत्रुर्मृतो भवि

ष्यति। शून्ये इदमपि शोभनम्। अथान्यदपि विरुद्धम् । पूर्णस्वरे पूर्णं फलम् । शून्यस्वरे शून्यं फलम्। पृथिव्यादित्रितत्त्वेन शुभं फलम्। व्योममारुतवह्निभिरशुभं फलम् । तत्र पूर्णे व्योममारुतवह्नितत्त्वानि भवंति तदा शुभप्रश्ने मध्यमं फलम् । लाभे स्तोकलाभः। अशुभे पूर्णम्। पूर्णगतस्य दूतस्य शुभप्रश्ने पृथिव्यादित्रितत्त्वे शुभं पूर्णम्। व्योममारुतादित्रितत्त्वे पूर्णगतस्य शुभप्रश्ने मध्यमफलम्। एवं शून्यगतस्य प्रष्टुः पृथिव्यादितत्त्वैः पंचभिः पूर्णं मध्यं कल्पयेत्। ननु पंचतत्त्वानि वह्नितत्त्वस्य शुभेऽशुभे च प्रधानता तत्र का गतिरित्याकांक्षया व्याख्यायते। एकघटीपर्यंतं वह्नितत्त्वस्य समयः तेन प्रागर्धघट्या वह्नितत्त्वे शुभं वदेत्। उत्तरार्द्धघट्याद्या दुष्टं वदेदिति। इदमपि स्वराभ्यासगम्यम् ॥ ४० ॥

श्वासप्रवेशकाले तु दूतो जल्पति वांछितम् ॥ तत्सर्वं सिद्धिमायाति निर्गमे नास्ति सुंदरम् ॥ ४१ ॥ व्यवहारी खलो वादी द्विषद्दायादवञ्चकाः । कुपितः स्वामिचौराद्याः पूर्णस्थाः स्युर्भयंकराः॥४२॥ सूर्ये चेद्विषमान्वर्णान् समवर्णान्निशाकरे ॥ बाह्यस्थो भाषते दूतस्तदा लाभोन्यथा नहि ॥ ४३ ॥ आदौ शून्यगतः पृच्छेत्पश्चात्पूर्णे विशेद्यदि ॥ तदा सर्वार्थसिद्धिः स्यादिति जानीहि निश्चितम् ॥ ४४ ॥

अथ वामदक्षिणस्वरवशादेव अन्यमपि प्रश्नमाह। श्वासप्रवेशकाले त्विति। अत्र प्रश्ने वक्तुरेव स्वायत्तता। स्वराभ्यासी स्वरमना वामदक्षिणस्वरप्रवेशकाले दूतस्य प्रष्टुर्वांछितं सफलं वदेत्। इदमवश्यं भविष्यतीत्यर्थः। निर्गमे वामदक्षिणस्वरयोर्निर्गमे प्रष्टुर्वांछितस्य सुंदरं नास्ति। इदं तव कार्यं न भविष्यतीत्यर्थः। अत्रापि भावाभावयोः कालं पृथिव्यादितत्त्वेनैव वदेत् ॥ ४१ ॥ ४२ ॥ ४३ ॥ अथान्यदाह। आदौ शून्यगतेति। आदौ शून्यस्वरस्थानगतः पृच्छति पश्चात्पूर्णस्वरस्थाने उपविशति तदा सर्वार्थसिद्धिः स्यात्। जीवितमरणलाभालाभजयपराजयादिप्रश्ने सिद्धिरेव स्वस्य जीवनं शत्रोर्मरणं स्वस्य लाभः शत्रोर्न लाभः। स्वजयः शत्रोः पराजयः। इत्यादिसर्वप्रश्ने सिद्धिर्ज्ञेया। वामे वाममिति। आदौ पूर्णगतः प्रष्टा यदि पृच्छति पश्चाच्छून्यस्थानगतः उपविशति तदा वामं वदेत्। जीविते मरणम्। मरणे जीवितम्। लाभे अलाभं जये पराजय इति वामशब्दार्थः ॥ ४४ ॥

गर्भप्रश्ने यदा दूतः पूर्णे पुत्रः प्रजायते ॥ शून्ये कन्या युगे युग्मं गर्भपातश्च संक्रमे ॥ ४५ ॥ आयाति वारुणे पांथस्तत्रैवास्ते सुखं क्षितौ ॥ प्रयाति पवनेन्यत्र मृत इत्यनले वदेत् ॥ ४६ ॥ उदय-

श्चंद्रमार्गेण सूर्येणास्तमनं यदि ॥ तदाऽतिगुणसंघातं विपरीते च विघ्नता ॥ ४७ ॥

अथ गर्भप्रश्ने स्वरबलमाह । गर्भप्रश्नेति । वामे दक्षिणे वा पूर्णे वहति सति 'ऊर्द्ध्वं वामाग्रतो दूत' इत्यादिलक्षणेन पूर्णगतः सन् पृच्छति । अस्मिन्गर्भे पुत्रः पुत्री वा भविष्यतीति । तदा पूर्णे सति अस्मिन् गर्भे पुत्रो भविष्यति । शून्यगतश्चेत्पृच्छति तदा अस्मिन् गर्भे कन्या भविष्यतीति वदेत् । युगे युग्ममिति । आदौ पूर्णगतेन प्रश्नः कृतः पश्चाच्छून्यगतो भवति तदा युगे युग्मं वदेत् पुत्रकन्ये प्राक् पुत्रः पश्चात् कन्या आदौ शून्यं गतः पश्चात्पूर्णगतो भवति तदापि युग्मम् । आदौ कन्या पश्चात्पुत्रः । इदं वक्तुं स्वराभ्यासिनः सामर्थ्यम् । न तु पठनमात्रेण गम्योर्थः । गर्भपातश्च संक्रमे । वामो वा दक्षिणो वा पूर्णे वहन् पश्चादन्यपुटादतिक्रमति इति संक्रमणकालं विज्ञाय गर्भप्रश्ने जातकस्य मातुर्मरणं वदेत् । गर्भपातो वा ॥ ४५ ॥ अथान्यत् 'गमागमप्रश्न । आयातीति । अथ दूरगतस्यागमनप्रश्ने प्रथमतस्तस्य पूर्णशून्यविचारेण शुभाशुभं ज्ञात्वा पश्चादागमनं वा निवर्त्तनं वा वदेत् । यदि दक्षिणे वामे वरुण तत्त्वं वहति । तदा मासेन पांथ आगमिष्यति "तत्रैवास्ते सुखं क्षितौ" । पृथिवीतत्त्वे वहति तत्रैव सुखमास्ते इति वदेत् । वायौ तत्त्वे वहति पांथोऽन्यत्र गतस्तस्मादिति वाच्यः । अनले वह्नितत्त्वे वहति पांथो मृत इति वाच्यम् । अत्रापि पूर्णशून्यलक्षणं शुभाशुभं भावि वा शकुनानि ज्ञात्वा मरणं वदेत् ॥ ४६ ॥ अथान्यद्वामदक्षिणयोः फलमाह । उदयश्चंद्रमार्गेणेति । वामे स्वरे वहति यद्युदयः सूर्यस्येति शेषः सूर्यस्वरे वहति अस्तमयः तदा गुणानां संघातो जायते विपरीते च विघ्नता । सूर्ये वहति सूर्योदयः चंद्रे वहति सूर्यास्तमनं तदा बहूनि विघ्नानि भवंति । अथवा सूर्येणैवोदयास्तमने भवतस्तदापि बहुविघ्नता । अथ वामस्वरेणैव सूर्यास्तमयोदयौ स्तस्तदापि बहुविघ्नता ॥ ४७ ॥

पक्षतोतिक्रमाद्व्याधिर्द्विपक्षादिष्टनाशनम् ॥ पक्षत्रयमतिक्रम्य जायते मरणं ध्रुवम् ॥ ४८ ॥ वामे वा दक्षिणे वापि धराष्टांगुलदीर्घिका ॥ षोडशांगुलमापः स्युस्तेजश्च चतुरंगुलम् ॥ द्वादशांगुलदीर्घः स्याद्वायुर्व्योमांगुलेन हि ॥ ४९ ॥ पृथ्वी पीता सितं वारि रक्तवर्णो धनंजयः ॥ मारुतो नीलजीमूत आकाशो वर्णपंचकः ॥५० ॥

अथान्यदाह । पक्षेति । वामदक्षिणस्वरवशात् उक्तशुभपक्षतो यद्यशुभपक्षता भवति उदये चंद्रमार्गेण सूर्येनास्तमनं यदीति शुभपक्षमतिक्रम्य विपरीतपक्षमाश्रित्य यद्युदयास्तमयौ पक्षमतिक्रमणं तदा व्याधिः स्यात् । पक्षद्वयमतिक्रम्येष्टनाशनम् । पक्षत्रयमतिक्रम्य मरणम्॥४८॥ अथ पृथिव्यादितत्त्वानां ज्ञानमाह । वामे वा दक्षिणे वापीति । पृथ्वीतत्त्वम् अष्टांगुलदीर्घं

वहति । तत्र कर्तव्यता । स्वराभ्यासी षोडशांगुलं शंकुं हस्ते कृत्वा स्वराभ्यासं कुर्यात् वामे वा दक्षिणे वा वहति तत्र नासापुटसंलग्नं शंकुं कृत्वा परीक्षेत किं तत्त्वं वहति । अष्टांगुलसीमामात्रं यदि वायुः संचरति तदा पृथिवीतत्त्वम् । एवमपरेषां विचारात् ज्ञानात् प्रश्नं वदेत् ॥ ४९ ॥ अथ पुनः प्रश्ने मुष्टिमनोविषये धृतवस्तुनो वर्णज्ञानार्थं पृथिव्यादीनां वर्णमाह । पृथ्वी पीतेति । प्रश्ने विषयगतं पृथिव्यादिवर्णेन वर्णं वदेत् सुगमम् ॥ ५० ॥

पीतवर्णं चतुष्कोणं लमध्यं पृथिवीपुरम् ॥ वमध्यं षड्दाकारं श्वेतं वारुणमंडलम् ॥ ५१ ॥ रेफयुक्तं त्रिकोण च रक्ताभं वह्निमंडलम् ॥ अष्टपत्रं यमध्यस्थं हरितं वायुमंडलम् ॥ ५२ ॥ हमध्यं वर्तुलाकारं धूम्राभं व्योममंडलम् ॥ पंचतत्त्वेषु भेदोयं कथितः पूर्वसूरिभिः ॥५३॥ मारणं मोहनं स्तंभं विद्वेषोच्चाटनं वशम् ॥ प्रेरणाकर्षणं क्षोभं भानुनाड्युदये कुरु ॥ ५४ ॥ शांतिकं पौष्टिकं क्षेमं दिव्यौषधिरसायनम् ॥योगाभ्यासादिकर्माणि कर्तव्यानि निशाकरे ॥ ५५ ॥ चंद्रसूर्यस्वराभ्यासं ये कुर्वंति सदा नराः ॥ अतीतानागतं ज्ञानं तेषां हस्तगतं सदा ॥ ५६ ॥ इति सूक्ष्मस्वरोदयप्रकरणम् ॥ इति श्रीब्रह्मयामलीयस्वरोदये नरपतिजयचर्यायां हंसचारो नाम द्वितीयोऽध्यायः ॥ २ ॥

अथाचार्यः पंचतत्त्वानां भेदनामान्याह । पीतवर्णं चतुष्कोणमिति । पंचतत्त्वस्य पृथक् भेदा आगमे प्रोक्ताः । यरलवहैर्वर्णैर्मंत्रबीजमुक्तम् । अत्र पार्थिवादिपंचतत्त्वरूपेण युंजंति युक्त्या किल यत्र यत्रेति । तत्र तत्र स्वरूपे प्रष्टुरुत्तरं दद्यात् । अत्र प्रश्ने चिंतितादिप्रश्ने पृथिवीतत्त्वेन् पीतवर्णं चतुष्कोणं वस्तु वदेत् । जलतत्त्वेन षट्कोणं श्वेतवस्तु वदेत् । रक्ताभं त्रिकोणं वह्नितत्त्वेन । अष्टकोणं हरितं वायुतत्त्वेन वदेत् । धूम्राभं वर्तुलं व्योमतत्त्वेन वदेत् अन्यदपि यत्र यादृशी युक्तिर्घटते स्फुरति तत्र स्वयुक्त्या प्रश्नोत्तरं दद्यात् । अन्यच्च योगशास्त्रे वामदक्षिणचंद्रसूर्यस्वरयोर्भेदेन शरीरमुक्तम् । "सर्वेषामेव जंतूनां मूर्ध्नि तिष्ठति चंद्रमाः । अधो भागे रविः प्रोक्तो मृत्युकाले विपर्ययात् । योनिः स्त्रीणां भवेच्चंद्रो नराणां सूर्य उच्यते ॥ उभौ तौ सृष्टिसंहारौ जंतूनां नात्र संशयः" । सुगमौ । नात्यंतिकं प्रयोजनिकौ ॥ ५१ ॥ ५२ ॥ ५३ ॥ ५४ ॥ ५५ ॥ ५६ ॥ इति श्रीपाठकश्रीहरिवंशात्मजमहादेवविरचितायां नरपतिजयचर्याटीकायां जयलक्ष्म्यां हंसचाराध्यायो द्वितीयः ॥ २ ॥

भेदा ये स्वरपंचके निगदिता नैसर्गिकाः कालजास्तेषां बालकुमारयौवनजरानैधन्यवस्थास्तथा ॥ ताञ्जानंति गुरूपदेश-

विधिना भेदप्रभेदाश्च ये ते जानंति फलं शुभाशुभमयं कालत्रये निश्चितम् ॥ १ ॥ इदं प्रथममंगम् ॥ अथातः संप्रवक्ष्यामि चक्रं त्रैलोक्यदीपकम् ॥ विख्यातं सर्वतोभद्रं सद्यः प्रत्ययकारकम् ॥ १ ॥ ऊर्ध्वगा दश विन्यस्य तिर्यग्रेखास्तथा दश ॥ एकाशीतिपदं चक्रं जायते नात्र संशयः ॥२॥ अकारादिस्वराः कोष्ठेष्वीशादिविदिशि क्रमात् ॥ सृष्टिमार्गेण दातव्याः षोडशैवं चतुर्भ्रमम् ॥ ३ ॥ कृत्तिकादीनि धिष्ण्यानि पूर्वाशादि लिखेत् क्रमात् ॥ सप्त सप्त क्रमादेतान्यष्टाविंशतिसंख्यया: ॥ ४ ॥

भेदा ये स्वरपञ्चकेति ॥ १ ॥ इति प्रथममंगं समाप्तम् । अथातः संप्रवक्ष्यामीति । अथातोऽत्रानन्तर्यार्थे । हंसचारानन्तरं सर्वतोभद्रनामचक्रं प्रवक्ष्यामि । किंविशिष्टं त्रैलोक्य दीपकं दीप इव दीपकं त्रैलोक्यं दीपयति प्रकाशयति घटपटादिवत् । त्रैलोक्यदीपकं विख्यातं लोकप्रसिद्धं तेन च द्वीपदेशव्यापि । सद्यः प्रत्ययकारकम् । विचार्यमाणशुभाशुभकप्रतीतिकारकम् ॥ १ ॥ अथ चक्रन्यासमाह । ऊर्ध्वगा दश विन्यस्येति । सुगमम् ॥ २ ॥ अकारादीति । चक्रं प्राङ्मुख उपविश्य लिखेत् नैर्ऋत्ये तत्र स्वरा अकारादि अःपर्यन्ताः स्वरा लेख्याः । कुत्रेत्याकांक्षया ईशादौ विदिशि क्रमात् तत्र क्रमः । अकार ईशानकोणे आकार आग्नेये । इकारो नैर्ऋत्ये । ईकारो वायव्ये । पुनरुकार ईशानकोणे । अकारस्याधः ऊकारस्त्वाग्नेये । आकारस्याधः एवं षोडश स्वरान् ईशानादिचतुष्कोणेष्वेव विन्यसेत् । एवं लिख्यमानेषु स्वरेषु सृष्टिमार्गेण चतुर्भ्रमं चतुरावृत्त्या स्वरलिखनं स्यात् ॥ ३ ॥ स्वरलिखनादनन्तरं नक्षत्रलिखनमाह । कृत्तिकादीनीति स्वरलिखनकोष्ठकांतश्चतुर्दिक्षु सप्त सप्त लिखेत् । यथा तत्र पूर्वस्यां प्रथमपंक्तौ सप्त ७ तदधः पश्चात्पुनस्तदधो यः कोष्ठस्तदधः एकं कोष्ठकं एवं चतुर्दिक्षु कोष्ठका उद्धृता ज्ञातव्याः । तत्र प्राक् सप्त कृत्तिकादीनि लिखेत । मघादिसप्त दक्षिणस्यां लिखेत् । मैत्रादिसप्त पश्चिमायां लिखेत् । धनिष्ठादिसप्त उत्तरस्यां लिखेत् ॥४॥

अवकहडादिषु प्राच्यां मटपरताश्च दक्षिणे ॥ नयभजखाश्च वारुण्यां गसदचलास्तथोत्तरे ॥ ५ ॥ त्रयस्त्रयो वृषाद्याश्च पूर्वाशादिक्रमाद् बुधैः ॥ राशयो द्वादशैवं तु मेषान्ताः सृष्टिमार्गतः ॥ ६ ॥

अथ नक्षत्राधः कोष्ठलिखनमाह । अवकहडेति । अवकहडाः पञ्च वर्णाः नक्षत्राधः पञ्चकोष्ठकेषु प्राच्यां लिखेत् । मटपरताः पञ्च वर्णाः दक्षिणनक्षत्राधः पञ्चकोष्ठेषु लिखेत् । नजभय-

खांश्च वर्णान् पश्चिमान् पश्चिमनक्षत्राधः पञ्चकोष्ठेषु लिखेत् । गसदचलान् पञ्चवर्णान् उत्तरनक्षत्राधः कोष्ठे लिखेत् ॥ ५ ॥ अथ पूर्वाशादितृतीयपंक्तौ त्रिकोष्ठे लिखनीयमाह । त्रयस्त्रयो वृषाद्येति । वृषादित्रीन् राशीन् पूर्वदिक्कोष्ठे लिखेत् । सिंहादित्रीन् दक्षिणाकोष्ठे लिखेत् । वृश्चिकादित्रीन् पश्चिमायां लिखेत् । कुम्भादित्रीन् उत्तरस्यां लिखेत् ॥ ६ ॥

शेषेषु कोष्ठकेष्वेवं नंदादितिथिपंचकम् ॥ वाराणां सप्तकं लेख्यं भौमादित्यक्रमेण च ॥ ७ ॥ भौमादित्यौ च नंदायां भद्रायां बुधशीतगू ॥ जयायां च गुरुः प्रोक्तो रिक्तायां भार्गवस्तथा ॥ ८ ॥ पूर्णायां शनिवारश्च लेख्यं चक्रेऽत्र निश्चितम् ॥ इत्येष सर्वतोभद्रविस्तारः कीर्तितो मया ॥९॥ ऊर्ध्वदृष्टी च भौमार्कौ ३ । १ केकरौ बुधभार्गवौ ४ । ६ ॥ समदृष्टी च जीवेंदू ५ । २ शनिराहू ७ । ८ अधोदृशौ ॥ १० ॥ नीचस्थितोर्ध्वदृष्टिश्च उच्चैरधो निरीक्षयेत् ॥ समश्च पार्श्वतो दृष्टिस्त्रिधा दृष्टिः प्रकथ्यते ॥ ११ ॥

अथ शेषेषु लिखनीयमाह । शेषेष्विति । शेषेषु चतुर्दिक्षु उद्धृतैकैकचतुःकोष्ठेषु सैकमध्यकोष्ठेषु प्रतिपन्नंदातिथिपञ्चकं क्रमेण लिखेत् । प्रतिपत्पूर्वकोष्ठे लिखनीया । द्वितीया दक्षिणकोष्ठे । तृतीया पश्चिमे । चतुर्थी उत्तरे पञ्चमी मध्ये । एवं षष्ठ्यादिनंदापञ्चकं पूर्वाशादि लिखेत् । तथैकादश्यादिपञ्चकं पूर्वाशादि लिखेत् । एवं कृते पञ्चमी दशमी पौर्णिमेति त्रिपूर्णा मध्ये लिखिता भवंति । वाराणामिति । भौमादिक्रमेण वाराणां सप्तकं लेख्यम् । वारलिखनं नन्दादितिथिनां सार्द्धमुक्तं तेन किं येषु कोष्ठेषु नन्दादयो लिखितास्तेष्वेव भौमादीन् लिखेत् । तत्र च भौमं नन्दाधो लिखेत् । बुधं भद्राकोष्ठके लिखेत् । गुरुं जयाकोष्ठे लिखेत् । शुक्रं रिक्ताकोष्ठे लिखेत् । शनिं पूर्णातिथिकोष्ठे लिखेत् । पुनः रविं भौमेन सह । चन्द्रं बुधं भद्राकोष्ठे लिखेत् । वारांतं लिखेत्सर्वतोभद्रं संपूर्णं भवति । तथा च कविरेवाह । "इत्येष सर्वतोभद्रप्रस्तारः कीर्तितो मया । पूर्वशास्त्रानुसारेण यथोक्तं ब्रह्मयामले" । सुगमम् ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥

शन्यर्कराहुकेत्वाराः क्रूराः शेषाः शुभग्रहाः ॥ क्रूरयुक्तो बुधः क्रूरः क्षीणचंद्रस्तथैव च ॥ १२ ॥ यस्मिन्नृक्षे स्थितः खेटस्ततो वेधत्रयं भवेत् ॥ ग्रहदृष्टिवशेनात्र वामसम्मुखदक्षिणे ॥ १३ ॥ भुक्तं भोग्यं तथा क्रांतं विद्धं क्रूरग्रहेण भम् ॥ शुभाशुभेषु कार्येषु वर्जनीयं प्रयत्नतः ॥ १४ ॥

अधुना चक्रविचारणाय ग्रहाणां क्रूरसौम्यविभागमाह । शन्यर्कराह्विति । सुगमम् ॥ १२ ॥ अथ ग्रहदृष्ट्या वेधविचारमाह । यस्मिनृक्षेति । ग्रहस्थितनक्षत्रात् ग्रहदृष्ट्या वेधत्रितयं भवति । यतो ग्रहाणां त्रिविधा दृष्टिः । एकया दृष्ट्या सन्मुखं विध्यति । एकया दक्षिणे विध्यति, एकया वामे विध्यति ॥ १३ ॥ १४ ॥

वक्रगे दक्षिणा दृष्टिर्वामदृष्टिश्च शीघ्रगे ॥ मध्यचारे तथा मध्या ज्ञेया भौमादिपंचके ॥ १५ ॥ सूर्यमुक्ता उदीयंते सूर्यग्रस्तास्तगामिनः ॥ ग्रहाद्द्वितीयगे सूर्ये स्फुरद्बिंबाः कुजादयः ॥ १६ ॥ समा तृतीयगे ज्ञेया मंदा भानौ चतुर्थगे ॥ वक्रा स्यात्पंचषष्ठेऽर्के त्वतिवक्राष्टसप्तमे ॥ १७ ॥ नवमे दशमे भानौ जायते कुटिला गतिः ॥ द्वादशैकादशे सूर्ये भजते शीघ्रतां पुनः ॥ अदृश्यतां पुनर्लोके व्रजंत्यर्कगता ग्रहाः ॥ १८ ॥

यया त्रिविधदृष्ट्या त्रिविधो वेधस्तासां लक्षणमाह । वक्रगे दक्षिणेति । पृथक् पृथक् त्रिविधा दृष्टिर्भौमादीनां पंचानां भवति । यतो भौमादयः पंच वक्रिणो भवंति । शीघ्रगा भवंति । मध्यगा भवंति अतस्त्रिविधया दृष्ट्या त्रिविधो वेधः प्राक् लोके वेधत्रयं भवेत् इत्यत्र विशेषः । ग्रहः सव्यापसव्येन चक्षुषा वेधयेत्पुनः ॥ ऋक्षाक्षरस्वरादींस्तु सम्मुखे नांत्यमक्षरमिति एके आचार्याः । सव्यापसव्येन चक्षुषा नक्षत्रवर्णस्वरादीन्वेधयेत् । सन्मुखेन ग्रहोंऽत्यभं नक्षत्रमेव विध्येत् । तथा चास्मिन्नर्थे रणहस्तिसंज्ञग्रंथे श्लोकाः वेधमेव कथयंति । " वं नृयुग्मं तथा ओ च कन्या रं स्वातिमेव च ॥ अश्विनी रोहिणीसंस्थोऽभिजितं हंति पापकः ॥ कं कुलीरं हरिं पंच चित्रा मं लं च रेवती ॥ सौम्यस्थो हंति पापात्मा वैश्यं च पुरतः स्थितम् " इत्यादिसर्वत्रावगंतव्यम् । अथाचार्यो ग्रहगणितं विना ग्रहाणां मंदशीघ्रवक्रगतिलक्षणमाह सूर्यमुक्ता उदीयंत इति । प्रथमतो रविमंडलगता अस्तमयंति । ततो रवेर्मुक्ता उदयंति । अर्कात् अर्काक्रांतराशितो द्वितीयस्था ग्रहाः शीघ्रगाः शीघ्रगतयो भवंति ॥ अर्कात्तृतीयगास्तृतीयराशिस्थाः समाः समगतयः भानावर्के चतुर्थराशिस्थे मंदा भवंति । समगतिभ्यो मध्यगतिभ्यो न्यूनागतिः अतो मंदगतयः । पंचमे षष्ठे सूर्ये ग्रहा वक्राः स्युः अर्थादर्के पंचमषष्ठराशिस्थे भौमादयः पंच वक्रगतयो भवंति । केचित्तु रवेः सकाशात् नगाष्टके सप्ताष्टमस्थाने अतिवक्रा भवंति । नवमे दशमे वक्राः स्युः भानौ, ग्रहाणां कुटिला गतिर्जायते । द्वादशैकादशे सूर्ये ग्रहाः शीघ्रगा भवंति एतेन वक्रशीघ्रमध्यगत्या ग्रहाणां त्रिविधा दृष्टिर्भवति अत एवोक्तं वक्रगे दक्षिणा दृष्टिरित्यादि ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥

राहुकेतू सदा वक्रौ शीघ्रगौ चंद्रभास्करौ ॥ गतेरेकस्वभावत्वादेषां दृष्टित्रयं सदा ॥ १९ ॥ क्रूरा वक्रा महाक्रूराः सौम्या वक्रा महाशुभाः ॥ स्युः सहजस्वभावस्थाः सौम्या क्रूराश्च शीघ्रगाः ॥ २० ॥

अथ विशेषग्रहाणां विशेषगतिमाह । राहुकेतू सदा वक्राविति । राहुकेतू सदैव वक्रिणौ पश्चात्सदा गतयः चन्द्रभास्करौ शीघ्रावेव । एषां रविचन्द्रराहुकेतूनां गतेरेक एव स्वभावः रविचन्द्रयोः शीघ्रैव गतिः राहुकेत्वोर्वक्रैव । एकस्वभावाद्गतेः सदा दृष्टित्रयम् । त्रिभिरेव दृष्टिभिर्वामसम्मुखदक्षिणाभिरेते चत्वारः पश्यन्ति । केप्येवं यथा यस्य गतिर्भवति तथैव गत्या वेधोपि तेन रविचन्द्रौ सदैव शीघ्रगौ तयोर्वामा दृष्टिः राहुकेत्वोर्वक्रा दृष्टिः । वक्रत्वाद्दक्षिणे च दृष्टिः । तथा चरणहस्तिः । "वक्री दक्षं कर्णगत्याथ वामं शीघ्रो विध्येद्वीक्षतेग्रे समस्तम् । नित्यं वक्रो राहु केतू रवींदू नित्यं शीघ्रौ दृश्यया तुल्यरूपौ" ॥ १९ ॥ अथान्यदाह क्रूरा वक्रेति । "सौम्याः शीघ्रा बलिष्ठाः स्युः क्रूराः शीघ्रा बलोज्झिताः ॥" क्रूराः पापाः क्रूरं दुष्टं कुर्वंति स्वभावोयं पापानां सौम्याः शुभग्रहाः शुभमेव कुर्वंति । ते च पापाः क्रूराः वक्रा यदि भवंति तदा अतिशयेन क्रूरा भवन्ति । सौम्याः शुभा यदि वक्रा भवन्ति तदा महाशुभाः स्युरिति । सौम्या शीघ्रगा यदि स्युर्भवंति तदा सहजस्वभावस्था भवंति यः साहजिकस्वभावस्तत्रस्थाः शीघ्राः सन्तो भवंति शुभं स्वभावेन कुर्वंति । किंतु वक्राः सन्तो यथातिशुभं कुर्वंति तथा न । एवं क्रूराश्च शीघ्रगाः शीघ्रगतयः स्वस्वभावेन स्थिताः भवंति मंगलस्य यः स्वभावः सः स्वस्वभावेन फलदायकः । तथा च जातके । 'वक्रिणस्तु महावीर्याः शुभा राज्यप्रदा ग्रहाः ॥ पापा व्यसनदाः पुंसां कुर्वंति च वृथाटनम् ॥ वृथा स्वदशायां पुरुषं भ्रमयंति इतस्ततो भ्रमयन्ति ॥ २० ॥

## ॥ सर्वतोभद्रचक्रम् ॥

| अ | कृ | रो | मृ | आ | पु | पु | श्ले | आ |
|---|---|---|---|---|---|---|---|---|
| भ | उ | अ | व | क | ह | ड | ऊ | म |
| अ | ल | ऌ | वृ | मि | क | ॡ | म | पू |
| रे | च | मे | ओ | र १ मं ६ ११ | औ | सिं. | ट | उ |
| उ | द | मी | ४ शु ९ १४ | ५ १० १५ श | २ चं ७ १२ बु | क | प | ह |
| पू | स | कुं | अः | ३ गु ८ १३ | अं | तु | र | चि |
| श | ग | ऐ | म | ध | वृ | ए | त | स्वा |
| ध | ऋ | ख | ज | भ | य | न | ॠ | वि |
| ई | श्र | अ | उ | पू | मू | ज्ये | अ | इ |

अवर्णादिस्वरौ द्वौ द्वावेकवेधे द्वयोर्व्यधः ॥ स्वरयुक्तात्मनोर्वेधश्चानुस्वारविसर्गयोः ॥ ॥ २१ ॥ बवौ शसौ षखौ चैव ज्ञेयौ ङञौ परस्परम् ॥ एकेन द्वितयं ज्ञेय शुभाशुभखगव्यधे ॥ २२ ॥ घङछाः षणठा-

**श्चैव धफढास्थझञास्तथा ॥ एतत्त्रिकं त्रिकं विद्धं विद्धैः कपदभैः क्रमात् ॥ २३ ॥**

अधुना वेधमाह। अवर्णादिस्वराविति। स्वरयुक्त आत्मा ययोरनुस्वारविसर्गयोः तयोरपि वेधेन द्वयोरिव वेधो ज्ञातव्यः। यतो द्वावकरसहितावुच्चार्येते। अकारं विना तयोरुच्चारणमशक्यम् ॥ २१ ॥ अथ वर्णवेधे विशेषमाह। अथ चक्रे पवर्गीयबकार उक्तः। यवर्गीयसकार उक्तः सवर्गीयौ षकारसकारौ यदि कस्यापि नाम्नि पवर्गीयोबकारः तालव्यः शवर्गीयषकारः कवर्गीयः खकारः स्यात् तदा तेषां वेधश्चक्रोक्तवसषवेधैनैव ज्ञातव्यः ॥ २२ ॥ स एव वेधः पुनरुच्यते। घङछाः खणठा इति। एते वर्णाः घङछादयो नक्षत्रचरणस्थाः कुघङछ-आर्द्रा। पुषणठहस्तः। भुधफढपूर्वाषाढा। दुथझञउत्तराभाद्रपदा। आर्द्राहस्तपूर्वाषाढोत्तराभाद्रपदानां चरणवर्णाः। तेषां मध्ये कपभद एते वर्णाश्चक्रे निवेशिताः तेषां वेधे अपरे त्रयो वर्णा वेधिता भवंति ॥ २३ ॥

**घङछा रौद्रगे वेधे षणठां हस्तगे ग्रहे ॥ धफढाः पूर्वाषाढायां थझञा भाद्र उत्तरे ॥ २४ ॥ अवर्णादिस्वरद्वंद्वेष्वेकवेधे द्वयोर्व्यधः॥ युक्तस्वरात्मके वेधे त्वनुस्वारविसर्गयोः ॥ २२ ॥**

तथाचाह। घङछा रौद्रगे इति। आर्द्रानक्षत्रगते पापे शुभे घङछा वर्णा विद्धा भवंति। हस्तस्थे ग्रहे षणठा वर्णा विद्धा भवंति। पूर्वाषाढास्थे ग्रहे धफढाः विद्धा भवंति। उत्तराभाद्रस्थे ग्रहे थझञा वर्णा विद्धा भवंति ॥ २४ ॥ २५ ॥

**कोणस्थधिष्ण्योर्मध्ये अंत्यादिपादगे ग्रहे ॥ अस्वरादिचतुष्कस्य वेधः पूर्णातिथेः क्रमात् ॥ २६ ॥**

कोणस्थेति। अत्र चतुःकोणे द्वयं नक्षत्रं न्यस्तमस्ति तत्र ईशानकोणे भरणीकृत्तिके आग्नेये मघाश्लेषे नैर्ऋत्ये विशाखाअनुराधे वायव्ये श्रवणधनिष्ठे पृथक् द्वयोर्द्वयोरंत्यादिपादगतयोर्ग्रहयोर्दृष्ट्या कोणस्थानां चतुर्णां स्वराणां वेध उत्पद्यते। तथा पूर्णातिथीनां वेधः। अत्राम्नायः भरणीकृत्तिकयोराद्यन्तचरणस्थो ग्रहः अउलृओस्वरान्वेधयति। आश्लेषामघाद्यन्तचरणस्थः आऊलॄऔस्वरान् वेधयति। विशाखानुराधाद्यन्तचरणस्थः इऋएअंस्वरान् वेधयति। श्रवणधनिष्ठाद्यन्तचरणस्थ ईॠऐअः स्वरान्वेधयति। चतुःकोणस्थाः पूर्णातिथीन्वेधयंति। अथान्यव्याख्यानम्। अस्वरादिचतुष्कस्य वेधः। अआइईएषां चतुर्णां वेधः। यतः एषां केनापि वेधो न संभवति उकारादीनां वर्णराशिभिः सह वेधो भवत्येव। अत एषामवेधनव्याख्यानम् ॥ २६ ॥

**एकादिक्रूरवेधेन फलं पुंसां प्रजायते ॥ उद्वेगश्च भयं हानी रोगो मृत्युः क्रमेण च ॥ २७ ॥ ऋक्षे भ्रमोऽक्षरे हानिः स्वरे व्याधिर्भयं तिथौ ॥ राशौ विद्धे महाविघ्नं पंचविद्धो न जीवति ॥ २८ ॥**

अथ वेधफलमाह । एकादिक्रूरवेधेति । शन्यर्कराहुकेतवराः पञ्चपापा उक्ताः । तेषामेकतमे पुंसां नाम्नः स्वरवर्णराशिनक्षत्राद्येकतमे वेधे उद्वेगो जायते उद्विग्नमना भवति । द्विग्रहवेधे भयं भवति । परचक्रादितः स्वचक्रादितो वा । कस्मादपि भयं भवति । त्रिग्रहवेधे भंगः राजादयः संग्रामात्पलायन्ते । अर्थवादे अर्थभंगः । विद्यावादे विद्याभंगः । इत्यादि बोद्धव्यम् । एकद्वित्र्यादिवेधकल्पना स्वरवर्णादावपि । ग्रहेष्वपि विचारः । स्वरवर्णनक्षत्रतिथिराशिपञ्चपापग्रहाणां समासमविचारेणोद्वेगादिफलम् । यदि एको वर्णादीनां मध्ये एकेन ग्रहेण वेधस्तदा उद्वेगः कियानपि द्विग्रहवेधे बहूद्वेगः । एवं ग्रहसंख्यया उद्वेगस्य विकल्पना । तथा वर्णस्वराणां द्विवेधे द्वित्र्यादिग्रहेण तथा भयमपि वदेत् । एवं भंगादीनां त्रयाणामेकादिग्रहवेधेन स्वरवर्णादिषु तथा न्यूनाधिक्यं वदेत् ॥ २७ ॥ यस्मिन्वेधे उद्वेगादीनां विचारस्तमाह ॥ ऋक्षे भ्रम इति । नक्षत्र एकादिग्रहवेधे भ्रमः । ज्ञानराहित्यम् । तदेवोद्वेगः उद्वेगादपि भ्रमो भवति । वर्णे विद्धे हानिः कार्यादीनां हानिर्विषयादीनां वा । स्वरे व्याधिः विद्धे सति भवति । एवं चतुःपापविद्धे रोग उक्तः । चतुर्भिर्ग्रहैः स्वरे विद्धे व्याधिग्रस्तो भवति । अत्र विचारः एकादिवेधेन उद्वेगादय उक्ताः । तेन किं समुदायेनापि भवंति । चतुर्भिर्ग्रहैर्विद्धे स्वरे उद्वेगादिव्याधिपर्यन्तं फलानि भवंति । तिथौ विद्धे भयं पूर्वमुक्तं द्वाभ्यां वेधे भयम् । अत्र तिथौ वेधे भयं द्विपापवेधे सति भयं वाच्यम् । अत्रापि उद्वेगश्च भयमपि । राशौ विद्धे महाविघ्नं, महाविघ्नं मृत्युः । पश्चादुक्तं पञ्चग्रहवेधेन मृत्युः । अत्रराशौ विद्धे महाविघ्नमुक्तं तेन किम् राशेः पञ्चपापग्रहवेधात् विघ्नमादेश्यं मृत्युरित्यर्थः । पञ्चविद्धो न जीवति । अस्यायमर्थः । वर्णादीनां पञ्चानांवेधे सुतरां मृत्युर्भवति । ग्रंथकारस्याभिप्रायो राशेः पञ्चग्रहे वेधादेव मृत्युरिति ॥ २८ ॥

**एकवेधे भयं युद्धे युग्मवेधे धनक्षयः ॥ त्रिवेधेन भवेद्भंगो मृत्युर्वेधचतुष्टये ॥२९॥ यथा दुष्टफलाः क्रूरास्तथा सौम्याः शुभप्रदाः ॥ क्रूरयुक्ताः पुनः सौम्या ज्ञेयाः क्रूरफलप्रदाः ॥ ३० ॥**

विशेषमाह । एकवेधेति । एकग्रहवेधे युद्धे भयमादेश्यम् । नान्यत्र । युग्मग्रहवेधे धनक्षयः । त्रिवेधे संग्रामात्पलायते । चतुर्ग्रहे वेधे मृत्युः संग्रामे मृत्युर्भवति । अत्रापि ग्रहसंख्या वर्णादिसंख्या विचारः कर्त्तव्य इति पूर्ववत् ॥ २९ ॥ अथ पापग्रहेवेधवशात् शुभग्रहाणां वेधफलमादिशति । यथा दुष्टफला इति । यथा एकादिक्रूरवेधे उद्वेगादि फलमुक्तम् । तथा

एकादिशुभवेधे हर्षलाभसौख्यादिभिः फलं कल्पयेत्। अत्र क्रूरयुक्तः क्रूर एव भवति क्रूरफलप्रदः। अन्यथा युक्तोन्यथा शुभयुक्तोत्यर्थं शुभः। अत्र यद्यपि नोक्तं पापशुभमिश्रितं फलं वदेत् न्यूनाधिक्यं ग्रहवशात्। पापाधिके पापफलमधिकम्। शुभाधिके शुभफलमधिकम्॥ ३०॥

अर्कवेधे मनस्तापो द्रव्यहानिश्च भूसुते॥ रोगपीडाकरः सौरी राहुकेतू च विघ्नदौ॥ ३१॥ चंद्रे मिश्रफलं पुंसां रतिलाभश्च भार्गवे॥ बुधवेधे भवेत्प्रज्ञा जीवः सर्वफलप्रदः॥ ३२॥ सौम्यपापग्रहो हन्यान्नाम्नो व्याधिधनक्षयः॥ वेधे वैनाशिकर्क्षस्य त्रिवेधे चायुषो भयम्॥ ३३॥ स्वक्षेत्रस्थे बलं पूर्णं ६० पादोनं ४५ मित्रभे गृहे॥ अर्द्धं २० समगृहे ज्ञेयं पादं शत्रुगृहे स्थिते॥३४॥

यथा भ्रमो ऋक्षेक्षरे हानिरित्यादि पृथक् फलमुक्तं तथा रव्यादिवेधे पृथक् फलमाह। अर्कवेधे मनस्ताप इति। व्याख्या। अर्कवेधे सति मनस्तापो भवति। किमुक्तं भवति। उद्वेगो भ्रमो नक्षत्र विद्धे। तेन अर्कनक्षत्रे विद्धे मनस्तापो भवति। उद्विग्नमनाः। अक्षरे हानिरुक्ता तेन भौमेन विद्धे अक्षरे विद्धे द्रव्यहानिर्भवति। पूर्वमुक्तं स्वरे व्याधिः तेन शनिना स्वरे विद्धे रोगवान् भवति। राशौ विद्धे महाविघ्नं भवति। अत्र राहुकेतू च विघ्नदौ तेन राहुकेतुभ्यां राशौ विद्धे महाविघ्नं मृत्युः॥ ३१॥ अथ शुभग्रहवेधफलमाह। चंद्रे मिश्रफलमिति। चंद्रवेधे सति मिश्रं फलं पापशुभं। क्षीणचंद्रः पापयुक्तः क्षीणचन्द्रवेधे पापफलम्। पूर्णचन्द्रवेधे शुभफलम्। शुक्रवेधे रतिक्रीडादि स्त्र्यादिसौख्यम्। बुधवेधे प्रज्ञा भवति। हेयोपादेये विचारे यथार्थज्ञानं भवति। जीववेधे सर्वशुभफलं भवति। अभिलषितं शुभं भवतीत्यर्थः। कस्याप्यभिप्रायोयम्। एकवेधेर्थनाशश्च स्थानभ्रंशस्तथैव च॥ नाशश्चोभयवेधेन पापाभ्यां निर्दिशेन्मृतिम्॥ ३२॥ अथ विशेषमाह। सौम्यपापग्रहेति शुभपापौ यदि नाम्नो वैनाशिकर्क्षं नाम नक्षत्रत्रयोविंशतिम् २३ भं नक्षत्रं वेधयतस्तदा व्याधिधनक्षयो भवति। वैनाशिकं सामुदायिकं सांघातिकं च त्रिविधे मृत्युः॥ ३३॥ अथ यत्रस्थो ग्रहः स्वल्पमध्याधिकं पापशुभं ददाति तदाह। स्वक्षेत्रस्थे बलं पूर्णमिति॥ स्वक्षेत्रनवांशद्रेष्काणस्थे ग्रहे बलं पूर्णं ज्ञेयम्। मित्रभे मित्रराशौ नवांशे मित्रद्रेष्काणे च एकेन पादेनोनम्। कोर्थस्त्रिचरणं बलम्। अर्द्धबलं समगृहे पादं बलं शत्रुगृहे स्थिते ज्ञेयम्। इदं सामान्यमुक्तम्॥ ३४॥

इदं च सौम्यक्रूराणां बलं स्थानवशात्मकम्॥ एतदेव बलं बोध्यं सौम्य क्रूरे विपर्ययात्॥ ३५॥ स्थानवेधसमायोगे यत्संख्यं जायत बलम्॥ तत्संख्यं वेध्यवस्तूनां फलं ज्ञेयं विचक्षणैः॥

॥ ३६ ॥ ग्रहाः क्रूरास्तथा सौम्या वक्रमार्गोच्चनीचगाः ॥ स्थानं च वेध्यमित्येवं बलं ज्ञात्वा फलं वदेत् ॥ ३७ ॥ वक्रग्रहे फलं द्विघ्नं त्रिगुणं स्वोच्चसंस्थिते ॥ स्वभावजं फलं शीघ्रे नीचस्थो निष्फलो ग्रहः ॥ ३८ ॥

अथ विशेषमाह । इदं च क्रूरसौम्यानामिति । स्वक्षेत्रस्थे बलं पूर्णमित्यादिबलं बुध गुरु-शुक्रपूर्णचंद्राणां स्थानबलं ज्ञेयम् । एतदेव बलं पापग्रहाणां विपर्ययाज्ज्ञेयम् । तत्र विपर्ययः ॥९॥ "शत्रुगृहे स्थिते पूर्णं पादोनं समवेश्मनि । अर्द्धं मित्रगृहे ज्ञेयं पादं पापे स्ववेश्मनि ॥" विपर्ययार्थः श्लोकेनैव व्याख्यातः ॥ ३५ ॥ ३६ ॥ अथ विचारमाह । ग्रहाः क्रूरा इति । क्षेत्रशब्देन स्थानमुच्यते । "बलं ज्ञात्वा फलं ब्रूयात् स्थान वेधे यथार्थतः" स्वगृहं स्थानम् । मित्रगृहम् । तदपि शत्रुगृहमपि समस्थानस्थितेन समस्थानवक्रमार्गोच्चादिर्गैर्ग्रहस्थानं वेध्य-मिति किम् । तत्र व्याख्यायते । स्वक्षेत्रस्थेन स्थानबलिना ग्रहेण विद्धे नक्षत्रे वक्रत्वेनाधिक-बलिना ग्रहवेधे यत्फलमुक्तमस्ति तत्फलं पूर्णं भवति । यथा रविणा विद्धे नक्षत्रे सिंहस्थेन स्वस्थानस्थेन मनस्ताप उक्तः । मनस्तापश्चरणपूर्णो भवति । सम्यक् पादफलं भवति । स्व-क्षेत्रस्थेन गुरुणा च विद्धे सति जीवः सर्वफलमिति पूर्णं फलम् । पापलोपो मतिभ्रमः पूर्णो भवति । उद्वेगश्च भयं च भंगश्च रोगश्च मृत्युश्च एते अर्थाः पूर्णा वाच्याः । यस्मिन् यस्मिन् विद्धे भयादय उक्ताः तस्मिन् स्वक्षेत्रस्थेन ग्राहेण विद्धे भयादयः पूर्णा वाच्याः । स्वक्षेत्रस्थो यदि वक्री पूर्णत्वं द्विगुणम् । चतुर्भिः पादैः पूर्णः द्विगुणं चतुर्भिः फलम् । मित्रस्थेन ग्रहेण विद्धे भयाद्युत्पत्तिस्थानं तदा भयादयः पादोना वाच्याः । मित्रगेहगो भवति मित्रगृहं तदुच्चं चेत् । तदा नवगुणा भयादयो वाच्याः । शीघ्रगानां स्वभावमेव फलम् । स्थानबली शुभः शीघ्रं स्वगृहे पूर्णम् । मित्रगृहें पादोनमित्यादि नीचमेर्द्धफलपदः । मित्रगृहनीचगो भवति तदा शुभं सार्द्धचरणं फलं पाचयति । समगृहे अर्द्धफलम् । तद्गृहं नीचं चेत्तदा पादं फलम् । एवं स्वगृहेपि स्थानबलिनां ग्रहाणां वक्रादिफलैः सह फलाधिककल्पनां कुर्यात् ॥ ३७ ॥ तथा च वक्रग्रहे फलं द्विघ्नमिति ॥ ३८ ॥

तिथिराश्यंशनक्षत्रं विद्धं क्रूरग्रहेण यत् ॥ सर्वेषु शुभकार्येषु वर्जयेत्तत्प्रयत्नतः ॥ ३९ ॥न नंदति विवाहे च यात्रायां न निवर्तते ॥ न रोगान्मुच्यते रोगी वेधवेलाकृतोद्यमः ॥ ४० ॥ रोगकाले भवेद्वेधः क्रूरखेचरसंभवः ॥ वक्रगत्या भवेन्मृत्युः शीघ्रे यायी रुजान्वितः ॥ ४१ ॥ वेधस्थाने रणे भंगो दुर्गे खंडि प्रजायते ॥ कन्विप्रवेशनं तत्र योधघातश्च तत्र वै ॥ ४२ ॥

तिथिराश्यंशनक्षत्रमिति । "भुक्तं भोग्यं तथा क्रांतं विद्धं पापग्रहेण भम् । शुभाशुभेषु सर्वेषु वर्जनीयं प्रयत्नतः" । सुगमम् ॥ ३९ ॥ न नंदतीति । वेधवेलायां वेधकाले कृतविवाहो न नन्दति शुभं न याति । यात्रायां न निवर्तते । वेधसमये संग्रामादियात्रा न कार्या । न रोगान्मुच्यते रोगी वेधकाले रोगो यदि जायते तदनन्तरं पापवेध उत्पद्यते ततो रोगी रोगान्न मुक्तो भवति ॥ ४० ॥ तथा च वक्ष्यति । रोगकालेति । सुगमम् ॥ ४१ ॥ वेधस्थाने इति । यत्र ग्रामादिस्थाने वेधो भवति तत्र स्थितिं न कुर्यात् । ग्रामादिस्थानस्य स्वरवर्णादिवेधे तत्र ग्रामे स्थाने स्थितिं न कुर्यात् । क्षेत्रवेधे तत्र संग्रामं न कुर्यात्तस्मात् भंगो न भवति पलायते । ग्रामवेधे ग्रामस्त्यज्यते । दुर्गे सर्वतोभद्रचक्रं संस्थाप्य वेधं विचारयेत् । यद्दिशि नक्षत्रवर्णराशिस्वरवेधस्तत्र खंडिर्भवति । दुर्गं भज्यते । तथा वेधदिशि कपिप्रवेशनं कुर्यात् । योधघातश्च तत्र वै । योधनक्षत्रात् नक्षत्रपुरुषं लिखित्वा यत्रांगे नक्षत्रं सर्वतोभद्रे विद्धं भवति तत्र घातं कुर्यात् ॥ ४२ ॥

**यत्र पूर्वादिकाष्ठायां वृषराश्यादिगो रविः ॥ सा दिगस्तमिता ज्ञेया तिस्रः शेषाः सदोदिताः ॥ ४३ ॥ईशानस्थाः स्वराः प्राच्यां ज्ञेया आग्नेयगा यमे । नैर्ऋत्यस्थास्तु वारुण्यां वायव्यां सौम्यगा मताः ॥ ४४ ॥ नक्षत्राणि स्वरा वर्णा राशयस्तिथयो दिशः ॥ ते सर्वेस्तं गता ज्ञेया यत्र भानुस्त्रिमासिकः ॥ ४५ ॥**

अथ चक्रविचारमाह । यत्र पूर्वादीति । ईशानस्था इति वृषमिथुनकुलीराः प्राच्याम् । तत्रस्थे रवौ प्राचीदिगस्तमिता तिष्ठति । सिंहकन्यातुलात्रिषु राशिषु दक्षिणास्तमिता तिष्ठति । वृश्चिकधनुर्मकराः पश्चिमायां तत्रस्थे रवौ पश्चिमास्तमिता तिष्ठति । कुम्भमीनमेषा उत्तरस्यां तत्रस्थे रवौ उत्तरदिगस्तमिता भवति ॥ ४३ ॥ ४४ ॥ तद्वशाद्विशेषमाह । नक्षत्राणीति । अथ पूर्वस्याम् अउऌओ एते स्वराः कृत्तिकारोहिणीमृगशिरआर्द्रापुनर्वसुपुष्याश्लेषाः सप्त नक्षत्राणि । अवकहडाः पंचवर्णाः वृषाद्यास्त्रयः नन्दास्त्रयस्तिथयः । रविभौमवासरौ एते वृषादित्रयमासिके रवावस्तमितास्तिष्ठन्ति । एवं चतुर्दिक्षु नक्षत्राणि स्वरवर्णा राशयस्तिथयो दिशोऽस्तंगता ज्ञेयाः ॥ ४५ ॥

**नक्षत्रेस्ते रुजो वर्णे हानिः शोकः स्वरेस्तगे ॥ राशौ विघ्नं तिथौ भीतिः पञ्चास्ते मरणं ध्रुवम् ॥ ४६ ॥ यात्रायुद्धं विवादश्च द्वारं प्रासादहर्म्ययोः ॥ न कर्तव्यं शुभं चान्यदस्ताशाभिमुखं नरैः ॥ ॥ ४७ ॥ अस्ताशायां स्थितं यस्य यदा नामाद्यमक्षरम् ॥ तदा तु सर्वकार्येषु ज्ञेयो दैवहतो नरः ॥ ४८ ॥ कवौ कोटे तथा द्वंद्वे चतुरंगे महाहवे ॥ उद्यमोस्तंगतैर्योधैर्वर्जनीयो जयार्थिभिः ॥**

॥ ४९ ॥ नक्षत्रेऽभ्युदिते पुष्टिर्वर्णे लाभः स्वरे सुखम् ॥ राशौ जयस्तिथौ तेजः पदाप्तिः पञ्चकोदये ॥ ५० ॥

अस्तदिक्स्थपृथक्फलमाह । नक्षत्रेस्तेति । इदमपि फलं पूर्वफलेन सह उद्वेगश्च भयमित्यादि सह मेलयित्वा फलं ब्रूयात् । अस्यार्थोपि तदनुगत एव ॥ ४६ ॥ अथास्तमितायां दिशि क्रियानिषेधमाह । यात्रायुद्धेति । अथ श्रेयांसीच्छद्भिः पुरुषैरस्ताशाभिमुखं यात्रा न कार्या । युद्धं च न कार्यम् । विवादो विद्याविवादः प्रासादस्य द्वारगृहस्य च । एतत्सर्वमस्ताशाभिमुखं न कुर्यात् ॥ ४७ ॥ अथान्यदस्तमितफलमाह । अस्ताशायां स्थितमिति ॥ सुगमम् ॥ ४८ ॥ क्वौ कोटेति । नक्षत्राणि स्वरा वर्णा राशयो येषां योधानाम् अस्तंगता भवंति ते योधा अस्तंगता ज्ञेयाः । तैरस्तंगतैर्योधैः किं विवर्ज्यम् । कोटं युद्धं वर्ज्यम् । द्वंद्वयुद्धं वर्ज्यम् विशेषाच्चातुरंगे महाहवे न तिष्ठेत् ॥ ४९ ॥ अथानन्तरं नक्षत्रस्वरादीनामुदितानां फलमाह । नक्षत्रेभ्युदितेति । ऋक्षेभ्युदिते शरीरपुष्टिः । वर्णे लाभः । नक्षत्रवर्णस्वरराशितिथिषु पंचसूदितेषु पदाप्तिः राज्यादिपदप्राप्तिः स्यात् ॥ ५० ॥

प्रश्नकाले भवेद्विद्धं यल्लग्नं क्रूरखेचरैः ॥ तद्दुष्टं शोभनं सौम्यैर्मिश्रैर्मिश्रफलं मतम् ॥ ५१ ॥ ग्रहाद्भिन्नं तु यल्लग्नं फलं लग्नस्वभावतः ॥ ज्ञातव्यं देशिकेंद्रेण भाषितं यच्चरादिकम् ॥ ५२ ॥ क्रूरैरुभयतो विद्धा यस्याऽक्षरतिथिस्वराः ॥ राशिर्धिष्ण्यं च पञ्चापि तस्य मृत्युर्न संशयः ॥ ५३ ॥ मंडलं नगरं ग्रामो दुर्गं देवालयं पुरम् ॥ क्रूरैरुभयतो विद्धं विनश्यति न संशयः ॥ ५४ ॥

अथ प्रश्नकाले वेधफलमाह । प्रश्नकाले भवेदिति । सुगमम् ॥ ५१ ॥ ग्रहाद्भिन्नमिति । यच्चरादिके लग्ने प्रश्नफलमुक्तं तद्देशिकेंद्रेण ज्योतिर्विदा सर्वैर्ग्रहैरविद्धे लग्ने तु फलं लग्नस्वभावतः फलं ज्ञेयम् । लग्नस्य यः स्वभावः । हृतनष्टादौ लाभालाभे जयाजये । नृचतुष्पदग्रामारण्यजलराशिस्वभावेन फलं ब्रूयात् । अथ चरादिके यत्फलमुक्तं तदाह । "चरलग्नोदये नष्टं दुर्लभं रोगिणो मृतिः । जातस्यापि च तत्रैव स्वल्पमायुर्विनिर्दिशेत् । स्थिरलग्नोदये नष्टं स्वल्पकालेन लभ्यते । तत्र रोगी चिराद्भव्यो दीर्घायुर्लब्धजन्मवत् । नष्टस्य शीघ्रं लाभः स्यात् रोगी शीघ्रं तु शोभनः । मध्यायुर्लब्धजन्मात्र द्विस्वभावोदयेषु यत्" इत्यादिचरादिके गदितम् ॥ ५२ ॥ अथान्यत् । क्रूरैरुभयत इति वेधस्त्रिविध उक्तः । वामदक्षिणसम्मुखः । उभयदिक्स्थो वामेन विध्यति वामदृष्ट्या उभयत्र वेधः एवं सम्मुखदृष्ट्या उभयदिक्स्थो वेधयति । अथवा दक्षिणदृष्ट्या वा उभयत्र वेधः कस्यापि दिशि कस्मिन्नपि नक्षत्रे मध्येगतिर्ग्रहस्तिष्ठति ।

तत्संमुखदिशि तन्नक्षत्रे समसूत्रस्थनक्षत्रे समसूत्रस्थनक्षत्रेऽपरो मध्यगतिर्ग्रहस्तिष्ठति तदा तयोः सम्मुखे वेधः। एवं क्रूरैरुभयतो विद्धः पंचवर्णतिथिस्वरादयो यस्य मर्त्यस्य तस्य संग्रामे मृत्युः। तथा जायते यथा मृत्युर्भवति ॥ ५३ ॥ मंडलं नगरमिति। क्रूरैरुभयतो विद्धमिति। पूर्वमेव व्याख्यातम्। अग्रेऽशचक्रे बोद्धव्यम्। अपरं सुगम्। वर्णादिपंचकमपि अत्रापि बोद्धव्यम् ॥ ५४ ॥

कृत्तिकादित्रिकाद्ये भे क्रूराविद्धे च कूर्मतः ॥ देशा नाभिस्थदेशाद्या विनश्यंति यथाक्रमम् ॥५५॥ कृत्तिकायां तथा पुष्ये रेवत्यां च पुनर्वसौ ॥ विद्धे सति क्रमाद्वेधो वर्णेषु ब्राह्मणादिषु ॥ ५६ ॥ तैलं भांडं रसो धान्यं गजाश्वादिचतुष्पदम् ॥ सर्वं महर्घतां याति यत्र क्रूरो व्यवस्थितः ॥ ५७ ॥ क्रूरवेधसमायोगे यस्योपग्रहसंभवः ॥ तस्य मृत्युर्न संदेहो रोगाद्वाऽथ रणेपि वा ॥ ५८ ॥ सूर्यभात्पंचमं धिष्ण्यं ज्ञेयं विद्युन्मुखाभिधम् ॥ शूलं चाष्टमभं प्रोक्तं सन्नियातं चतुर्दशम् ॥ ५९ ॥ केतुरष्टादशे प्रोक्त उल्का स्यादेकविंशतौ ॥ द्वाविंशहितमे कंपस्त्रयोविंशे च वज्रकम् ॥ ६० ॥

अथान्यत्र वेधफलमाह। कृत्तिकादीति। कूर्मचक्रे कृत्तिकादित्रिकाद्ये नक्षत्रे तदेकतमे यदि क्रूरैरुभयतो विद्धे सति नाभ्यादौ नवधा विभागोक्तदेशा विनश्यंति। तत्र कृत्तिकादित्रिभं कूर्मनाभौ। कृत्तिकादित्रिके क्रूरैरुभयतो विद्धे कूर्मनाभिस्था देशाः। "संकेता मिथिला चंपा कौशाम्बी कौशिकी तथा। अहिच्छत्रं गया विंध्यमंतर्वेदिश्च मेखला। कान्यकुब्जं प्रयागश्च मध्यदेशो विनश्यति" इति। तत्रायमाम्नायः। सर्वे देशा विनाशं न यांति किंतु कृत्तिकादित्रिनक्षत्रे विद्धे नाभ्युक्तदेशानां मध्ये यस्य यस्य वर्णाः स्वरादयः पंचक्रूरैरुभयतो विद्धा भवंति स देशो विनाशं याति। अयं विचारः ॥ ५५ ॥ अथान्यद्वेधविषयविचारमाह। कृत्तिकायामिति। अयमर्थः। समुदायेन सर्वेषां न करोति। देशे विद्धे तद्देशग्रामे विद्धे कृत्तिकायादिचतुर्षु विद्धेषु ब्राह्मणादीनां पृथक् नाम्नां वर्णादिपंचके विद्धे फलं वदेत्। परंतु यैर्यैर्ग्रहैः क्रूरैर्वेधः क्रियते स स चेद्द्वादशारचक्रे तत्तज्जन्मराशिं पश्यति तदा फलं भवति।। इदमग्रे विशिष्योक्तमस्ति। यत्र यत्र पापविद्धे विनाशः। तत्र शुभदृष्टे जयता वक्तव्या "पूर्वात्रयं तथा ज्ञेयं ब्राह्मणानां प्रकीर्तितम्। उत्तरात्रितयं पुष्यं क्षत्रियाणां विनिर्दिशेत्। पौष्णं मैत्रं मघा चैव प्राजापत्यं विशां स्मृतम्। आदित्यमश्विनीहस्तशूद्राणामभिजित्तथा। विद्धैरेभिर्द्विजातीनां कारुकाणां च शेषके" इति ॥ ५६ ॥ अथान्यद्विषये क्रूरवेधविचारः। तैलं भांडमिति। कूर्मच-

क्रोक्तप्रतिदेशे देशे क्रूरग्रहवेधे च तैलं भांडं गुडशुद्धयादिविद्धे सति तद्देशे ग्रामे सर्वं महर्घं भवतीति । बहुधनेनापि दुर्मिलं भवति । शुभग्रहविद्धे समर्घं भवति । स्वल्पधनेन बहुमिलति ॥ ५७ ॥ क्रूरवेधेति ॥ ५८ ॥ अथोपग्रहमाह । सूर्यभात्पंचमं धिष्ण्यमिति ॥ ५९ ॥ केतुरिति ॥ ६० ॥

निर्घातश्च चतुर्विंशे उक्ता अष्टावुपग्रहाः ॥ स्वस्थाने विघ्नदाः प्रोक्ताः सर्वकार्येषु सर्वदा ॥ ६१ ॥ जन्मभं कर्म आधानं विनाशं सामुदायिकम् ॥ सांघातिकमिदं धिष्ण्यं षट्कं सार्वजनीयकम् ॥ ६२ ॥ ज्ञातिदेशाभिषेकैश्च नवधिष्ण्यानि भूपतेः ॥ वेधं ज्ञात्वा फलं ब्रूहि सौम्यैः क्रूरैः शुभाशुभम् ॥६३॥ जन्मभं जन्मनक्षत्रं दशमं कर्मसंज्ञकम् ॥ एकोनविंशमाधानं त्रयो विंशं विनाशभम् ॥ ६४ ॥ अष्टादशं च नक्षत्रं सामुदायिकसंज्ञकम् ॥ सांघातिकं च विज्ञेयमृक्षं षोडशमत्र हि ॥ ६५ ॥

निर्घातश्च चतुर्विंशेति । स्वस्थाने इति । "स्वस्थानात्कुरुते वेधं गजदंष्ट्रानुसारतः"। विद्युन्मुखादयोऽष्टावुपग्रहाः सर्वदा सर्वकार्येषु विघ्नदाः परंतु स्थाने एतावता यत्रयत्रोपग्रहा भवंति तत्तनक्षत्रं शुभकार्ये वर्जनीयम् । एते उपग्रहाः स्वस्थानथा गजदंष्ट्रानुसारेण वामे दक्षिणे च वेधं कुर्युः सम्मुखं न वेधयंति । विद्युन्मुखो रविर्ज्ञेयः शूलश्चंद्रः प्रकीर्त्तितः। सन्निपातः कुजो ज्ञयो बुधः केतुः प्रकीर्तितः । उल्का ज्ञेया सुराचार्यो वज्रं भार्गव उच्यते। कंपः शनैश्चरो ज्ञेहो राहुर्निर्घात एव च । यद्येन वर्त्तते विद्धं पूजां तस्य तु कारयेत्। एतेषां ग्रहत्वेन द्वादशारचक्रे दृष्टिरपि भवति ॥ ६१ ॥ अथान्यदाह । जन्मभं कर्मेति जन्मनक्षत्रादि षट्नक्षत्रं सार्वजनीयकं सर्वजनविषयं ज्ञेयम् । यतो जन्मनक्षत्रादिदं प्रोक्तम् ॥ ६२ ॥ अथ विशेषमाह । ज्ञातिदेशेति ॥ ६३ ॥ अधुना तत्तन्नामांकितं जन्मभं जन्मनक्षत्रं दशमं कर्मसंज्ञकमिति ॥ ६४ ॥ अष्टादशं च नक्षत्रमिति ॥ ६५ ॥

षट्त्रिभं राज्यभं प्रोक्तं जातिनामस्वजातिभम् ॥ देशभं देशनामर्क्षं राज्यर्क्षमभिषेकभम् ॥६६॥ मृत्युः स्याज्जन्मभे विद्धे कर्मभे क्लेश एव च ॥ आधानर्क्षे प्रवासः स्याद्विनाशे बंधुविग्रहः ॥६७॥ सामुदायिकभेऽनिष्टं हानिः सांघातिके तथा ॥ जातिभे कुलनाशश्च बंधनं चाभिषेकभे ॥ ६८ ॥ देशर्क्षे देशभंगश्च क्रूरै रेवं शुभैः

शुभम् ॥ उपग्रहसमायोगान्मृत्युर्भवति नान्यथा ॥ ६९ ॥ भयं भंगश्च घातश्च मृत्युर्भगः पुरःस्थितैः क्रूरैरेकादिपंचांतैर्युधि वेधे फलं भवेत् ॥ ७० ॥

षट्त्रिभमिति । सुगमम् ॥ ६६ ॥ अथैषामुभयत्र वेधे फलमाह । मृत्युः स्याज्जन्मभे विद्धेति ॥ ६७ ॥ सामुदायिकेति ॥ ६८ ॥ देशर्क्षेति । उपग्रहे समायोगात् जननमे विद्धे मृत्युः । कर्मभे क्लेश एव चेत्यादि यदुक्तं तत्सर्वमुपग्रहयोगादवश्यं भविष्यतीति वाच्यम् । शुभैर्विद्धे शुभम् । शुभाशुभैर्मिश्रं फलम् । जातिभं संहितायामुक्तमस्ति । "पूर्वात्रयं सानलमग्रजानां राज्ञां तु पुष्येण सहोत्तराणि । स पौष्णमैत्र्यं पितृदैवतं च प्रजापतेर्भं च कृषीवलानाम् ॥ आदित्यहस्ताभिजिदश्विनी च वणिग्जने स्वाम्यमुपागतानि । सार्पं विशाखा श्रवणं भरण्यश्चंडालजातेरपि निर्दिशंति" इत्यादौ जातिनक्षत्राणि बोद्धव्यानि । जन्मादीनि षट् नक्षत्राणि नाडीसंज्ञकानि । राज्ञो जातिदेशाभिषेकर्क्षैस्त्रिभिः सह नवनक्षत्राणि नाडीसंज्ञकानि । नाडीनक्षत्रे विद्धे च शुभं किमपि न कुर्वीत ॥ ६९ ॥ अथान्यत् । भयं भंगश्चेति । जन्मादिनक्षत्रे एकादि पंचांतैः क्रूरैः पुरःस्थितैः सन्मुखवेधकारिभिर्विद्धे सति भयमादि फलं वदेत् । एकेन पापेन सिद्धे भयं वदेत द्वाभ्यां भंगः पलायनं त्रिभिर्घातः तुर्भिर्बंधः पंचभिर्मृत्यु ॥ ७० ॥

तिथिमृक्षं स्वरं राशिं वर्णं चैव तु पंचकम् ॥ यद्दिने विध्यते चंद्रस्तद्दिने स्याच्छुभाशुभम् ॥ ७१ ॥ अथार्घं संप्रवक्ष्यामि यदुक्तं ब्रह्मयामले ॥ एकाशीतिपदे चक्रे ग्रहवेधाच्छुभाशुभम् ॥ ७२ ॥ देशः कालस्ततः पण्यमिति त्रीण्यर्घनिर्णये ॥ चिंतनीयानि वेध्यानि सर्वकालं विचक्षणैः ॥ ७३ ॥ देशोथ मंडलं स्थानमिति देशस्त्रिधोच्यते ॥ वर्ष मासो दिनं चेति त्रिधा कालोपि कथ्यते ॥ ७४ ॥ धातुर्मूलं च जीवश्च इति पण्यं त्रिधा मतम् ॥ अथ त्रिकत्रिकस्यास्य वक्ष्यामि स्वामिखेचरान् ॥ ७५ ॥

अथ विद्धे सति कदा फलं तन्निर्णयमाह ॥ तिथिमृक्षमिति ॥ धिष्ण्यादिपंचकं शुभो वेधयेत् । यद्दिने चंद्रः पंचकं विध्यति तद्दिने शुभं वदेत् । धिष्ण्यादिपंचके पापविद्धे चंद्रवेधे सति तद्दिने अशुभं वदेत् ॥ ७१ ॥ अथार्घं संप्रवक्ष्यामीति । स्पष्टम् ॥ ७२ ॥ अथ देशकालवशात् विषयवेधनिर्णयमाह । देशःकाल इति । वणिजामर्घे देशनिर्णयः । कस्मिन् देशे समर्घं महर्घं पण्यं भविष्यति । पण्य विक्रयद्रव्यम् । कालनिर्णयश्च कस्मिन्वर्षे समर्घं महर्घं अयने ऋतौ मासे वा पण्यस्यापि निर्णयः । वणिजां त्रयाणामेव निर्णयः ॥ ७३ ॥ अथ देशानां विभागमाह । देशोथमंडलमिति सुगमम् ॥ ७४ ॥ धातुर्मूलं चेति । धातवःसुवर्णरजतादयः ।

मूलं चन्दनागुरुजटामांसीसुगंधतृणादयः । जीवश्च गजतुरगकस्तूरिकागोवृषभादयः । यतः वणिजां लाभार्थं स्वस्वसामर्थ्येन पृथक्पृथक् पण्यं विक्रेतव्यं वा । तत्र पृच्छति वणिक् कस्मिन् देशे कस्मिन् काले स्थाने वा धात्वादि पण्यं समर्घं महर्घं वा भविष्यतीति विचार्य कथय।अथवा राजादयः पृच्छन्ति राजा च । कस्मिन् स्थाने कस्मिन् काले दुर्गादिकमहं करिष्यते । अन्ये च कस्मिन् देशे कस्मिन् काले मया जीवनार्थं गंतव्यं वासो वा कारयितव्य इति बहुधा बह्वो विकल्पनाः संति ॥ ७५ ॥

देशेशा राहुमंदेज्या मंडलस्वामिनः पुनः ॥ केतुसूर्यसिताः स्थान-नाथाश्चंद्रारचंद्रजाः ॥७६॥ वर्षेशा राहुकेत्वार्की जीवो मासाधिपः पुनः ॥ भौमार्कज्ञसिता ज्ञेयाश्चंद्रः स्याद्दिवसाधिपः॥७७॥धात्वीशाः सौरिपातारा जीवेशा ज्ञेंदुसूरयः ॥ मूलेशाः केतुशुक्रार्की इति पण्याधिपा ग्रहाः ॥ ७८ ॥ पुंग्रहा राहुकेत्वर्कजीवभूमिसुता मताः ॥ स्त्रीग्रहौ शुक्रशशिनौ सौरिसौम्यौ नपुंसकौ ॥७९॥ सितेंदू सित-वर्णेशौ रक्तेशौ भौमभास्करौ ॥ पीतौ सौम्यगुरू कृष्णा राहुकेत्व-र्कजा मताः ॥८०॥ ग्रहो वक्रोदये स्वांशे उदये च बलाधिकः ॥ देशादीनां स एकैकः स्वामी खेटस्तदा मतः ॥ ८१ ॥

अथ देशादीनां त्रित्रिकाणामधिपतीनाह । देशेशा राहुमंदेति । राहुशनिबृहस्पतयो देशाधिपाः । यथा देशः तीरभुक्तिः । मंडलं तत्र लक्ष्मणावती । स्थानं किं रत्नपुरम्। अत्र देशेशा उक्ताः सामन्यतः सर्वदेशाधिपतयः । देशराशिवशान्नाधिपतयः तथा स्थानकालयोरपि । मंडलाधिपाः केतुसूर्यशुक्राः । स्थानाधिपाश्चंद्रभौमबुधाः ॥ ७६ ॥ अथ त्रिधा कालाधिपतीनाह । वर्षेशेति ॥ ७७ ॥ धात्वीशाः सौरिपातारा इति । अत्रापि स्वभावतोऽधिपतयः । न तु तत्तद्राशिवशात् ॥ ७८ ॥ पुंग्रहा राह्विति । संज्ञामात्रप्रयोजनं न तु स्वभावतः ॥ ७९ ॥ अथ ग्रहाणां वर्णानाह । सितेंद्विति । देशेशा राहुमंदेज्या इत्यारभ्य सुगमार्थाः ॥ ८० ॥ देशानां नाथाः पृथक् उक्ताः कस्यापि त्रयोधिपतयः कस्यापि द्वौ कस्यापि चत्वारः किं समुदायेन भवंति कालवशाद्वा बलवशाद्वा अधिपतयः इत्याशंक्य विचारमाह । ग्रहो वक्रोदय इति देशेशा राहुमंदेज्येत्यादिषु यो वक्री भवति उदितो भवति स्वांशे यः स्थितः यत्र कुत्रचिद्राशौ स्वगृहे स्वोच्च इत्यादिलक्षणेन षड्बलेनापि यो भवति त्रयाणां स एवैकदेशादीनां तदा कालेऽधिपतिः कल्प्यः अग्रे अन्यो यदि बली भविष्यति तदा स एव कल्प्यः । इत्यादिना अधिपविचारः ॥ ८१ ॥

वक्रोच्चगः स्वहर्म्येषु पूर्णवीर्यो ग्रहो भवेत् ॥ मेषो वृषो मृगः कन्या कर्कमीनतुलाधराः ॥८२॥ आदित्यादिग्रहोच्चाः स्युर्नीचं यत्तस्य सप्तमम् ॥ परमोच्चा दिशो रामा अष्टाविंशास्तिथींद्रियाः ॥८३॥ सप्तविंशास्तथा विंशाः सूर्यादीनां तथांशकाः ॥ परमोच्चात्परं नीच-मर्धचक्रांतसंख्यया ॥ ८४ ॥ उच्चान्नीचाच्च यत्तुर्ये समं स्थानं तदुच्यते ॥ तदग्रपृष्ठगे खेटे बलं त्रैराशिकं मतम् ॥ ८५ ॥

अथ पुनर्बलं विचारयति । वक्रोच्चगः स्वहर्म्येष्विति । स्वगृहे पूर्णवीर्यः वक्री पूर्णवीर्यः । उच्चगः पूर्णवीर्यः । तत्रापि यदि वक्री तदाप्यधिकबलः । उच्चस्थानादग्रगे पृष्ठस्थे वा त्रैराशिकेन बलं कल्प्यम् ॥ ८२ ॥ ८३ ॥ ८४ ॥ ८५ ॥

उच्चस्थे च बलं पूर्णं नीचांशस्थे बलं दलम् ॥ स्वक्षेत्रस्थे बलं पूर्णं पादोनं मित्रभे गृहे ॥ ८६ ॥ अर्धं समग्रहे ज्ञेयं पादं शत्रुगृहस्थिते ॥ त्रैराशिकवशाज्ज्ञेयमंतरे तु बलं बुधैः ॥ ८७ ॥ एवं देशादिनाथा ये ग्रहवेधे व्यवस्थिताः ॥ सुहृदः शत्रवो मध्याश्चिंतनीयाः प्रयत्नतः ॥ ८८ ॥ स्वमित्रसमशत्रूणां वेधे देशादिषु क्रमात् ॥ शुभग्रहः शुभंधत्ते चतुस्त्रिद्व्येकपादकैः ॥ ८९ ॥ स्वमित्रसमशत्रूणां वेधे देशादिषु क्रमात् ॥ दुष्टं दुष्टग्रहः कुर्यादेकद्वित्रिचतुःपदैः ॥ ९० ॥

पुनर्बलविचारमाह । उच्चसंस्थे बलं पूर्णमिति । नीचराशौ नीचनवांशे अर्द्धं बलम् । किं बहुव्याख्यानेन । जातकोक्तबलविचारेण जातकपद्धतिबलविचारेण स्थानदिक्कालनिसर्गचेष्टादृग्भेदैर्यो बलविचारः । स्वोच्चस्वगृहनवांशमित्रवर्गबलविचारेण यो बली त्रयाणां भवति स नाथः कल्प्यः । द्वावपि बलिनौ तदा द्वावपि नाथौ स्थाप्यौ बलाधिक्यात् त्रयोपि स्थाप्याः । बलेन देशाधिनाथं ज्ञात्वा फलं वदेत् ॥ ८६ ॥ ८७ ॥ अधुना फलविचारः । एवं देशादिनाथा इति । एवमिति वक्रोच्चादिबलविचारेण देशादीनां ये नाथा वर्तमानकाले भवंति ते ग्रहवेधे व्यवस्थिताः । कोर्थः वामसन्मुखदक्षिणदृष्ट्या वेधयितुं व्यवस्थिताः । ते देशाधिपा देशस्य वर्णादिपञ्चकं वेधयंति । देशपतिं च देशनामराशिपतिं वेधयंति । तत्र वेधे समुत्पन्ने वेधकर्तारो देशाधिपस्य किं सुहृदः शत्रवो वा मध्या उदासीना वा इति प्रयत्नतो विचारणीयाः ॥ ८८ ॥ अस्मिन् ज्ञाते किं कर्तव्यमित्याह । स्वमित्रसममिति । यदि देशमंडलग्राम-

धिपतयः स्वाधिपतयो भवंति देशपतिर्वेधकर्ता यदि देशराशिपतिर्भवति। स च शुभस्तदा चतुर्भिः पादैः शुभं देशस्य धत्ते। मित्रश्चेत्तदा त्रिभिः पादैः शुभं करोति। समश्चेत्तदा द्विचरणेन शुभं धत्ते। शत्रुश्चेत्तदा एकेन पादेन। एवं वर्षमासदिनानां शुभग्रहबलविचारेण शुभम्। तथा धातुमूलजीवाधिपविचारेण स्वमित्रादिविचारेण चतुस्त्रिद्व्येकपादैः शुभग्रहस्य वेधात् शुभं कल्पयेत्॥ ८९॥ अथ क्रूरवेधविचारमाह। स्वमित्रसमेति। क्रूरग्रहस्य विचारोयमेव। स्वगृही एकेन पादेन। मित्रगृही द्वाभ्याम्। समगृही त्रिभिः पादैः। शत्रुगृही चतुर्भिः पादैर्वेधात् दुष्टं फलं कुर्यादिति॥ ९०॥

**विद्धं पूर्णदृशा पश्यंस्तत्पादेन फलं ग्रहः॥ विदधात्यन्यथा ज्ञेयं फलं दृष्ट्यानुमानतः॥९१॥ वर्णादिस्वरराशीनां मेषाद्ये राशिमंडले॥ ग्रहदृष्टिवशात्सोपि वेधो मर्णादिके मतः॥ ९२॥ स्वरवर्णाः स्वचक्रोक्तास्तिथिवेधे च पीडिताः॥ तिथौ वर्णे च राशौ च स्वदृष्ट्या दृष्टिजं फलम्॥ ९३॥ अशुभो वा शुभो वापि शुक्ले विध्येत्तिथिं ग्रहः॥ सर्वं निजफलं दत्ते कृष्णपक्षे तु तद्दलम्॥ ९४॥ खेटस्य स्वांशके ज्ञेया पूर्णा दृष्टिः सदा बुधैः॥ दृष्टिहीने पुनर्वेधे न स्यात्किंचिच्छुभाशुभम्॥ ९५॥**

अधुना विद्धफलं दृष्ट्या प्रमाणयति। विद्धं पूर्णदृशेति। यो देशाधिपतिर्वेधकर्त्ता स्वमित्रादिचरणफलपाककारी यदि पश्यति तदा येन चरणेन फलं दातुकामः तत्फलमवश्यमेव भवति। तत्राम्नायः स्वगेहगश्चतुर्भिःपादैर्वेधे सति फलपाककारी यदि पश्यति तदा स एव वर्णादिपञ्चकं पूर्णदृशा पश्यति तदा यथार्थत्वेन फलं भवति। मित्रगृहगस्त्रिपादेन फलदायी त्रिपाददृष्ट्या च पश्यति तदा स्वभावजफलं भवति। त्रिपादेनैव फलं परिपच्यते। समगृहस्थो विध्यति तत् द्विपादेन फलम्। द्विपाददृष्ट्या च पश्यति तदा स्वभावतो द्विपादफलं भवति। शत्रुगृहगो यदि विध्येत् तदा पादनैकेन शुभम्। एकपादेन पश्यति तदा यथार्थत्वं फलम्। विशेषो व्याख्यायते। शत्रुगृहस्थो यदि पादेन वेधं फलम्। स चेत्पूर्णदृशा पश्यति तदा बाढं फलं सम्यक्। स्थानवेधदृष्टिवेधयोः समानत्वम्॥ ९१॥ अथ वर्णादिपञ्चके ग्रहदृष्टिमाह। वर्णादीति मेषाद्ये राशिमण्डले द्वादशारचक्रे। ग्रहो यंयं राशिम् एकादिपाददृष्ट्या पश्यति तदा तस्मिन् तस्मिम् राशौ यद्यद्वर्णादिपञ्चकमस्ति तत्तद्राशिदर्शनात् तदपि दृष्टं भवति॥ ९२॥ राशिस्थं वर्णादिपञ्चकं प्रदर्शयन्नाह। स्वरवर्णा इति। स्वरवर्णाः स्वरचक्रे उक्ताः पंचस्वराध्याये स्वरचक्रे ये स्वरवर्णा उक्तास्ते तिथिवेधे पीडिता भवंति। यथा। मगधदेशस्य विचारः मकारो वर्णः वर्णस्वर इकारः नक्षत्रं मघा। राशिः

सिंहः। तिथिर्द्वादशी कथमित्याकांक्षायाम् आद्ये तिथौ त्रयो वर्णा इत्याद्यर्थेन। एतद्वर्णादि-पंचकं स्वरचक्रे उक्तम्। एतद्वर्णादिपंचकं स्वस्वातिथिवेधपीडया पीडितं भवति। अथ पंचसु दृष्टिः कथं तद्धेतुमाह। तिथिवर्णेषु यो राशिस्तदृष्टे तद्राशिदृश्ये तद्दर्शितं भवति। यथा द्वादशी-तिथेर्मकारो वर्णः द्वादशीतिथिवेधेन मकारः पीडितो भवति। मकारस्य स्वर इकारः। एत-दुक्तं भवति। वर्णादिपंचकं नाम्न आद्यवर्णान्निरूप्यते। तिथिपीडया वर्णस्वराः पीडिता भवंति वर्णादिपंचके पृथक् वेधः संभवति। एकस्य पृथक् दृष्टिर्नास्ति मवर्णेन स्वरराशयो निरूप्यंते। वेधकारिभिर्ग्रहैर्द्वादशारचक्रे सिंहराशौ दृष्टे विद्धं वर्णादिपंचकं दृष्टं भवति। न पुनर्वर्णस्वराध-स्थाद्ये राशस्तस्मिन्नेकतमे दृष्टे वर्णादिपंचकं दृष्टं भवति ॥ ९३ ॥ अथ शुक्लकृष्णविशेषेण दृष्टि-फलं निरूपयति। अशुभो वेति। पश्चात्तिथिवेधेन पीडिता इत्युक्तेः स एव तिथिवेधे शुक्लपक्षे तिथिवेधेन पूर्णफलं भवति। कृष्णपक्षेऽर्द्धफलं ॥ ९४ ॥ ग्रहस्य पूर्णदृग्लक्षणमाह खेट-स्येति ॥ ९५ ॥

इत्येवं दृष्टिभेन निर्दिष्टं सकलं फलम् ॥ वर्णादिपंचके विद्धग्रहो दत्ते शुभाशुभम् ॥ ९६ ॥ सौम्यः पूर्णदृशा पश्यन्विध्यन्वर्णादिपं-चकम् ॥ फलं विंशोपकाः पंच क्रूरस्तु चतुरो दिशेत् ॥ ९७ ॥ वेधो वर्णादिके यावत् स्थानवेधे च यावती ॥ दृष्टिस्तदनुमानेन वाच्या विंशोपका बुधैः ॥ ९८ ॥ एवं विंशोपका यत्र सम्भवन्ति शुभाशुभाः ॥ अन्योन्यं शोधयेत्तेषां शेषं ज्ञेयं शुभाशुभम् ॥९९॥ वर्तमानार्घविंशांशकल्पनास्तेषु च क्रमात् ॥ वर्तमानार्घके देया पात्या चैव शुभाशुभे ॥ १०० ॥

इत्यवजिति। इत्यनेन दृष्टिवेधेन निर्दिष्टं सकलं फलं स्वगृहे स्वांशदृष्टिः पूर्णा दृष्टिः। अथ दृष्टौ सत्यां फलकल्पनां करोति। वर्णादि पंचकेति ॥ ९६ ॥ सौम्यः पूर्णदृशेति। सौम्याश्च-त्वार उक्ताः। बुधगुरुशुक्रपूर्णचंद्राः। पापा रविकुजशनिराहवः। एषां शुभपापानां शुभदृष्टौ विंशोपकात्फलं कल्पयेत्। तत्र चतुर्णां शुभानां पूर्णादिदृष्टिभिः पञ्चचतुरः संख्याः पृथक् स्थापनीयाः। यदि चत्वारः पूर्णदृशैव पश्यन्ति। तदा पंचचतुर्भिर्विंशतिसंख्या भवति एवं पापदृष्टावपि ॥ ९७ ॥ वेधो वर्णादिकेति। वर्णादिपञ्चके यावत् स्थाने वेधः स्वगृहस्थाः पूर्ण-दृशा मित्रगृहस्थास्त्रिपाददृशा। समगृहस्था द्विपाददृशा शत्रुस्थाश्चरणैकेन। एवं स्थानवेधो यावत्संख्यो भवति दृष्टिश्च यावती यावत्संख्या दशमतृतीये नवमपञ्चमे। १०। ३। ९। ५ चतुर्थाष्टमे ४। ८ कलत्रं च पश्यति पादवृद्ध्या फलानि चैवं प्रयच्छंति। एषा दृष्टिः अन-योर्वेधदृष्ट्योरनुमानेन बुधैर्विंशोपकाः कल्प्याः। शुभस्थानवेधा यावन्तः। दृष्टिरपि यावती

पृथक् कार्या । शुभस्य पूर्णदृष्टिवेधयोर्विंशोपकाश्चत्वारिंशद्भवंति ४० दृष्टिस्थानवेधयोः पाद-हीना विंशोपकास्त्रिंशत् ३० एवं द्विपादेन विंशतिः २० एकपादेन दश १० एवं शुभानां पृथक् पृथक् कृत्वा एकत्र कार्या । पापानामपि पृथक् कृत्वा विंशोपकान् एकत्र कुर्यात्॥९८ ततः किं कार्यमित्याह । एवं विंशोपकेति । सुगमम् ॥ ९९ ॥ वर्तमानार्थेति ॥ १०० ॥

देशध्वंसः प्रजापीडा नृपतिप्रध्वस्तथा॥ यत्र दृष्टिश्च तत्र स्याद्दु-र्भिक्षं मण्डले स्फुटम् ॥ १०१ ॥ अकालेपि फलं पुष्पं वृक्षाणां यत्र जायते ॥ स्वजातिमांसभुक्तिश्च दुर्भिक्षं तत्र रौरवम् ॥१०२॥ परचक्रागमस्तत्र विग्रहश्च स्वराजके ॥ ऋतोर्विपर्ययो यत्र दुर्भिक्षं मण्डले भवेत् ॥१०३॥ भूमिकंपो रजःपातो रक्तवृष्टिश्च जायते॥ देशे सर्वसुखोपेते वेधादेवं वदेद्बुधः ॥ १०४ ॥ वृक्षाणां जायते वृद्धिः स्वकाले फलपुष्पयोः ॥ सुभिक्षं क्षेमारोग्यं च प्रजानां तत्र जायते ॥ १०५ ॥ स्वचक्रं परचक्रं च न कदाचित्प्रजायते ॥ बांधवाः सुहृदस्तत्र शुभानां वेधसम्भवे ॥ १०६ ॥ दीपो यथा गृहस्यान्तरुद्योतयति सर्वतः ॥ तथेदं सर्वतोभद्रं चक्रं ज्ञानप्र-काशकम् ॥१०७॥ विना बलिं विना होमं कुमारीपूजनं विना ॥ शुभग्रहं विना देवि चक्रराजं न वीक्षयेत् ॥१०८॥ अविचार्यतया पृच्छेत्पृच्छकः कथकस्तथा ॥ द्वाविमौ विघ्नदौ प्रोक्तावत्र देवि न संशयः ॥१०९॥ जातकं च तिथिं राशिं विज्ञेयं नामतोज्ज्वलौ ॥ अज्ञातजातकानां तु समस्तमाभिधानतः ॥ ११० ॥ विस्तरेण मयाख्यातं यथोक्तं ब्रह्मयामले ॥ न देयं यस्य कस्यापि चक्रमे-तत्सुनिश्चितम् ॥ १११ ॥ इति ब्रह्मयामले नरपतिजयचर्यायां स्वरोदये सर्वतोभद्रचक्रं समाप्तम् ॥

अथ परिशिष्टं यदि पापदृष्टिवेधविंशोपकं तत्फलमाह देशध्वंसमिति । सुगमम् ॥ १०१ ॥ अकालेपीति ॥ १०२ ॥ परचक्रेति ॥ स्वराजके स्वकुले विग्रहः । सुगमम् ॥ १०३ ॥ भूमिकम्प इति ॥ १०४ ॥ अथ शुभानां यदि शेषविंशोपकं तत्फलमाह । वृक्षाणां जायते

वृद्धिरिति ॥ १०५ ॥ स्वचक्रमिति ॥ १०६ ॥ दीपो यथेति ॥ १०७ ॥ १०८ ॥ ॥ १०९ ॥ ११० ॥ १११ ॥ इति नरपतिजयचर्यास्वरोदयटीकायां जयलक्ष्म्यां सर्वतोभद्रचक्रं प्रथमम् ।

अथ शतपदचक्रम् ॥ चक्रं शतपदं वक्ष्ये भपादाक्षरसंभवम् ॥ नामादिवर्णतो ज्ञेया ऋक्षराश्यंशकास्तथा॥१॥तिर्यगूर्ध्वगता रेखा रुद्रसंख्या लिखेद्बुधः॥

॥ शतपदचक्रम् ॥

| अ | व | क | ह | ड | म | ट | प | र | त |
|---|---|---|---|---|---|---|---|---|---|
| इ | वि | कि | हि | डि | मि | टि | पि | रि | ति |
| उ | वु | कुघ ङछ | हु | डु | मु | टु | पुष णठ | रु | तु |
| ए | वे | के | हे | डे | मे | टे | प | रे | ते |
| ओ | वो | को | हो | डो | मो | टो | पो | रो | तो |
| न | य | भ | ज | ख | ग | स | द | च | ल |
| नि | यि | भि | जि | खि | गि | सि | दि | चि | लि |
| नु | यु | भुध फढ | जु | खु | गु | सु | दुथ झञ | चु | लु |
| ने | ये | भे | जे | खे | गे | से | दे | चे | ले |
| नो | यो | भो | जो | खो | गो | सो | दो | चो | लो |

जायते कोष्ठकानां तु शतमेकं न संशयः ॥२॥ न्यसेदवकहडादीनि रुद्रादिविदिशि क्रमात् ॥ पंच पंच क्रमेणैव शुद्धवर्णान्नियोजयेत् ॥३॥ पंचस्वरसमायोगादेकैकं पंचधा कुरु ॥ कुर्यात्कुपुभुदुस्थाने त्रीणित्रीण्यक्षराणि च ॥४॥ कुघङच्छ भवेत्स्तंभे रौद्रे त्वीशानगोचरे ॥ पूषणठ भवेत्स्तंभे हस्त आग्नेयसंज्ञके ॥ ५ ॥

शतपदमिति । भानां कृत्तिकादीनां तेषां पादा द्वादशाधिकशतम् ११२ तत्संभवं शतपदचक्रं वक्ष्यामि। नामादीति ॥ १ ॥ अथ चक्रन्यासमाह । तिर्यगूर्ध्वगतेति ॥ २ ॥ न्यसेदिति । चतुर्दिक्षु ईशानादिकोष्ठमादि कृत्वा पंचपंचकोष्ठेषु अवकहडान् वर्णान्विन्यसेत् । अवकहडा ईशाने मटपरता आग्नेयकोष्ठपंचसु । नयभजखा नैर्ऋत्यादिपंचसु कोष्ठेषु । गसदचला वायव्यादिकोष्ठेषु पंचसु ॥ ३ ॥ पुनः किं कुर्यादित्याह । पंचस्वरेति । अइउएओपंचस्वरैः सह अवकहडादीनां पंचवर्णानां पृथक् पृथक् पंचभिः स्वरैः संयोगं कुर्यात् तत्र अवकहडादीनामादौ अकार एव वर्णरूपस्तस्य पंचभिः स्वरैः संयोगे पंचस्वरा एव भवंति । अइउएओअकारात्परो वकारः पंचस्वरैः संयोगे

वविवुवेवो इति पंचधा जातः वकारात्परः ककारस्तस्य पंचस्वरसंयोगे ककिकुकेको पंच ककाराः । ककारात्परो हकारः पंचस्वरसंयोगे हहिहुहेहो पंचधा जाताः । हकारात्परस्य डकारस्य पंचस्वरसंयोगे डडिडुडेडो पंचधा जातः । एवं कृते अवकहडादीनां पंचविंशतिसंख्या जाता २५ एवं मटपरतादीनामाग्नेयादिस्थितानां पृथक् पृथक् पंचविंशतिः २५ स्वरवर्णसंयोगात्संख्या जायते तत्कृते शतसंख्या भवति वर्णानां १०० कुपुभुदुस्थान इति । कुवर्णस्य घङछास्त्रयो वर्णा देयाः पुवर्णस्य स्थाने षणठाः । भुवर्णकोष्ठे धफढाः । दुवर्णस्य स्थाने थझञाः । एवं कृते तृतीयपदचक्रवर्णा जायंते ॥ ४ ॥ श्लोकेनाह । कुघङच्छ भवेदिति ॥ ५ ॥

ऋक्षे पूर्वाभुधफढं स्तंभे नैर्ऋत्यगोचरे ॥ दुथझञास्तथा वायौ स्तंभ उत्तरभाद्रके ॥६॥ आर्द्रा हस्तस्तथाषाढपूर्वोत्तरपदाभिधे ॥ एवं स्तंभचतुष्कं च ज्ञातव्यं स्वरवेदिभिः ॥७॥ धिष्ण्यानि कृत्तिकादीनि प्रत्येकं चतुरक्षरैः ॥ साभिजित्यंशकास्तस्य शतैकं द्वादशाधिकम् ॥८॥ यदृक्षांशककोष्ठस्थः क्रूरः सौम्योपि वा ग्रहः ॥ ततस्तद्वेधयेत्तिर्यक् पुंसो नामाद्यमक्षरम् ॥९॥ सौम्यवेधे शुभं ज्ञेयमशुभं पापखेचरैः ॥ मिश्रैर्मिश्रफलं तत्र निर्वेधेन शुभाशुभम्॥१०॥

ऋक्षे पूर्वेति ॥ ६ ॥ आर्द्राहस्तेति । एवं स्तंभचतुष्कमिति । पूर्वपदं च उत्तरपदं च ते पूर्वोत्तरपदे ते प्राक् यस्याषाढस्य ते पूर्वाषाढोत्तराषाढे नक्षत्रे एतच्चतुष्कं स्तंभनक्षत्रं सर्वत्र बोद्धव्यम् । कोटादिस्थानचक्रे ॥ ७ ॥ अथ द्वादशाधिकशतैर्वर्णैः किं कुर्यादित्याह । धिष्ण्यानि कृत्तिकादीनीति । अइउएओवविवुवेवोककिकुकेकोहहिहुहेहोडडिडुडेडो । एषां पंचविंशतिवर्णानां चतुर्भिर्वर्णैः कृत्तिकादीनां चरणाः कल्प्याः । तच्चरणा एवांशकाः । तत्र अइउएवर्णाश्चत्वारः क्रमेण कृत्तिकाचरणाः । ओववि वुवर्णा रोहिणीचरणाः । वेवोकाकिवर्णा मृगशिरश्चरणाः । पश्चात् कुवर्णस्य घङछा वर्णा दत्ताः । तैश्चतुर्भिर्वर्णैरार्द्रानक्षत्रस्य चरणाः । केकोहहिपुनर्वसुचरणाः । हुहेहोडवर्णाः । पुष्यचरणाः । डिडुडेडोआश्लेषायाः । एवं दक्षिणादिदिक्स्थितैर्वर्णैस्तंभर्क्षवर्णसहितैर्मघादीनां नक्षत्राणां साभिजितां चरणाः कल्पिताः सन्ति ऋक्षपादवर्णा एवांशकाः शतपदचक्रे स्वस्वकोष्ठे स्थिताः सन्ति ॥ ८ ॥ संचारवशात् तत्रस्थे पापभे फलमाह । यदृक्षांशककोष्ठस्थ इति । पुंसो नामाद्यमक्षरमित्युपलक्षणम् । मनुष्यादिसर्वसत्त्वदेशादीनामाद्यमक्षरं वेधयेत् ॥ ९ ॥ सौम्यवेधेति । निर्वेधे शुभाशुभं न भवतीत्यर्थः ॥ १० ॥

**यदुक्तं सर्वतोभद्रे ग्रहोपग्रहवेधतः ॥ शुभाशुभफलं सर्वं तदिहापि विचिंतयेत् ॥ ११ ॥ इति यामलीये नरपतिजयचर्यायां स्वरोदये शतपदचक्रं समाप्तम् ॥**

यदुक्तं सर्वतो भद्रेति ॥ ११ ॥ इति शतपदचक्रं व्याख्यातं द्वितीयम् ॥ २ ॥

## ॥ अंशचक्रम् ॥



अष्टात्रिंशोर्ध्वगा रेखा अष्टाविंशतितिर्यगाः ॥ अंशचक्रं भवत्येवं यदुक्तमादियामले ॥ १॥ कृत्तिकादीनि भान्यत्र पादाक्षरक्रमेण च ॥ साभिजिन्ति न्यसेत्सर्वाण्यष्टाविंशतिसंख्यया ॥ २ ॥

अष्टात्रिंशोदूर्ध्वगेति । रेखाः समाः किंचित्कोष्ठोपरि गताः यथा तद्रेखोपरि द्वादशा-क्शतं कृत्तिकादीनां चरणवर्णा आइउएकृत्तिकाद्या लिख्यंते ॥ १ ॥ तदर्थमाह कृत्तिकादीनीति ॥ २ ॥

यो ग्रहो यत्र ऋक्षांशे तं तत्रैव न्यसेद्बुधः ॥ वेधयेत्सम्मुखं वर्णं क्रूरो वाथ शुभोपि वा॥३॥आद्यांशेन चतुर्थांशं चतुर्थांशेन चादिमम् ॥ द्वितीयेन तृतीयं तु तृतीयेन द्वितीयकम् ॥ ४ ॥ यस्य नामाक्षरं विद्धमंशचक्रे ग्रहेण तु ॥ क्रूरैरिष्टं शुभैर्हानिर्द्व्याद्यैर्मृत्युर्न संशयः ॥ ५ ॥ क्रूरोभयस्थिते वेधे मृत्युर्विघ्नं शुभाशुभैः ॥ शुभो, भयगते वेधे व्याधिः पीडा च बंधनम् ॥६॥ वैधव्यं च विवाहे च यात्रायां न निर्वतते ॥ रोगे मृत्यू रणे भंगः क्रूरवेधे न संशयः ॥७॥ अद्रयः सागरा नद्यो देवग्रामपुराणि च ॥ क्रूरवेधे विनश्यंति नात्र कार्या विचारणा ॥८॥ चंद्रऋक्षांशके वेधो भवेद्यद्यपरग्रहैः॥ तन्मानं तद्दिने वर्ज्यं सर्वदा शुभकर्मणि ॥ ९ ॥ इति नरपतिजय-चर्यायां स्वरोदये अंशस्वरचक्रम् ॥

यो ग्रह इति ॥ ३ ॥ अथ वेधमाह । आद्यांशेनेति । अयमर्थश्चक्रे ज्ञातव्यः ॥ ४ ॥ यस्य नामाक्षरमिति ॥ ५ ॥ क्रूरोभयस्थितेति ॥ ६ ॥ वैधव्यं चेति । यश्चरण उभय-पापविद्धस्तस्मिन् चरणे पाणिग्रहाद्विधवा भवति ॥ ७ ॥ अत्रांशचक्रवेधसामर्थ्यमाह अद्रयःसागरा इति । यत्र चक्रे क्रूरवेधे पर्वताद्या अपि नश्यंति । तत्र मनुष्यादीनां का वार्तेति । सर्वतोभद्रशतपदांशकेषु त्रयेषु यस्य वर्णादिपञ्चकं विद्धं तत् पर्वताद्रि नष्टमव-वश्यं भवति ॥ ८ ॥ चन्द्रऋक्षांशक इति । चन्द्रो नक्षत्रचरणस्थ एव कार्यकाले अंशं वेध-यति । तस्मिन्नंशे यद्यपरग्रहस्य वेधो भवति तदा तद्दिने तदृक्षपादं शुभकर्मणि वर्जयेत् ॥ ९ ॥ इति श्रीहरिवंशमहादेवविरचितायां जयलक्ष्म्यां स्वरोदयटीकायामंशचक्रं समाप्तम् ।



अथ चामरचक्राणि ॥ आदौ चक्रं समालिख्य छत्रत्रयसुशोभनम् ॥ अश्विन्यादि न्यसेत्तत्र सप्तविंशतिभानि च ॥ १ ॥ अश्विन्याद्यं मघाद्यं च मूलाद्यं च क्रमेण च॥उत्तरे पूर्वदक्षे च एतच्छत्रत्रयं मतम् ॥२॥ प्रतीचीमध्यरेखाग्रादीशानांतं हयाधिपः ॥ आग्नेयांतं नराधीशस्तन्मध्ये च गजाधिपः ॥ ३ ॥ अन्येषां भूभृतामृक्ष यत्र च्छत्रे व्यवस्थितम् ॥ तच्छत्रं तस्य भूपस्य शुभाशुभफलप्रदम्॥४॥

आदौ चक्रमिति ॥ १ ॥ अश्विन्याद्यमिति । अश्विन्याद्यं नवनक्षत्रात्मकं चक्रमुत्तरस्यां दिशि स्थितं वर्तते। मघाद्यं नवनक्षत्रात्मकं पूर्वस्यां दिशि स्थितम् । मूलाद्यं नवनक्षत्रात्मकं दक्षिणस्यां दिशि स्थितम् । छत्रत्रयस्यायं विभागः तत्र छत्रेषु त्रिषु बलनामाद्यनृपतयः स्थिताः तेषां नाम पृथक् बलनामभिरेव व्याख्यातम् । तेषां बलानां नाम आद्यं बलमश्वाः तदनंतरं गजाः । ततः परं पदातयः । तत्राश्वानामाद्यबलत्वं कथम् । तथा च नकुलविरचितशालिहोत्रे । "तस्य राज्ञो यशो लक्ष्मीर्धर्मकामार्थसंपदः । वाजिनो यस्य तिष्ठंति सर्वलक्षणलक्षिताः " । तथा च लक्ष्मीवाक्यम् "एकाहमपि यस्याश्वा निवसन्ति गृहांगणे । विष्णोर्वक्षःस्थलं त्यक्त्वा लक्ष्मीस्तस्य गृहे चिरम् "। तथाश्वेभ्यो हीनं बलं गजाः कथं तत्समर्थयन्नाह । " युद्ध्यंते तावन्मातंगा भिन्नाञ्जनसन्निभाः । दुर्जया दुर्निवारास्ते पादरक्षैस्तुरंगमैः । " तेभ्यो गजेभ्यो हीनाश्च सैन्यपदातयो नराः । तत्राश्वा अश्विन्यादिनक्षत्रसमाश्रिताः गजाश्च मघादिच्छत्रे स्थिताः नराश्च मूलादिच्छत्रे

स्थिताः । अयं विभागो यामलादिषु सर्वेषु ॥ २ ॥ अथ त्रयाणां चतुर्दिक्षु त्रिभाग तानाह । प्रतीचीमध्यरेखेति । अत्रोदाहरणे भूविभागः । तथा च राजविजये । "अश्वाधि गजाध्यक्षो नराध्यक्षः क्रमेण च । एषां छत्रविधानेन ज्ञातव्यं नृपतित्रयम्" अत्रार्थे वि कल्पलतायांचक्रपाणिः । छत्रे तुरंगोत्तरदिक्पतेश्च दस्नात्त्ववोढूनि भवंति चक्रे । पित्र्या प्राच्यधिपस्य रक्षोधिष्ण्यान्मनुष्यांतकदिक्पतेश्च ।" अतोऽश्वपतिगजयतिनरपतयो रा प्रस्थिताः । इदं छत्रत्रयं संज्ञामात्रम् । अथ प्रतीचीमध्यरेखा कियदवधिभूता कं देशं प्र निवृत्ता । तत्र कूर्मचक्रे देशविभागः । " अयोध्या मिथिला चंपा कोशांबी कौशिकी तथा अहिच्छत्रं गया विंध्यमंतर्वेदिश्च मेखला । कान्यकुब्जं प्रयागश्च मध्यदेशो विनश्यति ।" देशेषु यत्र कौशिकी तदंतरेखाप्रतीची स्थिता तद्रेखोत्तरभागे ईशानांतं हयाधिपः । कौशिकी आग्नेयांतं मध्यरेखातो दक्षिणे आग्नेयांतं नराधीशः । तन्मध्ये कौशिक्या ईशानाग्नेयांत मघादिच्छत्रं तद्गजपतिच्छत्रम् । तन्मध्ये च गजाधिप इति । अथ प्रतीचीमध्यरेखाया ईशानांतम् । सपश्चिमार्द्धवायव्योत्तरेशानांतं बहवो राजानः । तथा च " पश्चिमे शककौ म्लेच्छहैहयशातृकाः । वायव्यां दिशि मांडव्यतुषारैकविलोचनाः । स्त्री राज्याश्मकदी मूलिकाश्चमेरंजिकाः । उत्तरस्यां तुषाराद्रिहूणयामुनकैकयाः । गांधारमद्रकौधेयार्ज्जनायन सातयः ऐशान्यां कीरकाश्मीरं गंजनं खरसानकम् । खसैकपदकौलिंदं नंदासुरकटंगणाः । एषां योधिपतिः सोऽश्वपतिः तस्य च्छत्रमश्वपतिच्छत्रम् । अथ पश्चिमार्द्धनैर्ऋत्यदक्षिणाग्नेया च राजातः तत्र नैर्ऋत्ये नैर्ऋत्यां दिशि कांबोजद्रविडा वनिता मताः । "सुराष्ट्रयवनाः स सरैवतकघर्घराः" । अथ दक्षिणस्याम् " दिश्यंतकस्य रजनीचरराजधानी श्रीपर्वतो मल दर्दुरकौ महेंद्रः । कर्नाटकोलगिरिकेरलरिष्यमूका आभीरचोलवनवासिमहाशयाश्च " अथाग्नेय्याम् । "ज्ञेया ककुब्भ्याज्यभुजः कलिंगवंगोपवंगांध्रविपर्भवत्साः । सकोशलो दुलिकडुपालविंध्यालालंजिकपाचयुक्ताः (?) ।" आग्नेयांतमेते देशाः । एषां योधिपतिः नरपतिः । तस्य च्छत्रम् नरपतिछत्रम् । पूर्वदक्षिणोप्यत्र वदंति । तथाग्नेशांतराले प्राच्यां कौशिकी नदी तत्प्राक्दिशि " सगौडहस्तिवंधश्च पंचराष्ट्रं च कामरू । सूतरै चनं वासा पूर्वस्यां दिशि संस्थिताः ।" प्राग्ज्योतिषालौहित्यक्षीरोदसमुद्रसुरापादाः उदयगिरिभद्राश्वगौडपौंड्रोत्कलकाशिनेकलांवष्ठाः । एकपदताम्रलिप्तांककोमलकावर्द्धमान श्चेति । एषां योधिपतिः स गजाधिपतिः । अत्र केपि वदंति । कविना तु असंमुग्धै उत्तरस्यामीशानांतं हयाधिपः दक्षिणास्यामाग्नेयांतं नराधिपः । तन्मध्ये तु गजाधिप इति अत एवास्माभिर्व्याख्यातम् यत्र कुत्रापि देशे संस्थितानां राज्ञां नामनक्षत्रेण तत्तत्संज्ञनक्ष ज्ञापनार्थं छत्रत्रयसंज्ञा कृता ॥ ३ ॥ तथा चाह । अन्येषां भूभृतामिति । अन्ये यत्र कुत्रचित्स्थितानां राज्ञां नक्षत्रं यस्मिन्कस्मिन्नपि छत्रे स्थितं भवति तच्छत्रसंज्ञया तस्य छत्रं भवति ॥ ४ ॥

चामरं कलशं वीणा छत्रं दंडं पतद्ग्रहः॥ आसनं कीलकं रज्जुर्नव भेदाः प्रकीर्तिताः ॥ ५ ॥ छत्रत्रये स्थितः सौरिभंगं तस्य विनिर्दिशेत् ॥ फलं च चामरादीनां प्रत्येकं च वदाम्यहम् ॥ ६ ॥ चामरे चंडता वायोर्नावृष्टिश्च जायते ॥ दुर्भिक्षं च भवेद्धोरं प्रजापीडा न संशयः ॥ ७ ॥ कलशस्थे भवेद्युद्धं रणे रोगे महद्भयम् घातपातादिकं सर्वं जायते नात्र संशयः ॥ ८ ॥ वीणास्थेनार्कपुत्रेण पट्टराज्ञी विनश्यति ॥ चलचित्तो भवेद्राजा भयभीता च मेदिनी॥९॥ यदा ऋक्षत्रये सौरिश्छत्रे दंडे पतद्ग्रहे ॥ तदा तस्य भवेद्भंगश्छत्रस्यापि न संशयः ॥ १० ॥

अथ छत्रत्रयस्य नवनक्षत्राणां संज्ञा आह। चामरं कलशेति। तत्राश्वपतिच्छत्रेऽश्विनी-चामरसंज्ञिता। भरणी कलशसंज्ञिता! कृत्तिका वीणा। रोहिणी छत्रम्। मृगशिरो दंडसंज्ञः। आर्द्रा पतद्ग्रहः। पुनर्वसुरासनम्। पुष्यः कीलकम्। आश्लेषा रज्जुः। नवनक्षत्राणामेवं नव भेदाः। तथा मघादीनां नवानां क्रमेण चामरादिनव भेदाः। नरपतिच्छत्रे मूलानां च नवानां चामरादिनवभेदा ज्ञातव्याः॥ ५ ॥ तत्र शनिभौमगतानामेषां पृथक् पृथक् फलमाह। छत्रत्रये स्थितेति। छत्रत्रये छत्रे दंडे पतद्ग्रहे नक्षत्रत्रये यदा सौरिर्विचरति तदा तस्य छत्रभंगमादिशेत्. ॥ ६ ॥ अपरेषां फलं कविरेव वदति। शनिचारवशात्। चामरेति ॥ ७ ॥ कलशस्थेति ॥ ८ ॥ वीणास्थेति ॥ ९ ॥ यदा ऋक्षत्रयेति ॥ १० ॥

आसनस्य भवेन्नाश आशनस्थे शनैश्चरे ॥ युवराजक्षयः कीले बंधनं रज्जुसंस्थिते ॥ ११ ॥ सौम्ययुक्तोतिचारस्थः शनिरुक्तफलो नहि ॥ वक्रगः क्रूरसंयुक्तः शनिरुक्तफलप्रदः ॥ १२ ॥ शनिराहु कुजादित्या यदा जीवेंदुसंयुताः॥ उत्तराधीशराज्ञां च निश्चितं छत्रभंगदाः ॥ १३ ॥ क्रूरग्रहचतुष्कं च बुधचंद्रेण संयुतम् ॥ पूर्वच्छत्रविनाशाय कथितं पूर्वसूरिभिः ॥ १४ ॥ एवं पापचतुष्कं च यदा शुक्रेन्दुसंयुतम् ॥ दक्षिणाधिपतेश्छत्रविनाशो भाषितो बुधैः ॥ १५ ॥

आसनस्येति। आसनस्थे आसनाख्ये छत्रस्य सप्तमनक्षत्रे आसनस्य नाशो भवति। कोऽर्थः पृथिवीं त्यजेत्। परचक्रादिभिः कीले कीलाख्यवानक्षत्रस्थेशनौ युवराजनाशः। "जीव-

त्पितरि यो राजा युवराज इति स्मृतः" रज्जुसंज्ञे नवमनक्षत्रे शनौ बन्धनं भवति । स्वचक्रेण परचक्रेण वा । छत्रत्रयादिनक्षत्रे शनिस्थिते यत्फलमुक्तं तन्नक्षत्रं सर्वतोभद्रे यदि विद्धं भवति तदा अवश्यं भवति । तत्रापि निरूपणीयमित्युपदेशः ॥ ११ ॥ अथ शनेः फलाफलदाने विशेषमाह । सौम्ययुक्तेति । यदा छत्रत्रये सौरिः "छत्रे दण्डे पतद्ग्रहे" इत्यादिना छत्रभंगफलम् । चामरे चण्डता वायोरित्यादि शनिस्थनवनक्षत्रफलमुक्तम् । तेष्वर्थेषु यदि शुभग्रहयुक्तो भवति गुरुशुक्राभ्यां युक्तः । अतिचारस्थोऽतिशीघ्रगत्या स्वकालपरिमाणराशिभोगमतिक्रम्य राश्यन्तरं गन्तुकाम एवंविशिष्टः शनिरुक्तफलकर्ता न भवति । ईदृशे शनौ चामराभिधे नक्षत्रे तद्राज्यचण्डे वायुर्न वहति न अनावृष्टिः प्रजापीडा च न । कलशस्थे शनौ युद्धमुक्तमित्यादावपि उक्तफलदाता न भवति । स एव वक्री तदा चामरादिफलम् अतिक्रूरं भवति । अथवा क्रूरसंयुक्तः रविभौमराहुकेतुभिर्युक्तस्तदाप्युक्तफलदः । बुधयुक्तः पापफलद एव । यतः क्रूरयुक्तोबुधः क्रूर इति ॥ १२ ॥ अथ च्छत्रत्रयेपि ग्रहस्थित्या विशेषफलमाह । शनिराहिति । अश्वपतिच्छत्रे पापा जीवेन्दुसंयुताः छत्रभंगं कुर्युः । जीवेन्दुभ्यां विना अश्वपतिच्छत्रं न विनश्यति । किन्तूत्तरस्यां ये मंडलाधीशा भवंति तेषां यद्यच्चमराभिदं नक्षत्रं अश्वपतिच्छत्रे स्थितं विशेषोक्तनक्षत्रफलम् तत्तद्देशे भवति ॥ १३ ॥ अथ पापचतुष्टयफलं गजपतिच्छत्रे बुधचन्द्राभ्यां समर्पयति ॥ क्रूरग्रहेति ॥ यदा च बुधचन्द्राभ्यां युतं क्रूरचतुष्टयम् । "पूर्वच्छत्रविनाशाय कथितं पूर्वसूरिभिः" क्रमलिखनेनापि गजपतिच्छत्रं पूर्वस्यां दिशि निर्णीतम् ॥ १४ ॥ एवं पापचतुष्कमिति । आदावपि कविना प्रोक्तम् । "अश्विन्याद्यं मघाद्यं च मूलाद्यं च क्रमेण च । उत्तरे पूर्वदक्षे चेति" । अत्रोत्तराधीशपूर्वाधीशदक्षिणाधीशाः अश्विन्यादित्रिविभागेनैवोक्ताः ॥ १५ ॥

एवमन्येषु राज्येषु यत्र यस्य च संभवः ॥ उक्तग्रहसमायोगाच्छत्रभंगं विनिर्दिशेत् ॥ १६ ॥ यथा दुष्टफलाः क्रूरास्तथा सौम्याः शुभप्रदाः ॥ क्रूरयुक्तो बुधः क्रूरश्चंद्रः शुभयुतः शुभः ॥ १७ ॥ यथा दुष्टफलः सौरिस्तथा सौम्यफलो गुरुः॥ भौमज्ञौ गुरुराहू च रविचंद्रौ फले समौ ॥ १८ ॥ यथा हानिकराः क्रूरास्तथा सौम्याः शुभंकराः ॥ क्रूरयुक्तो भवेत् क्रूरश्चंद्रः ॥ सौम्ययुतः शुभः ॥ १९ ॥ सौम्यक्रूरा यदा छत्रे अष्टावेकत्र संस्थिताः॥ छत्रभंगो भवेत्तस्य परचक्रागमेन च ॥ २० ॥

अथान्यत्रस्थानामपि राज्ञां विशेषमाह । एवमन्येष्विति ॥ एवमिति पूर्ववत् छत्रभंगं विनिर्दिशेत् । अन्येषु राज्येषु यत्र कुत्रचित् भूखण्डमात्रस्थराज्यं भुज्यमानेषु राजसु

तेषामपि पूर्ववच्छत्रभंगं विनिर्दिशेत्। तद्धेतुमाह। यत्रेति यत्र यस्य च संभवः यन्नृपतित्रये अश्वपतिगजपतिनरपतित्रयच्छत्रोक्तनक्षत्रे यस्य संभवः। जन्म वा नामनक्षत्रं वा यस्मिन् छत्रत्रेय स्थितं भवति तत्तत्संज्ञं तस्यापि च्छत्रं भवतीति यत्र यस्य च संभव इति कवेरभिप्रायः। तेन किम्। यदि तन्नक्षत्रम् अश्वपतिच्छत्रे यदा "शनिराहुकुजादित्या यदा जीवेन्दुसंयुताः" इत्यादिना तन्नक्षत्रं युक्तं भवति तदा तस्यापि च्छत्रभंगः स्यात्। अथवा तन्नक्षत्रं गजपतिच्छत्रे भवति। यदा च बुधचन्द्रयुक्तक्रूरचतुष्टयैर्युक्तं भवति तदा तस्यापि च्छत्रभंगः। अथवा जन्मनामनक्षत्रं नरपतिच्छत्रे भवति। यदा च शुक्रेंदुचतुष्टयपापसंयुतं तन्नक्षत्रं तदा तस्यापि च्छत्रभंगः। एतावता अश्विन्यादिनक्षत्राणां राजानो गजपतिच्छत्रदेशस्था नरपतिच्छत्रदेशस्था वा भवंति तदा तत्फलं तेषामपि परिणमति। एवं मघादिनक्षत्राणामधिपतयोऽश्वपतिच्छत्रदेशस्था भवंतिं। तदापि बुधचन्द्रयुतक्रूरफलं तेषामपि परिणमति। एवमन्योन्यं मूलादीनामेवं विकल्पयेत्। अत एव व्याख्यात छत्रयं सर्वेषां राज्ञां संज्ञाज्ञापनार्थम् ॥ १६ ॥ अथ शुभानां फलसामर्थ्यं वदति। यथा दुष्टफला इति। सुगमम् ॥ १७ ॥ विशेषमाह। यथा दुष्टफल इति। सुगमम् ॥ १८ ॥ १९ ॥ २० ॥

**अन्येषां भूभृतामृक्षं यत्रयत्र नृपत्रये ॥ चामराद्यभिधानेन तस्य यन्नाम जायते ॥ २१ ॥ तत्तत्फलं तदा वाच्यमन्यदेशमहीपतेः ॥ नृपतित्रय नाम्नैव न वाच्यं छत्रजं फलम् ॥ २२ ॥ भूपनामर्क्षगो राहुः केतुर्वा यदि संस्थितः ॥ छत्रभंगोभवेत्तस्य विषदानेन भूपतेः ॥ २३ ॥ मृगयां साहसं यात्रां दुष्टाश्वगजवाहनम् ॥ विग्रहं च त्यजेद्राजा छत्रस्थैः क्रूरखेचरैः ॥ २४ ॥ एव ज्ञात्वा यदा राजा करोति ग्रहशांतिकम् ॥ यदुक्तं यामले तंत्रे शांतिः स्यात्तेन भूपतेः ॥ २५ ॥ इति नरपतिजयचर्यायां स्वरोदये छत्रचक्राणि समाप्तानि ॥**

अश्वपतिगजपतिनरपतिराज्यत्रये स्थितं भवति तस्य नक्षत्रस्य चामराद्यभिधानेन नाम जायते चामरादिसंज्ञा भवति ॥ २१ ॥ ततः किं कार्यमित्याह। तत्तदिति। यदि तन्नक्षत्रं चामरसंज्ञकम् अश्वपतिच्छत्रे अश्विनीगतः शनिः तदा अन्यभूखण्डस्थितस्य राज्ञो यदि नामभमश्विनीजन्मभं वा तदा तस्यापि राज्ये वायोश्चण्डता भवतीत्यागमविदः। अथवा भरणीगतः शनिः। कस्यापि छत्रदेशस्थराज्ञो भरणीनक्षत्रं तदा तद्राज्ये युद्धं समादिशेत्। अत एवोक्तम् "नृपतित्रयनाम्नैव ना वाच्यं छत्रजं फलम्" ॥ २२ ॥ अथ पापाक्रांतनक्षत्रपृथक्फलमाह। भूपनामर्क्षग इति ॥ यस्य राज्ञो जन्मनक्षत्रं छत्र-

दण्डपतद्ग्रहसंज्ञं भवति तत्रस्थो राहुः केतुर्वा स्थितो भवति ॥ तदा तस्य राज्ञः छत्रभंगः विषदानेन भवतीति वदेत् । छत्रभंग इत्यनेन मृत्युरिति ॥ २३ ॥ राज्ञां नीतिकृत्य-माह । मृगया साहसमिति ॥ २४ ॥ एवं ज्ञात्वा यदा राजेति ॥ २५ ॥ नरपतिज-यचर्याटीकायां जयलक्ष्म्यां च्छत्रत्रयम् ॥

## ॥ सिंहासनचक्रम् ॥




अथातः संप्रवक्ष्यामि चक्रं सिंहासनत्रयम् ॥ यस्य विज्ञानमात्रेण क्रियते राज्यनिर्णयः ॥ १ ॥ सप्तविंशतिनक्षत्रैरेकैकं च नवात्मकम् ॥ अश्विनी मघमूलाद्यं पंचनाडीविभेदतः ॥ २ ॥ अश्विन्याद्युत्तरे भागे मघाद्यं पर्वतः स्थितम् ॥ मलाद्यं दक्षिणे भागे ज्ञातव्यं नृपतित्रयम् ॥ ३ ॥ इतरेषु च राज्येषु नृपनामर्क्षतो वदेत् ॥ शुभाशुभमिदं सर्वं यस्य यत्र शनिस्थितः ॥ ४ ॥ नाडिकापंचवेधेन एकैकस्यासनं भवेत् ॥ आधारमासनं पट्टं सिंहं सिंहासनं तथा ॥ ५ ॥ आधारादिफलं सर्वमेकैकस्य वदाम्यहम् ॥ ग्रहवेधवशाज्ज्ञेयं सौम्यक्रूरैः शुभाशुभम् ॥ ६ ॥

अथातः संप्रवक्ष्यामिति ॥ १ ॥ सप्तविंशतिनक्षत्रेति ॥ २ ॥ अश्विन्याद्युत्तरे भागेति ॥ छत्रवत्सिंहासनमपि ज्ञातव्यम् ॥ ३ ॥ इतरेषु चेति ॥ ४ ॥ नाडिकापंचवेधेनेति ॥ सिंहासननक्षत्रेषु पृथक् प्रच्छनाडिकावेधः । पंचनाडिकायाः पृथक् नामपंचकम् । सिंहासनं पंचसोपानकं चतुरस्रं निर्मीयते तत्र सोपानरेखायां द्वितयं नक्षत्रं द्वित्रयं नक्षत्रं न्यसेत् । वेधार्थं च । तथा च न्यासवेधः । तत्रधः सोपानस्य आधारसंज्ञा । तदुपरि आसनम् । तदुपरि पट्टसंज्ञम् । तदुपरि सिंहसोपानम् सर्वोपरि सिंहासनमिति । यत्रस्थो राजा सिंहवद्भवति । यद्यपि वेधोत्र नोक्तः तथापि न्यासोपदेशादुच्यते । "आधारनाडिकायां स्याद्वेधो दस्रभुजंगयोः । वेधः स्यादासने याम्यपुष्ययोश्च परस्परम् । कृत्तिकादित्ययोः पट्टे सिंहे रोहिणिरौद्रयोः । सिंहासने मृगशिरः स्थितं छत्रेऽश्वभूतेः । आधारादि गतो वेधो मघादौ नवमे तथा । मूलादौ नवमे वेधो ज्ञातव्यः स्वरपारगैः ॥ ५ ॥ अथ आधारादिशनिगतफलमाह आधारादिफलमिति ॥ ६ ॥

नृपआधारनाड्यर्क्षे यदा पट्टेऽभिषेचितः ॥ पराधीनगतं राज्यं कुरुते नात्र संशयः ॥७॥ आसनस्थेन ऋक्षेण नीतियुक्तो भवेन्नृपः ॥ प्रधानपुरुषादेशात्प्रजाशांतिकरो भवेत् ॥ ८ ॥ पट्टऋक्षे यदा राजा चोपविष्टो यदासने ॥ पूर्वराज्यस्थितेस्तुल्यां चिरं पालयते महीम् ॥९॥ सिंहरूपी भवेद्राजा सिंहऋक्षासने स्थितः ॥ संग्रामस्य प्रियो नित्यमसाध्यो मंत्रिणां सदा ॥ १० ॥

नृप आधारेति । यद्दिने राज्याभिषेकः क्रियते । तद्दिने यदि आधारसंज्ञं नक्षत्रं भवति तदा तस्मिन्नभिषिक्तो राजा पराधीनतयैव राज्यं भुंक्ते । कोर्थः । परसेवयैव ॥ ७ ॥ अथासनफलमाह । आसनस्थेनेति । आसनस्थो भरणीपुष्ययोरन्यतमेन यदि अभिषेचितो राजा पट्टबंधाभिषेकः क्रियते तदा नीतिज्ञो भवति प्रधानपुरुषस्य शिष्टादेर्वाभिर्विमृश्यकारी भवति । शांतिवचनेन प्रियेण वचनेन प्रजां पालयति ॥ ८ ॥ अथ पट्टनक्षत्राभिषिक्तफलमाह । पट्टऋक्षेति ॥ ९ ॥ सिंहासननक्षत्राभिषिक्तनक्षत्रफलमाह सिंहरूपीति ॥ १० ॥

सिंहासनगते ऋक्षे तेजस्वी भीषणाकृतिः ॥ चलचित्तो भवेत् क्रोधी प्रजापीडाकरोनृपः ॥११॥ तत्कालेंदुगते ऋक्षे क्रूरनिर्वेधनाडिके ॥ शुभावस्था शुभे लग्ने संस्थाप्यो नृप आसने ॥ १२ ॥ ईदृशे च समायोगे उपविष्टो य आसने ॥ उच्छिद्य शत्रुसंघातमेकच्छत्रं करोति सः ॥१३॥ क्रूरग्रहस्य नाड्यां चेदुपविष्टो य आसने ॥ बंधनं भूमिनाशश्च तथा मृत्युश्च जातते ॥१४॥ आधारऋक्षगः

**सौरिरनावृष्टिं करोति सः ॥ दुर्भिक्षं रौरवं घोरं प्रजामृत्युश्च जायते ॥ १५ ॥**

सिंहासनगतेति । सुगम एष श्लोकः ॥ ११ ॥ अथ येन प्रकारेणाभिषिक्तो राजा तेजस्वी भवति प्रजापालको भवति दिग्विजयी भवति तत्प्रकारमाह । तत्कालेन्दुगते ऋक्षेति । राज्याभिषेकसमये तत्कालचन्द्रस्थनक्षत्रं ज्ञात्वा आसनादिनक्षत्रनिरूपणं कृत्वा नाडिकानिर्वेधनक्षत्रं तत्काले क्रूरपीडितरहिते राज्ञः पट्टाभिषेकं कुर्यादित्यर्थः । नृप आधारमामर्क्षे यदा पट्टेभिषेचित इति । सामान्यं फलं परित्यजेत् । तथा च विजयकल्पलतायाम् "धिष्ण्ये पापखगव्यधेन रहितं तत्कालचन्द्रान्विते लग्ने चोपचयर्क्षगे स्थिरगृहे शीर्षोदये पापकैः । षट्त्र्या ६ । ३ । ११ योपगतैः शुभैर्व्ययरि ६ मृति ८ । शान्त्य १२ स्थितैरासने यो भूपोप्युपविष्ट इष्टसहितः पृथ्वीं चिरं शास्ति सः ।" ॥ १२ ॥ १३ ॥ अथ शुभनाडिवेधफलमाह । क्रूरग्रहगता इति ॥ १४ ॥ आधारर्क्षगत इति । सिंहासनेऽपि आसनादि संज्ञम् अन्यराजनक्षत्रं यदि शनिर्भुक्ते तदा दुर्भिक्षं रौरवं घोरमित्यादि फलं तद्राज्ये वदेत् ॥ १५ ॥

**आसने च यदा सौरिर्युद्धे भंगप्रदो भवेत् ॥ अथवा व्याधिपीडा च घातो दुःखं च जायते ॥ १६ ॥ पट्टऋक्षे यदा सौरिः पट्टराज्ञी विनश्यति ॥ प्रियो वाथ कुमारो वा मंत्रिवर्गक्षयोपिवा ॥ १७ ॥ सिंहे सिंहासने वाथ यदा तिष्ठति सूर्यजः ॥ तदा मृत्युर्न संदेहो यदि शक्रसमो नृपः ॥१८॥ शनिराह्वर्कमाहेया यदा चंद्रर्क्षसंयुताः॥ यस्यासनगता एते तदा तस्य क्षयंकराः ॥१९॥ क्रूरयुक्तोऽतिवक्रस्थः क्रूरनाडीगतोपि वा ॥ आसने चंद्रयोगेन कालरूपी शनैश्वरः॥२०॥ एवं शुभफलं दद्याद्देवमंत्री न संशयः ॥ करोति विपुलं राज्यं यस्यासनगतो भवेत् ॥२१॥ इति यामलीयस्वरोदये सिंहासनचक्रं समाप्तम् ॥**

आसनर्क्षे यदा सौरिरिति ॥ १६ ॥ पट्टऋक्षेति । इदं फलं नरपतित्रयसिंहासने अन्यत्रस्थराज्ञः स्वनामनक्षत्रे पट्टसंज्ञे ज्ञेयम् ॥ १७ ॥ सिंहसिंहासने । अन्यभूपनामर्क्षे सिंहासननक्षत्रत्रये सिंहे सिंहासने वा भवति तदेवं फलं तस्यापि ॥ १८ ॥ शनिराह्वर्कमाहेया इति अन्यस्यापि नक्षत्रमासनत्रये आसनसंज्ञंभवति । तदा तस्यापि स्थाननाशः ॥ १९ ॥ क्रूरयुक्तो अतिवक्रस्थ इति ॥ २० ॥ अथ गुरोः फलमाह । एवं शुभफलं दद्यादिति शुक्रस्तु सर्वशत्रूणां भयकारी प्रियप्रदः । सुगमम् ॥ २१ ॥ इति जयलक्ष्म्यां टीकायां सिंहासनत्रयव्याख्या ॥

॥ कूर्मचक्रम् ॥



कूर्मचक्रं प्रवक्ष्यामि यदुक्तं कोशलागमे ॥ यस्य विज्ञानमात्रेण ज्ञायते देशविप्लवः ॥ १ ॥ यस्य शृंगैकदेशस्था देवास्त्रिंत्रिंशकोटयः ॥ सुमेरुः पृथिवीमध्ये श्रूयते दृश्यते न तु ॥ २ ॥ तादृशाः पर्वताश्चाष्टौ सागरा द्वीपदिग्गजाः ॥ सर्वे ते विधृता भूम्या सा धृता येन तं शृणु ॥ ३ ॥ दंष्ट्र्या सा वराहेण विधृता साधरा धरा ॥ मुस्ताखननतोयस्य शोभते मृत्तिकेव या ॥४॥ ईदृशोसौ महाकायो वराहः शेषमस्तके ॥ तस्य चूडामणेरूर्ध्वं संस्थितो मशकोपमः ॥५॥ एवंविधः स शेषोपि कुंडलीभूमिसंस्थितः कूर्मपृष्ठैकभागेन पद्मतंतुरिवाबभौ ॥ ६ ॥ वपुःस्कंधशिरः पुच्छनखांघ्रिप्रभृतीनि च ॥ मानेन तस्य कूर्मस्य कथयामि प्रयत्नतः ॥ शंकोः शतसहस्राणि योजनानि वपुः स्थितम् ॥ ७ ॥ तदर्धेन भवेत्पुच्छं पुच्छार्धेन द्विकुक्षिकम् ॥ ग्रीवा सायुतकोटीभिर्मस्तकं सप्तकोटिभिः ॥ ८ ॥ नेत्रयोरंतरं तस्य कोटिरेकप्रमाणतः ॥ मुखं कोटिद्वयं तस्य द्विगुणेन च पादयोः ॥९॥ अंगुलीनां नखाग्रेषु योजनान्ययुतावधि ॥ १०॥

अथानंतरम्। कूर्मचक्रं व्याख्यास्यामि। कूर्मचक्रं प्रवक्ष्यामीति । सुगमम् ॥ १ ॥ अथ कूर्मचक्रस्य माहात्म्यं वक्तुं धराधराणां धारणमाह । यस्य शृंगैकेति ॥ २ ॥ तादृशाः पर्वता इति ॥ ३ ॥ दंष्ट्र्या सा वराहेणेति ॥ ४ ॥ ईदृशोसाविति ॥ ५ ॥ एवंविधः स शेषोपीति ॥ ६ ॥ वपुः स्कन्धेति ॥ ७ ॥ तदर्धेनेति ॥ ८ ॥ नेत्रयोरिति ॥ ९ ॥ अंगुलीति ॥ १० ॥

एवं कूर्मप्रमाणं तु कथितं चादियामले ॥ तस्योपरि स्थिता तत्र सप्तद्वीपयुता मही ॥ कूर्माकारं लिखेच्चक्रं सर्वावयवसंयुतम् ॥ ११ ॥

पूर्वभागे मुखं तस्य पुच्छं पश्चिममंडले ॥ १२ ॥ पूर्वापरं लिखेद्वेधं वेधं चोत्तरदक्षिणे ॥ ईशानराक्षसे वेधं वेधमाग्नेयमारुते ॥ १३ ॥ नाभिशीर्षचतुष्पादकुक्षिपुच्छेषु संस्थितम् ॥ तारात्रयांकिते तस्मिन् सौरिं यत्नेन चिंतयेत् ॥ १४ ॥ अतिवृष्टिरनावृष्टिः शलभाः मूषकाः शुकाः ॥ स्वचक्रं परचक्रं च सप्तैता ईतयः स्मृताः ॥१५॥ कृत्तिका रोहिणीसौम्यं कूर्मनाभिगतं त्रयम् ॥ साकेतं मिथिला चंपा कौशांबी कौशिकी तथा ॥ १६ ॥ अहिच्छत्रं गया विंध्यमंतर्वेदी च मेखला ॥ कान्यकुब्जं प्रयागश्च मध्यदेशो विनश्यति ॥१७॥ रौद्रं पुनर्वसुः पुष्यं कूर्मस्य शिरसि स्थितम् ॥ स गौडो हस्तिबंधश्च पंचराष्ट्रं च कामरुः ॥१८॥ चरेंद्री च तथा ज्ञेया मगधश्च तथैव च ॥ रेवातटं च नेपालः पूर्वदेशो विनश्यति ॥ १९ ॥ पूर्वाषाढाऽनलाद्रा च त्रयाणां संमुखो व्यधः ॥ मूले ब्रह्मादितीनां च वेधो गुर्विदुवज्रिणाम् ॥ २० ॥

तस्योपरीति ॥ ११ ॥ पूर्वभागेति ॥ १२ ॥ पूर्वापरमिति ॥ १३ ॥ नाभिशीर्षेति ॥ १४ ॥ अतिवृष्टिरिति ॥ १५ ॥ कृत्तिका रोहिणीति ॥ १६ ॥ अहिच्छत्रमिति ॥ १७ ॥ रौद्रेति ॥ १८ ॥ चरेंद्री चेति ॥ १९ ॥ पूर्वाषाढानलेति ॥ २० ॥

आश्लेषा च मघा पूर्वापादे आग्नेयगोचरे ॥ अंगवंगकलिंगाश्च पूर्वजाश्चैव कोसलाः ॥२१॥ डाहली च जयंती च तथा चैव सुलंजिका ॥ उडियामं वराडं च अग्निदेशो विनश्यति ॥२२॥ उत्तराहस्तचित्राश्च दक्षिणां कुक्षिमागताः ॥ दर्दुरं च महेंद्रं च वनवासं ससिंहलम्॥२३॥ तापी भीमरथी लंका त्रिकूटं मलयस्तथा ॥ श्रीपर्वतश्च किष्किंधा इति नश्यंति दक्षिणे ॥ २४ ॥ स्वाती विशाखा मैत्रं च कूर्मे नैर्ऋतिगोचरे ॥ नाशिक्यं च सुराष्ट्रं च धृतमालवकं तथा ॥ २५ ॥ पयली च प्रकाशं च भृगुकच्छं च कोंकणम् ॥ खेटापूरं च मोटेरं देशा नश्यंति तादृशाः ॥ २६ ॥ ज्येष्ठा मूलं तथाषाढा पुच्छे कूर्मस्य

संस्थिताः ॥ पारावतं मरुत्कच्छमवंतीपूर्वमालवम् ॥२७॥ पारासरं बर्बरं च द्वीपं सौराष्ट्रसैंधवम् ॥ जलस्थाश्च विनश्यंति स्त्रीराज्यं पुच्छपीडने ॥ २८ ॥ उत्तराषाढभत्रीणि पादे वायव्यगोचरे ॥ गुर्जराह्वं यामुनं च मरुदेशं सरस्वती ॥ २९ ॥ जालंधरं वराटं च वालुकोदधिसंयुतम् ॥ मेरुशृंगं विनश्यंति ये चान्ये कोणसंस्थिताः ॥ ३० ॥

आश्लेषा च मघेति ॥ २१ ॥ डाहली चेति ॥ २२ ॥ उत्तराहस्तेति ॥ २३ ॥ तापीभीमेति ॥ २४ ॥ स्वाती विशाखेति ॥ २५ ॥ पर्यली चेति ॥ २६ ॥ ज्येष्ठा मूलेति ॥२७॥ पारासरं बर्बरं चेति ॥ २८ ॥ उत्तराषाढभत्रीणीति ॥ २९ ॥ जालंधरं चेति ॥ ३० ॥

शतभादित्रयं चैव उत्तरां कुक्षिमाश्रितम् ॥ नैपालं कीरकाश्मीरं गृंजनं खुरसानकम् ॥ ३१ ॥ माथुरं म्लेच्छदेशश्च, खशं केदारमंडलम् ॥ हिमाश्रयाश्च नश्यंति देशा ये चोत्तराश्रिताः ॥ ३२ ॥ रेवती अश्विनी याम्यं पादे ईशानगोचरे ॥ गंगाद्वारं कुरुक्षेत्रं श्रीकंठं हस्तिनापुरम् ॥३३॥ अश्वचक्रैकपादाश्च गजकर्णास्तथैव च ॥ विनश्यंति च ते सर्वे शनावीशानगोचरे ॥३४॥ सौरिः स्वदेशगो यत्र तत्र यत्नेन रक्षयेत् ॥ परदेशस्थिते कुर्याद्विग्रहं पृथिवीपतिः ॥३५॥ यत्रस्थः पीडयेत्तत्र वेधस्थाने तथैव च ॥ देशनामर्क्षगः सौरिर्भंगदाता न संशयः ॥ ३६ ॥ इति यामलीयस्वरोदये पृथ्वीकूर्मचक्रम्॥पृथ्वीकूर्मः समाख्यातः कृत्तिकादियमांतकः ॥देशादिस्वस्वऋक्षादि वक्ष्ये कूर्मचतुष्टयम् ॥ ३७ ॥ देशनगरक्षेत्रगृहात्मकानि कूर्मचक्राणि ॥ पूर्ववचक्रमालिख्य देशनामर्क्षपूर्वकम् ॥ देशकूर्मो भवेत्तत्र यत्र सौरिस्ततः क्षयः ॥३८॥ इति देशकूर्मः ॥

शतभादित्रयमिति ॥ ३१ ॥ मथुरा म्लेछदेशश्चेति ॥ ३२ ॥ रेवती अश्विनीति ॥ ३३ ॥ अश्वचक्रेति ॥ ३४ ॥ सौरिः स्वदेशगेति ॥ ३५ ॥ यत्रयस्थः पीडयेति ॥ ॥ ३६ पृथ्वीकूर्ममिति ॥ ३७ ॥ पूर्ववचक्रेति ३८ ॥

नगरे नागरं धिष्ण्यं कृत्वादौ विलिखेत्ततः॥ सौरिस्थाने भवेद्दुष्टं वेधस्थाने तथैव च॥३९॥इति द्वितीयकूर्मः॥ग्रामकूर्मं समालिख्य ग्रामनामर्क्षपूर्वकम् ॥ पूर्ववच्चत्रगः सौरिर्मध्यादौ भंगमादिशेत् ॥ ४० ॥ इतिनगरकूर्मचक्रम् ॥ क्षेत्रजे क्षेत्रभान्यादौ कृत्वा कूर्मं यथास्थितम् ॥ सौरिस्थाने विनाशः स्याज्जायते च महद्भयम् ॥४१॥ इति क्षेत्रकूर्मचक्रम् ॥ अथ गृहकूर्मचक्रम्॥गृहकूर्मं समालिख्य गृहद्वारमुखसंस्थितम् ॥ गृहनामर्क्षपूर्वं तु कृत्वा वीक्ष्यं शुभाशुभम् ॥४२॥ गृहमध्यगतः सौरिः शोकसंतापकारकः ॥ द्वारे विद्युत्प्रदो ज्ञेयः पावके वह्निदायकः ॥ ४३ ॥ ज्ञेयोमृत्युप्रदो याम्ये राक्षसे राक्षसाद्भयम् ॥ वारुणे शुभदो ज्ञेयो वायव्ये शून्यताप्रदः ॥ ४४ ॥ अर्थलाभप्रदः सौम्ये शांभवे सर्वसिद्धिदः ॥ सौरिर्बलाधिको दुष्टः स्वल्पवीर्यः शुभावहः ॥४५॥ समकालं पीडयेद्यत्र भानुजः कूर्मपंचकम् ॥ तत्र स्थाने महाविघ्नं जायते नात्र संशयः ॥ ४६ ॥ दुष्टस्थानगते मंदे कर्त्तव्यं तत्र शांतिकम् ॥ यदुक्तं यामले तंत्रे सर्वविघ्नविनाशनम् ॥ ४७ ॥ कूर्मचक्रं महाचक्रं कथितं चादियामले ॥ त्रिकालविषयज्ञानं पाणिस्थं तेन जायते ॥ ४८ ॥ इति नरपतिजयचर्यायां स्वरोदये कूर्मपंचचक्राणि समाप्तानि ॥

नगरेति । देशकूर्मे देशनामक्षान् त्रीणि मध्ये लिखेत् । अत्रापि कूर्मशिरः प्राच्याम् एवं नवविभागे देशेपि यत्रर्क्षे सौरिस्तस्यां दिशि सप्त ईतयः संभवंति । तस्यां दिशि ईतिपीडा स्यात् । अतिवृष्टिरनावृष्टिरित्यादि सम्भवति । यत्रस्थस्तस्माद्रेखा सन्मुखं वेधयति। वेधस्थानेपि ईतयः सम्भवंति । अत्रापि पूर्ववत् । अतिशुभफलप्रदत्वेन गुरुं चिंतयेत् । गुरुणा वेधितस्य फलं शरेर्न भवति । यदि गुरुर्बलीभवति । उच्चस्वमित्रोदिताभिर्बली चिन्त्यः ॥ ३९ ॥ इति द्वितीयकूर्मः । ग्रामकूर्ममिति ॥ ४० ॥ क्षेत्रजेति ॥४१॥ गृहकूर्मेति ॥ ४२ ॥ ग्रहमध्यगत इति ॥ ४३ ॥ ज्ञेयो मृत्युरिति ॥४४॥ अर्थलाभ प्रद इति ॥ ४५ ॥ समकालमिति । पृथिवीकूर्मे मूले यो देशस्तत्रस्थः शनिःतस्यां दिशि मूलनक्षत्रं यस्य यस्य देशस्य तत्र देशमध्यस्थः मूलनक्षत्रग्रामस्थानयोः । तत्रापि मध्यगतः सौरिः । मूलर्क्ष

गृहग्रामपतेश्च । एवं कूर्मपंचके सौरिर्महाविघ्नकरः ॥ ४६ ॥ दुष्टस्थानेपि ॥ ४७ ॥ कूर्मचक्रं महाचक्रमिति ॥ ४८ ॥ इति नरपतिजयचर्याटीकायां जयलक्ष्म्यां कूर्मपञ्चचक्राणि ॥




अथ पद्मचक्रम् ॥ पद्माकारं लिखेच्च-क्रमष्टपत्रं सुशोभनम् ॥ कोष्ठकं नवमं मध्ये पद्मचक्रं प्रजायते ॥ १ ॥ कृत्ति-कादीनि भान्यत्र त्रीणित्रीणि यथा-क्रमम् ॥ मध्यकोष्ठादिरुद्रान्तं सप्तविंशति विन्यसेत् ॥ २ ॥ नवखंडा धरित्रीयं नवभागेषु संस्थिता ॥ यत्र खंडे स्थितः सौरिः खंडं तच्च विन-श्यति ॥ ३ ॥ भद्राश्वः किंपुरुषं च हरिवर्षस्तथैव च ॥ मेरुश्च दक्षिणे देशे खंडोयमीरितस्त्रिभिः ॥ ४ ॥ रम्यं हिरण्मयं चैव कुरुखंडस्तथैव च ॥ मेरुश्चोत्तरतश्चैव त्रिभिः प्रोक्तादियामले ॥ ५ ॥ केतुमालश्च यो नाम खंडो मेरुश्च वारुणे ॥ भरतेषु च विख्यातो पूर्वदिङ्मेरुतः स्थितः ॥६॥ इलावृतश्च नामानि खंडोयं मेरुसंस्थितः॥ नवखंडमिदं प्रोक्तं कथितं चादियामले ॥ ७ ॥ इति पद्मचक्रम् ॥

पद्माकारमिति ॥ १ ॥ कृत्तिकादीनीति ॥ २ ॥ नवखण्डा धीरत्रीयमिति ॥ ३ ॥ ४ ॥ ॥ ५ ॥ ६ ॥ ७ ॥ इति चक्रम् ।




अथ सप्तद्वीपफणिचक्रम् ॥ कृत्तिकादि लिखेच्चक्रं सर्पाकारं फणीश्वरम् ॥ सप्तनाडीसमायुक्तं तत्र वेधं विलोकयेत् ॥ १ ॥ नाड्येकैकसमायोगे जंबूद्वीपादि गण्यते ॥ सप्त द्वीपाः क्रमेणैव

तत्र सौरिं विचिंतयेत् ॥ २ ॥ जंबूद्वीपस्तथा शाकः कुशः क्रौंचश्च शाल्मलः ॥ गोमेदः पुष्करद्वीपः पीड्यंते सौरिपीडया ॥ ३ ॥

इति सप्तद्वीपफणिचक्रम् ॥

अथ राहुकालानलचक्रम्

अथातः संप्रवक्ष्यामि व्याख्याता ब्रह्मयामले॥राहुकालानलीयात्रासद्यः प्रत्ययकारिणी ॥ १ ॥ ग्रहयोगवशाद्यात्राज्योतिः शास्त्रेषु भाषिता ॥या सा शुभेषु कार्येषु फलदा न तु संगरे ॥ २॥ यस्य च्छायाप्रभावेण छायेते शशिभास्करौ ॥ तस्य राहोः प्रभावंचवक्ष्येऽहं रणकर्मणि ॥ ३ ॥

॥ राहुकालानलचक्रम् ॥




केचिन्मूर्खा वदंत्येव ग्रहो राहुरकारणम् ॥ यतो वर्षे दिने लग्ने आधिपत्यं न दृश्यते ॥ ४ ॥ आधिपत्ये स्थिता ये च वर्षे मासे दिने तथा ॥ ते चाधिकारिणो ज्ञेया राहुराजेतियामले ॥ ५ ॥

कृतिकाद्यं लिखेदिति ॥ १ ॥ नाड्येकैकेति ॥ २ ॥ जंबूद्वीपेति ॥ ३ ॥ इति नरपतिजयचर्यास्वरोदये टीकायां जयलक्ष्म्यां फणीश्वरचक्रे सप्तद्वीपशुभाशुभनिर्णयः ॥ अथात इति ॥ १ ॥ ग्रहयोगेति ॥ २ ॥ यस्य च्छायेति ॥ ३ ॥ केचिन्मूर्खेति ॥ ४ ॥ आधिपत्येति ॥ ५ ॥

वेदागमपुराणेषु व्याख्यातो राहुखेचरः ॥ तस्य माहात्म्यमज्ञात्वा मिथ्या जल्पति स्वल्पवित् ॥ ६ ॥ दुष्टारिष्टेषु सर्वेषु जातकादिषु गण्यते ॥ सद्यः प्रत्ययदो राहुः स कथं स्यादकारणम् ॥ ७ ॥ यः कालरूपो भ्रमति संहारेण महीतले ॥ स वक्रदंष्ट्र्या रौद्रो ज्ञेयो राहुर्न संशयः ॥ ८ ॥ ग्रहा ग्रासभयाद्यस्य सृष्टिमार्गे भ्रमंति

च ॥ तस्य नामान्यहं वक्ष्ये मुखपुच्छक्रमेण च ॥ ९ ॥ राहुश्चैव तमः पातः स्वर्भानुः सिंहिकासुतः ॥ दैत्यच्छाया शिरोवक्रं ग्रहारिश्च विधुंतुदः ॥ १० ॥

वेदागमपुराणेति ॥ ६ ॥ दुष्टारिष्टेष्विति ॥ ७ ॥ यः कालरूपेति ॥ संहारेण वामावर्तेन नक्षत्रमिव पश्चान्मुखं भ्रमति ॥ ८ ॥ ग्रहग्रासेति ॥ ९ ॥ राहुश्चैवेति ॥ १० ॥

पुच्छं केतुः शिखी सर्पो गुदं गुह्यं तटं मतम् ॥ उत्पातो विषगर्भश्च धूम्रकायो ग्रहांतिमः ॥ ११ ॥ ऋक्षाधारगतो राहुः सर्परूपेण संस्थितः ॥ तस्य चक्रं प्रवक्ष्यामि राहुकालानलात्मकम् ॥ १२ ॥ शलाकासप्तकं चक्रमीशादौ कृत्तिकादिकम् ॥ अष्टाविंशति नक्षत्रं साभिजित्सव्यमालिखेत् ॥ १३ ॥ यत्रर्क्षे संस्थितो राहुर्वदनं तद्विनिर्दिशेत् ॥ मुखात्पंचदशे ऋक्षे तस्य पुच्छं व्यवस्थितम् ॥ १४ ॥ एकोत्तरशतं संख्या जायंते यत्र केतवः ॥ व्याप्नुवंति जगत्सर्वं सहस्राकसमत्विषः ॥ १५ ॥

पुच्छं केतुरिति ॥ ११ ॥ ऋक्षाधारेति ॥ १२ ॥ शलाकासप्तेति । सव्यमीशानाग्नेयादिक्रमेण लिखेत् ॥ १३ ॥ १४ ॥ एकोत्तेति ॥ १५ ॥

राहुभुक्तानि ऋक्षाणि जीवपक्षे त्रयोदश ॥ त्रयोदशैव भोग्यानि मृतपक्षः प्रकीर्तितः ॥ १६ ॥ मृतपक्षे मुखं तस्य गुदं जीवांगमध्यमम् ॥ एवमंगद्वयो राहुर्ज्ञातव्यः स्वरपारगैः ॥ १७ ॥ जीवपक्षे क्षपानाथे मृतपक्षे रवौ तथा ॥ तस्मिन्काले शुभा यात्रा विपरीता तु हानिदा ॥ १८ ॥

अथ द्विधांगराहुमाह । राहुभुक्तानि ऋक्षाणीति । कल्पादौ राहू रेवत्यंते नक्षत्रचक्रे स्थापितः । तस्य स एवादिः । गणितविधिरश्विन्यादिप्रवृत्तः । तेन गणितेन यस्मिन्नक्षत्रे आगच्छति । तत्र तस्य मुखं नक्षत्रावधिरेवतीतः पश्चान्नक्षत्राणि भुक्तानि भवंति । अश्विन्यन्तं भोग्यानि । वर्तमानराहुनक्षत्रादग्रतस्त्रयोदशऋक्षाणि जीवपक्षः । चतुर्दशे केतुः । अर्थात् राहुनक्षत्रात् पञ्चदशर्क्षं तदादितस्त्रयो दशनक्षत्रं मृतपक्षः । तथा च । रेवत्यां यदा राहुस्तदा अश्विन्याद्यारभ्य हस्तपर्यंतं जीवपक्षः । तदग्रं चित्रायां केतुः पंचदशमं तत् । स्वात्यादौ त्रयोदशर्क्षं मृतपक्षः । एवं यदा यस्मिन्नक्षत्रे राहुस्तत्पश्चान्नक्षत्राणि त्रयोदश भोग्यानि भवंति । अतो मृतपक्षः एवं मृतपक्षे तस्य मुखम् ।

अर्थाद्यन्नक्षत्रस्थो राहुस्तन्नक्षत्रमपि मृतपक्षे यत्र केतुः पुच्छः तत्तु जीवपक्षे । एवं साभिजिच्च-तुर्दशर्क्षाणि भुक्तानि जीवपक्षः । चतुर्दशैव भोग्यानि मृतपक्षः ॥ १६ ॥ तथा च । मृतपक्षे मुखं तस्येति ॥ १७ ॥ अथांगद्वयकर्तव्यमाह । जीवपक्षे क्षपानाथेति । जीवपक्षे यदि चन्द्रः संचरति । मृतपक्षे रविः संचरति । तस्मिन् समये विजयी राजा दिग्विजयाय यात्रां कुर्यात् । विपरीतेति । विपरीता यात्रा हानिदा भवति । कोर्थः। मृतपक्षे राहुभोक्तव्यचतुर्दशनक्षत्रे यावच्चंद्रः संचरति । भुक्तपक्षे भुक्तचतुर्दशनक्षत्रे रविः संचरति । अस्मिन्काले दिग्विजयादियात्रा हानिदा ॥ १८ ॥

चंद्रादित्यौ यदा युक्तौ जीवपक्षे व्यवस्थितौ ॥ तत्र क्षेमं जयो लाभो यात्राकाले न संशयः ॥ १९ ॥ मृतपक्षे यदा काले संस्थितौ शशिभास्करौ ॥ तदा हानिर्भयं भंगो मृत्यू राज्ञां प्रजायते ॥ २० ॥ जीवपक्षे स्थिते चंद्रे कार्यं स्यादमृतोपमम् ॥ मृतपक्षे मृतं ज्ञेयं यतश्चंद्रबलाबलम् ॥२१॥ इति द्विधांग-राहुचक्रम् ॥

अथैकांगे वर्तमानौ रविचन्द्रौ यदि तदा यात्राफलमाह । अथादौ जीवपक्षः । चन्द्रादित्यौ यदेति । यात्राकाले चन्द्रादित्यौ जीवपक्षे यदि संचरतस्तदा प्रथमतः क्षेमं भवति पश्चात्संग्रामे जयः कुशलेन पश्चाल्लाभः । जयलक्ष्म्या लाभः । शत्रोरश्वाः प्राप्यन्ते । गजाश्च धनानि च प्राप्यन्ते ॥ १९ ॥ अथ मृतपक्षे वर्तमानयो रविचन्द्रमसोः काले यात्राफलमाह । मृतपक्षे यदेति । यस्य राज्ञो यात्रायां चन्द्रादित्यौ मृतपक्षे भवतः तदा हानिः । अश्वगजधनादीनि संग्रामे शत्रुर्गृह्णाति । भयं भवति ॥ भंगः संग्रामात्पलायनम् । मृत्युरपि ॥ २० ॥ अथ चन्द्रे जीवपक्षस्थे यात्रादिशुभोत्कर्षमाह । जीवपक्षे स्थिते चन्द्र इति ॥ २१ ॥ इति द्व्यङ्गराहुः ॥

अथ पंचांगराहुः ॥ अथ पंचांगभेदेन राहुचक्रं वदाम्यहम् ॥ मुखोदरौ गुदं पुच्छं कपालं तस्य पंचमम् ॥ १ ॥ राहुः पातस्तपो बिंबं संहारे वक्रगो ग्रहः ॥ धूम्रपुच्छो ग्रहग्रासः सर्पांगः केतुरुच्यते ॥२॥ मुखाद्यंगस्य नामानि फलं चापि वदाम्यहम् ॥ भ्रमणाच्चंद्रसूर्यस्य पंचांगर्क्षे

॥ पंचांगराहुच० ॥



विधुंतुदः ॥ ३ ॥ यत्रर्क्षसंस्थितो राहुस्तस्य नामानि वच्म्यहम् ॥ गलितं कर्तरी जिह्वा चंद्रगं वदनं तथा ॥ ४ ॥ राहुऋक्षाग्रतो यानि मुक्तभानि त्रयोदश ॥ उदरं संपुटं जीवं कामांगं जठरं च हृत् ॥५॥ इति द्वितीयसंगमम् ॥

अथ पंचांगभेदेनेति ॥ १ ॥ राहुः पातेति । अत्र यद्यपि राहुः शिरोमात्रं तथापि ब्रह्मणा ब्रह्मयामले राहोर्न्नक्षत्रात्मकं पंचांगसंज्ञा कल्पिता । तथा च ॥ २ ॥ मुखाद्यंगस्येति । अत्र राहुः पंचांगचक्रे । प्रथमतो मुखादिपंचांगं वदामि । तत्फलं च तद्धेतुमाहं । विधुन्तुदोस्य राहोः पंचांगर्क्षे पृथक् पृथक् विभक्तपञ्चांगनक्षत्रे चन्द्रसूर्ययोर्भ्रमणात् फलं वदामि ॥ ३ ॥ पृथक् पृथगंगानि पञ्चाह । यत्रर्क्षसंस्थित इति । यस्मिन्नक्षत्रे राहुस्तस्य नक्षत्रस्यैतानि नामानि । गलितं कर्त्तरीत्यादीनि ॥ ४ ॥ मुखादन्यांगनक्षत्रविभागमाह । "राहुऋक्षाग्रतो यानि मुक्तभानि त्रयोदश । उदरं संपुटं जीवं कामांगं जठरं च हृदिति" राहुवर्तमाननक्षत्रादग्रस्थानि त्रयोदशर्क्षाणि जीवपक्षः तस्यैतानि नामानि उदरसंज्ञाः संपुट संज्ञाः जीवसंज्ञाः कामांगं जठरं च हृदिति ॥ ५॥ द्वितीयमंगम् ।

उदरादग्रनक्षत्रं यत्पंचदशमं मुखात् ॥ गुदमुद्गिलितं गुह्यं केतुश्चं ध्वांगकर्तरी ॥ ६ ॥ इति तृतीयांगम् ॥ गुदभान्यग्रतो यानि ऋक्षाणि रससंख्यया ॥ पुच्छं सूर्यागवज्रांगं पृष्ठो मृत्युः क्रमेण च ॥ ७ ॥ शेषाणि सप्तभान्यत्र मध्यस्थान्यास्यपुच्छयोः ॥ कपालं मस्तकं शीर्षं रुद्रांगं भोग्यमंडलम् ॥ ८ ॥ इति पञ्चमांगम् ॥

अथ तृतीयमंगमाह । उदरादग्रनक्षत्रमिति । राहुवर्तमाननक्षत्रात् पंचदशमस्यैतानि नामानि । गुदमुद्गिलितमित्यादि ॥ ६ ॥ इति तृतीयांगम् ३ गुदभान्यग्रतो यानीति । सुगमम् ॥ ७ ॥ शेषाणि सप्तभान्यत्रेति ॥ ८ ॥

स्थिररूपस्थितो भानुश्चररूपश्च चंद्रमाः ॥ क्रमेणैकैकयोगानां वक्ष्येहं योगपंचकम् ॥ ९ ॥ राहुवक्त्रे स्थिते सूर्ये चंद्रे कामांगसं-स्थिते ॥ यायिनो विजयस्तत्र स्थायिनो भंगमाहवे ॥ १० ॥ चंद्रांगसंस्थिते सूर्ये गुदे चंद्रे समाश्रिते ॥ अग्रयायी जयेदच्छे बलार्द्धे च क्षयं गते ॥११॥ भास्करे गिलितांगस्थे चंद्रे वज्रांग-संस्थिते ॥ बलद्वये क्षयं याति किंचित्स्थायी जयी रणे ॥१२॥

राहुनक्षत्रतो भानुश्चंद्रो रुद्रांगगो रणे ॥ स्थायिनो विजयो युद्धे यायिनो मृत्युमादिशेत् ॥ १३ ॥

इहि पंचांगम् । अथ फलं विचारयितुमाह । स्थिररूप इति । भानुश्चन्द्रापेक्षया स्थिररूपः। एक नक्षत्रे सार्द्धत्रयोदशचतुर्दशभिर्दिनैः स्थितिः चन्द्रस्य षष्टिघट्यैकनक्षत्रे स्थितिः अतो रवेः स्थिररूपत्वम् ॥ ९ ॥ आभ्यां योगपंचकमाह । राहुवक्त्रस्थितेति ॥ १० ॥ चन्द्रागसंस्थितेति। चंद्रागमित्यनेन राहुवर्तमाननक्षत्रं गुदनक्षत्रं राहुवर्तमाननक्षत्रात् पंचदशमम् । शेषं सुगमम् ॥ ११ ॥ भास्करेति । वज्रांगमित्यनेन राहुवर्त्तमानर्क्षात् षोडशनक्षत्रादिषट्कम् ॥ १२ ॥ राहुनक्षत्रग इति । रुद्रांगमित्यनेन राहुवर्तमाननक्षत्रात् पश्चात्तन्नक्षत्रसप्तकम् ॥ १३ ॥

यदा भवेतां चंद्रार्कौ राहुवक्त्रांगसंस्थितौ ॥ सैन्ययोश्च क्षयस्तत्र संदेहाद्यायिनो जय ॥ १४ ॥ सविता जीवपक्षे च निशानाथो गुदे स्थितः ॥ निर्दिष्टः स्थायिनो भंगो यायिनः सक्षतो जयः ॥ ॥ १५ ॥ उदरस्थो यदा भानुः शशांको वज्रमास्थितः ॥ हेलया जीयते स्थायी यायी च म्रियते रणे ॥ १६ ॥ कामांगस्थे दिवानाथे मस्तकस्थे निशाकरे ॥ स्थायिनो विजयस्तत्र यायिनश्च कुलक्षयः ॥ १७ ॥

यदा भवेतामिति ॥ १४ ॥ इति मुखादियोगपंचकं प्रथममंगम् । सविता जीवपक्षे चेति ॥ १५ ॥ उदरस्थो यदा भानुरिति । वज्रांगमिति राहुपंचदशर्क्षात् षट् नक्षत्रं वज्रांगमिति ॥ १६ ॥ कामांगस्थेति । राहुवर्तमानर्क्षात् पश्चात्सप्त नक्षत्राणि शिरोंगम् ॥ १७ ॥

संपुटस्थो यदादित्यो जिह्वायां चंद्रमाः स्थितः ॥ स्थायी च भंगमायाति किंचिद्यायी जयी रणे ॥ १८ ॥ जठरस्थो यदा भानुश्चंद्रस्तत्रैव संस्थितः ॥ देवानपि जयेद्यायी किं पुनः प्रतिमं बलम् ॥ १९ ॥ चंद्रांगस्थो यदादित्यः सूर्यांगे चंद्रमाः स्थितः ॥ समयुद्धं भवेत्तत्र किंचिदागंतुको जयी ॥ २० ॥ गुदे तीक्ष्णांशुसंयुक्ते कपालस्थोथ शीतगुः ॥ यायी च भज्यते वश्यं स्थितः स्थायी जयं विना ॥२१॥ गुदभे संस्थितः सूर्यो राहुभे संस्थितः शशी ॥ तदा महाहवो घोरः किंचित्स्थायी जयी भवेत् ॥२२॥

संपुटस्थेति । संपुटमित्यनेन जीवपक्षः जिह्वाराहुस्थाननक्षत्रं शेषं सुगमम् ॥ १८ ॥ जठरस्थो यदा भानुरिति । जठरमित्यनेन जीवपक्षस्त्रयोदशेति जीवपक्षस्थौ रविचन्द्राविल्यर्थः ॥ १९ ॥ इत्युदरादियोगपंचकम् १ द्वितीयांगः। चन्द्रांगस्थो यदादित्य इति चंद्रांगस्थ इत्यनेन राहोः पंचदशमं नक्षत्रम्। सूर्यांगस्थमिति पंचदशर्क्षाद्यं नक्षत्रम् ॥ २० ॥ गुदे तीक्ष्णांशुसंयुक्तेति ॥ २१ ॥ गुदभे संस्थितः सूर्य इति ॥ २२ ॥

भानुक्षेत्रस्थितो भानू रुद्रक्षेत्रे च चंद्रमाः ॥ यायिनो मृत्युमाधत्ते.जयलाभौ स्थितस्य च ॥ २३ ॥ सूर्यांगे च सहस्रांशुर्जिह्वायां शीतगुः स्थितः ॥ यायिनश्च जयं दद्यात्स्थायिनो भंगमादिशेत् ॥ २४ ॥

इति गुदादिपंचकम् । भानुक्षेत्रस्थित इति । 'राहुस्थितनक्षत्रात् षोडशादिषण्नक्षत्राणि सूर्यांगसंज्ञानि । द्वाविंशतिनक्षत्रात् सप्त नक्षत्राणि रुद्रसंज्ञानि। अत्र भानुक्षेत्रे भानुः। रुद्रक्षेत्रे चन्द्रमाः । अस्मिन् योगे यायी गच्छतीति यायी अग्रक्षेत्रगामी मृत्युमाप्नोति। स्थितस्य स्थायिनः पश्चात् गामिनो जयलाभौ भवतः संग्रमे जयः लाभस्तु राजवर्गादितः अथवा संग्राम एव सुवर्णाद्यश्वगजसन्नाहादीनां लाभः ॥ २३ ॥ सूर्यांग इति । सूर्यांगं प्रागुक्तमेव । जिह्वा राहुवर्त्तमाननक्षत्रम्। शेषं सुगमम् ॥ २४ ॥

पुच्छषट्के यदादित्यो जीवांगे चंद्रमाः स्थितः ॥ यायी विजयते तत्र शक्रतुल्येपि वैरिणि ॥ २५ ॥ भास्करे राहुपृष्ठस्थे मृगांके गुदमाश्रिते ॥ समयुद्धं भवेत्तत्र किंचिद्यायी जयी भवेत् ॥२६॥ सूर्याचंद्रमसौ यत्र वज्रांगे समुपस्थितौ ॥ द्वयोस्तु बलयोस्तत्र वधो भवति निश्चितम् ॥ २७ ॥

पुच्छषट्के इति । पुंच्छषट्कं प्रागुक्तमेव सूर्यांगम् । जीवाङ्गं जीवपक्षस्त्रयोदसर्क्षाणि । एवंविधे योगे संग्रामे इंद्रतुल्ये शत्रौ स्थिते सति स्वल्पबलोपि यायी गुणयुतो विजयते । अर्थादधिकबलमपि जयति ॥ २५ ॥ भास्करे राहुपृष्ठस्थे इति । राहुपृष्ठनक्षत्रं प्रागुक्तमेव सूर्यांगम्। गुदनक्षत्रं तु पंचदशमर्क्षम् अस्मिन् योगे सममेव युद्धं किंचिज्जयो यायिनः वाङ्मात्रम् ॥ २६ ॥ सूर्याचंद्रमसौ यत्रेति । यदेव सूर्यांगं तदेव वज्रांगम्। वज्रांगे यदि सूर्याचन्द्रमसौ स्थितौ भवतः अस्मिन् योगे बलद्वयस्यापि क्षयः स्यात् ॥ ॥ २७ ॥ इति वज्रांगपंचके तृतीयांगमभिहितम् ॥ ३ ॥

रुद्रांगस्थे दिवानाथे राहुजिह्वांगतः शशी ॥ स्थायिनस्तु जयस्तत्र भंगो भवति यायिनः ॥ २८ ॥ कपालसंस्थिते सूर्ये संपु-

टस्थो यदा शशी ॥ यायिना जीयते शत्रुरनायासेन नान्यथा ॥ २९ ॥ मस्तकस्थे दिवानाथे रात्रिनाथे गुदस्थिते ॥ यायी च विजयी युद्धे स्थायिनश्च पराजयः ॥ ३० ॥ राहुशीर्षस्थितो भानुर्भानुक्षेत्रे निशाकरः ॥ अन्योन्यविग्रहो घोरो जायते नरपालयोः ॥ ३१ ॥ यदा रुद्रांगसंयुक्तौ दिवानाथनिशाकरौ ॥ बलद्वयं तदा याति शीघ्रतो यममंदिरम् ॥ ३२ ॥

इति पंचांगराहुकालानलम् ॥

रुद्रांगस्थ इति । राहुनक्षत्रोपलक्षितद्वाविंशतिनक्षत्रात् सप्तर्क्षाणि रुद्रांगानि । जिह्वांगं राहुनक्षत्रम् । शेषं सुगमम् । भंग इति संग्रामात्पलायते ॥ २८ ॥ कपालसंस्थितेति । रुद्रांगस्यैव कपालत्वम् । संपुटसंज्ञा जीवपक्षे ॥ २९ ॥ मस्तकस्थेति । मस्तकत्वं रुद्रांगस्यैव गुदं पंचदशर्क्षम् ॥ ३० ॥ राहुशीर्ष इति । भानुक्षेत्रं तु राहुनक्षत्रात्षोडशर्क्षादिषट्नक्षत्रम् ॥ ३१ ॥ यदा रुद्रांगेति ॥ ३२ ॥ इति पंचांगराहुकालानलम् ।

॥ षडंगराहुचक्रम् ॥




अथ षडंगराहुः ॥ तद्वत्षडंगभेदेन राहुचक्रं वदाम्यहम् ॥ मुखं हृदुदरं गुह्यं पुच्छं मस्तकमेव च ॥ १ ॥ मुखैकं हृदये सप्त षड् ऋक्षाणि तथोदरे ॥ ऋक्षैकं गुह्यगं तस्य षट् पुच्छे सप्त मस्तके ॥ २ ॥ मुखाद्यंगस्य नामानि फलं चापि वदाम्यहम् ॥ यथोत्तरक्रमेणैव चंद्रार्कभ्रमणेन च ॥ ३ ॥ यत्र धिष्ण्ये स्थितो राहुस्तस्य धिष्ण्यं प्रकीर्तितम् ॥ गलितं कर्तरी जिह्वा चंद्रांगं वदनं तथा ॥ ४ ॥ राहुऋक्षाग्रतः सप्त भानि युक्तानि यानि च ॥ तानि संपुटसंज्ञानि कामांगहृदयं मतम् ॥ ५ ॥ हृदयाग्रे स्थिता याश्च तारका रससंख्यया ॥ कामांगं जठरं जीवं संपुटोदरसंज्ञकाः ॥ ६ ॥ उदराच्चैकनक्षत्रं मुखात्पंचदशं स्फुटम् ॥

गुदमुद्गिलितं गुह्यं केतुश्चंद्रार्ककर्तरी ॥ ७ ॥ गुदऋक्षाग्रगो यानि धिष्ण्यानि ऋतुसंख्यया ॥ पुच्छं सूर्यांगवज्रांगं पृष्ठे मृत्युस्तथैव च ॥ ८ ॥ शेषाणि सप्तभान्यत्र मध्यस्थास्यास्यपुच्छयोः ॥ कपालं मस्तकं शीर्षं रुद्रांगं भोग्यमंडलम् ॥ एवं षडंगनामानि विज्ञेयानि विचक्षणैः ॥ ९ ॥

अथ षडंगराहुः तद्वत्षडंगभेदेनेति ॥ १ ॥ अंगविभागमाह । मुखैकमिति अत्र जीवपक्षस्यैव विभागः कृतः जीवपक्षे आदिसप्तनक्षत्रं हृदयसंज्ञम् ७ तदग्रे षट्नक्षत्राणि ६ उदरसंज्ञानि ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥

स्थिररूपस्थितो भानुश्चररूपस्तु चंद्रमाः ॥ क्रमेणैकैकशोंगानां योगषट्कं वदाम्यहम् ॥ १० ॥ राहुवक्त्रे स्थिते सूर्ये चंद्रे हृदयसंस्थिते ॥ यायिनो विजयस्तत्र स्थायिनो भंग आहवे ॥ ११ ॥ मुखांगसंस्थिते सूर्ये चंद्रे चोदरगे रणे ॥ अग्रयायी जयेद्युद्धे हेलया नात्र संशयः ॥ १२ ॥ भास्करे गिलितांगस्थे चंद्रे केत्वंगसंस्थिते ॥ स्थायी भंगं समायाति यायी जयति सक्षतः ॥ १३ ॥ राहुऋक्षस्थितो भानुश्चंद्रे पुच्छांगसंस्थिते ॥ स्थायिनो विजयं युद्धे यायिनो मृत्युमादिशेत् ॥ १४ ॥ राहुजिह्वां गते सूर्ये चंद्रे रुद्रांगसंस्थिते ॥ बलावर्तो भवेत्तत्र सैन्ययोरुभयोरपि ॥ ॥ १५ ॥ राहुऋक्षस्थितो भानुश्चंद्रस्तत्रैव संस्थितः ॥ न कश्चिज्जयमाप्नोति सैन्ययोरुभयोः क्षयः ॥ १६ ॥ इति मुखादियोगषट्कम् ॥

स्थिररूपस्थितो भानुरिति ॥ १० ॥ अधुना योगषट्कमाह । राहुवक्त्रे स्थितेति । सुगमम् ॥ ११ ॥ मुखांगसंस्थितेति । अत्र योगद्वये यायिनो जयः प्रोक्तः । जीवपक्षे चंद्रस्य स्थितिवशात् । किंच राहुवक्त्रनक्षत्रमपि चंद्रांगम् । अग्रगामी यायिसंज्ञः ॥ १२ ॥ भास्करे गिलितेति ॥ गिलिते राहुयुक्तेर्के केत्वंगं पंचदशं नक्षत्रम् ॥ १३ ॥ राहुधिष्ण्यस्थितेति । अत्र षडंगचक्रे पुच्छसंज्ञा षोडशर्क्षादिषट्के ॥ १४ ॥ राहुजिह्वां गतेति । राहुधिष्ण्यात् द्वाविंशतिमादिसप्तनक्षत्रं रुद्रांगम् उभयो राज्ञोः कटके शस्त्रपातेन विना आकुलता भवति । परस्परं भयं मनुते

असाकं कटके शत्रुः पतित इति ॥ १५ ॥ राहुधिष्ण्यस्थितो भानुरिति ॥ १६ ॥ इति मुख दिषट्कम् ।

हृदयस्थे दिवानाथे जठरस्थे निशाकरे ॥ निर्दिष्टः स्थायिनो मृत्युर्यायी भवति निर्व्रणः ॥ १७ ॥ हृदयस्थो यदा भानुः शशांको गुदमाश्रितः ॥ हेलया जयते यायी स्थायी च म्रियते रणे ॥ १८ ॥

हृदयस्थे दिवानाथेति । हृदये जीवपक्षस्यादिसप्तनक्षत्रे जठरे जीवपक्षे सप्तनक्षत्रादुपरि षट्‌ नक्षत्रे यथाक्रमं सूर्य चद्र स्थिते अस्मिन् सति युद्धं तदा स्थायिसंज्ञस्य मृत्युः स्थायी पश्चात्क्षेत्रगामी पश्चाद्वादकारी वा स्थायी पौरसंज्ञो वा राजा । अस्मिन् योगे स्वजयोपायं कुर्यात् पुर पतिः । भक्ष्याभक्ष्यं भटस्य विचार्य अन्यं पुरनाथं कुर्यात् । अथवा पौरो राजा सकलबलैः सम वेतः परचक्रागमोपरि भूवलं पृष्ठतः कृत्वा पतेत् । स्वयमेव यायी भूयात् । यतः प्रथमघातकारी यायी स्याव यायिसञ्ज्ञः कथितः ॥ १७ ॥ हृदयस्थे दिवानाथेति ॥ १८ ॥

कामांगस्थे दिवानाथे पुच्छषट्के निशाकरे ॥ स्थायिनो विजयस्तत्र यायिनश्च पराभवः ॥ १९ ॥ संपुटस्थो यदादित्यो रुद्रांगे चंद्रमाः श्रितः ॥ यायी च भंगमाप्नोति किंचित् स्थायी जयी रणे ॥२०॥ कामांगस्थे दिवानाथे चंद्रे राहुमुखस्थिते ॥ संग्रामे विजयी स्थायी यायिनो भंगमादिशेत् ॥ २१ ॥ हृदयांगे यदा युक्तौ चंद्रादित्यौ व्यवस्थितौ ॥ दैत्यानपि जयेद्यायी किंपुनर्मानवं बलम् ॥ २२ ॥ इति हृदयादियोगषट्कम् ॥

कामांगस्थे दिवानाथेति । कामांगं जीवपक्षस्यादिसप्तमं पुच्छषट्कम् मृतपक्षस्यादौ ष नक्षत्रम् ॥ १९ ॥ संपुटस्थो यदेति संपुटं जीवपक्षस्याऽऽदिमसप्तकम् । रुद्रांगं मृतपक्षस्यांति सप्तकम् ॥ २० ॥ कामांगस्थे दिवानाथेति । कामांगं जीवपक्षस्यादिसप्तकं तत्रस्थे रवौ ॥२१ हृदयांगे यदा युक्ताविति । किंच जीवपक्षे अंगद्वयेपि सूर्याचंद्रमसौ यदा भवतस्तदा यायिनामे जयः । यायी परचक्रागमः । तथा च लल्लः । यावत्स्वविषये सीमा नागर इह तावदुच्य राजा । लभते स यायिसंज्ञां स्वविषयसीमां परित्यज्य ॥ २२ ॥ इति हृदयादियोगषट्कम् ।

उदरस्थे दिवानाथे निशानाथे गुदस्थिते ॥ समं युद्धं भवेत्तत्र किंचिद्यायी जयी रणे ॥ २३ ॥ संपुटस्थो यदा भानुः पृच्छे भवति चंद्रमाः ॥ यायिभग्नो जयी स्थायी तत्र काले न संशयः

॥ २४ ॥ कामांगस्थः सहस्रांशुर्मस्तकस्थो निशाकरः ॥ याता भंगमवाप्नोति स्थानवासी जयी रणे ॥ २५ ॥ भानावुदरगे यत्र निशेशो राहुवक्त्रगः ॥ अग्रयायी क्षयी तत्र स्थाता जयति नान्यथा ॥ ३६ ॥ स्वर्भानूदरगो भानुर्हृदये तारकाधिपः ॥ अनायासेन संग्रामे यायिनो जयमादिशेत् ॥ २७ ॥

अथोदरादियोगषट्कमाह । उदरस्थेति दिवानाथेति । उदरे जीवपक्षस्योत्तरषट्के । गुदे ...दशनक्षत्रे संपुटस्थो यदेति । संपुटे जीवनपक्षस्यांत्यषट्के । पुच्छे मृतपक्षस्यापि षट्के ...॥ २४ ॥ कामांगस्थः सहस्रांशुरिति । कामांगस्थे जीवपक्षस्यादिसप्तके मस्तकस्थे । मृतपक्षस्यांतसप्तके ॥ २५ ॥ भानावुदरगेति । जीवपक्षस्यादिसप्तनक्षत्रे उदरसंज्ञे रविः अग्रवादी ...यायी क्षयी न जयतीत्यर्थः । स्थायी जयति ॥ २६ ॥ स्वर्भानूदरगेति । राहूदरांगं जीवपक्षस्यावसानषट्कम् । हृदयांगं । जीवपक्षस्यादिसप्तकम् ॥ २७ ॥

उदरांगे यदा युक्तौ चंद्रादित्यौ व्यवस्थितौ ॥ तदा संधिर्न संदेहः सैन्ययोरुभयोरपि ॥ २८ ॥ इत्युदरादियोगषट्कम् ॥ केतुधिष्ण्यस्थिते सूर्ये चंद्रे पुच्छांगसंस्थिते ॥ यायिभंगो जयी स्थायी भाषितं ब्रह्मयामले ॥ २९ ॥ गुदे तीक्ष्णांशुसंयुक्ते कपालस्थे निशाकरे ॥ यायी च भज्यते तत्र स्थायी जयति नान्यथा ॥ ३० ॥ गुदर्क्षसंस्थिते सूर्ये राहुऋक्षस्थितः शशी ॥ महाहवो भवेद्घोरः किंचित् स्थायी जयी रणे ॥ ३१ ॥ भानुरुद्गिलिते ऋक्षे शशभृत्संपुटे तदा ॥ यायिनो विजयस्तत्र स्थायिनो भंगमादिशेत् ॥ ३२ ॥ गुह्यांगे वर्तते भानुर्जठरे रोहिणीपतिः ॥ दंडयित्वा रिपोः सैन्यं याताभ्येति निजालयम् ॥ ३३ ॥

उदरांगेति । उदरांगं जीवपक्षस्यावसानषट्कम् । तत्र रविचन्द्रौ । अस्मिन् योगे यात्रा ...त्रुसमागमो वा तदा संधिरेव ॥ २८ ॥ इत्युदरादियोगषट्कम् ॥ अथ गुदादियोगषट्कमाह । ...केतुधिष्ण्यस्थितेति । केत्वंगं पंचदशमं नक्षत्रम् । पुच्छांगं षोडशादिषट्कं ॥ २९ ॥ गुदे तीक्ष्ण...मेति । गुदांगं राहुनक्षत्रात् पंचदशमम् । कपालं मृतपक्षे अवसानसप्तर्क्षम् ॥ ३० ॥ गुदर्क्षेति । ...गमम् ॥ ३१ ॥ भानुरुद्गिलितेति । उद्गिलितं गुदर्क्षं पंचदशमम् । संपुटसंज्ञं जीवपक्षस्यादि...सप्तकम् ॥ ३२ ॥ गुह्यांगेति । जठरं जीवपक्षस्यासानषट्कम् ॥ ३३ ॥

गुह्ये दिनकरो यत्र तत्र वै यामिनीकरः ॥ समं युद्धं भवेत्तत्र किंचिदागंतुके जयः ॥ ३४ ॥ इति गुदादियोगषट्कम् ॥ सूर्यांगस्थः सहस्रांशुर्जिह्वायां शीतगुः स्थितः ॥ स्थायिनो विजयं विद्यात् यायिनश्च पराभवः ॥ ३५ ॥ पुच्छक्षेत्रे स्थितो भानू रुद्रक्षेत्रे तु चंन्द्रमाः॥यायिनो मृत्युमायांति जयलाभौ च स्थायिनः ॥ ३६ ॥ पुच्छषट्के यदा भानुः कामांगे चंद्रमाः श्रितः ॥ यायी विजयते तत्र शक्रतुल्येपि वैरिणि ॥ ३७ ॥ अंशुमाली भवेद्वज्रे जठरे तु सुधाकरः ॥ आदत्तेऽरिश्रियं जित्वा सर्वान्यायी रणांगणे ॥ ३८ ॥

गुह्ये दिवाकरेति । गुह्यं गुदमिति पंचदशमम् । आगंतुको यायी किंचित् जयेत् ॥ ३४ ॥ इति गुदादियोगषट्कम् । अथ वज्रांगयोषट्कमाह सूर्यांगस्थ इति ॥ ३५ ॥ पुच्छक्षेत्रेति । पुच्छांगं मृतपक्षस्यादिपट्कम् । रुद्रांगं राहुनक्षत्रम् ॥ ३६ ॥ पुच्छषट्केति । कामांगं जीवपक्षस्यादिसप्तकम् ॥ ३७ ॥ अंशुमालीति । पुच्छषट्कं मृतपक्षस्यादिषण्नक्षत्रम् । जठरांगं जीवपक्षस्यावसानषण्नक्षत्रम् ॥ ३८ ॥

भास्करे राहुपुच्छस्थे मृगांके गुदमाश्रिते ॥ समं युद्धं भवेत्तत्र किंचिद्यायी जयी भवेत् ॥ ३९ ॥ सूर्याचंद्रमसौ यत्र वज्रांगे यदि संस्थितौ ॥ सैन्ययोरुभयोस्तत्र वधो भवति निश्चितः ॥ ४० ॥ इति वज्रांगषट्कम् ॥ रुद्रांगस्थे दिवानाथे रुद्रजिह्वांगगः शशी ॥ स्थायिनस्तु जयस्तत्र भंगो भवति यायिनः ॥ ४१ ॥ राहुशीर्षस्थिते मित्रे शशांके हृदि संस्थिते ॥ विना युद्धेन गृह्णाति यायी करमरिश्रियः ॥ ४२ ॥

भास्करे राहिति । गुदर्क्षं राहुनक्षत्रात्पंचदशम् ॥ ३९ ॥ सूर्याचन्द्रमसाविति वज्रांगं मृतपक्षस्यादिषट्कम् । तेन किम् । मृतपक्षे यदि सूर्याचन्द्रमसौ भवतः । अत्र योगे नागरयायिनृपसैन्यद्वयवधः ॥ ४० ॥ इति वज्रांगयोगषट्कम् । अधुना षडंगे षष्ठयोगमाह । रुद्रांगस्थे दिवानाथेति । रुद्रांगं मृतपक्षेंतिमसप्तकम् । जिह्वांगं राहुनक्षम् ॥ ४१ ॥ राहुशीर्षस्थितेति । राहुशीर्षे मृतपक्षस्यांतिमसप्तके । हृदयांगं जीवपक्षस्यादिसप्तकम् ॥ ४२ ॥

कपालसंश्रितः सूर्यः संपुटस्थो यदा शशी ॥ यायिना जीयते शत्रुः स्थायिनो भंगमादिशेत् ॥ ४३ ॥ कपालसंस्थिते सूर्ये

धिष्ण्यनाथे गुदस्थिते ॥ यायिनो विजयो युद्धे स्थायिनस्तु पराजयः ॥ ४४ ॥ राहुशीर्षस्थितो भानुः पुच्छक्षेत्रे निशाकरः ॥ अन्योन्यविग्रहं घोरं युद्धं भवति दारुणम् ॥४५॥ दिनेशो राहुरुद्रांगे चंद्रस्तत्रैव संस्थितः ॥ विनाशं कोशराष्ट्रस्य यायिनो मृत्युमादिशेत् ॥ ४६ ॥ इति कपालादियोगषट्कम् ॥ इति यामलीयस्वरोदये षडंगयोगषट्कम् ॥

कपालेति । कपालं मृतपक्षे अवसानसप्तकमेव । संपुटसंज्ञं जीवपक्षे अंतिमषट्कनक्षत्रम्॥ ४३॥ कपालसंस्थितेति । कपालांग मृतपक्षे अंतिमषट्कम् । गुदसंज्ञं राहुभात्पंचदशमम् ॥ ४४ ॥ राहुशीर्षस्थितेति । राहुशीर्षं मृतपक्षस्य अंतिमसप्तकम् । भानुक्षेत्रं मृतपक्षस्यादिषट्कम् । एतावता किम् । मृतपक्षे द्वावपि स्थितौ ॥ ४५ ॥ दिनेशेति । मृतपक्षे अंतिमसप्तके चन्द्रादित्यौ तदा नागरस्य कोशराज्यविनाशः यायिनो मृत्युः ॥ ४६ ॥ इति नरपतिजयचर्यास्वरोदये षडंगराहुकालानलम् ।

हृदयादीनि चांगनि जिह्वांतानि क्रमेण च ॥ दशसंख्यान्यहं वक्ष्ये राहुचक्रस्य मध्यतः ॥ १ ॥ पुष्पितं फलितं चैव निष्फलं झटितं गुदम् ॥ राजसं तामसं वृद्धं मृतं जिह्वां क्रमेण च ॥२॥ पुष्पिते त्रीणि चत्वारि फलिते निष्फले त्रयम् ॥ झटिते त्रीणि ऋक्षाणि गुदे चैकं भवेत्तथा ॥ ३ ॥ राजसे त्रीणि ऋक्षाणि तामसे च तथा त्रयम् ॥ वृद्धे चतुष्टयं त्रीणि मृतौ चैकं तथा मुखे ॥ ४ ॥ त्रीणि पुष्पितऋक्षाणि क्षेमलाभकराणि च ॥ शत्रुभंगो भवे द्युद्धे यात्रा मासेन लाभदा ॥ ५ ॥

अथ राहुभादीनाम् अष्टाविंशतिनक्षत्राणां दशांगभेदेन दशांगराहुकालानलं वदति । हृदयादीनीति ॥ १ ॥ पुष्पितमिति ॥ २ ॥ ३ ॥ ४ ॥ क्रमेण नक्षत्रांगसंख्याफलमाह । त्रीणि पुष्पितऋक्षाणीति । जीवपक्षस्यादितिनक्षत्राणां पुष्पितसंज्ञा । तत्र यात्रा द्विवांगभेदेन० जीवपक्षे क्षपानाथे मृतपक्षे स्थिते रवावित्यनेन योगेन । अथवा राहुवक्रस्थिते सूर्ये चंद्रे कामांगसंस्थित इत्यनेन च जीवपक्षस्य आदित्रिनक्षत्राभ्यंतरे यायिनो राज्ञो यात्रा क्षेमलाभकर्त्री. शत्रोः पराजयः इदं फलं मासेनैव यात्राफलमिति ॥ ५ ॥

ततश्चत्वारि धिष्ण्यानि पक्षैकेन फलंति च ॥ गजवाजिधन देशं यायी तु लभते ध्रुवम् ॥ ६ ॥ अफलाख्यत्रिधिष्ण्येषु षण्मासे

**यायिनं प्रति ॥ संधिं सेवां तथा देशं यायी प्राप्नोति निश्चितम् ॥७॥ फलं प्राप्नोति वर्षेण झटितैश्च त्रितारकैः ॥ गोधनान्यारिवृं-दानां यायी लुंठति च ध्रुवम् ॥ ८ ॥**

ततश्चत्वारि धिष्ण्यानीति । द्विधांगभेदेनैव यातुर्नृपस्य जीवपक्षे त्रिपुष्पितऋक्षादग्रे तेन चतुर्षु नक्षत्रेषु फलितसंज्ञेषु यात्रा पंचदशदिनाभ्यन्तरे गजवाजिदेशधनानि ददाति यायि नृपस्य ॥ ६ ॥ अथ तृतीयांगयोगफलमाह । अफलाख्येति । षडंगभेदे उदरांगे यदा युक्तौ चन्द्रादित्यौ इत्यर्थेन यदि यायी जीवपक्षे अफलाख्यधिष्ण्यत्रितये परविषयं याति तदा षण्मासात् यायिनागरयोः संधिर्भवति । एवं यायिनो नृपात् स्थायी देशं प्राप्नोति जीवनमित्यर्थः सेवां च प्राप्नोति अर्थाद्यायी स्थायिनो जीवनं दत्त्वा सेवां स्वीकृत्य षण्मासाद्गृहमभ्येति एवं तथा बृहद्यात्रायां षाड्गुण्ये संधिरादौ परिपणरचित इति षाड्गुण्ये संधिः कथम् । निश्च भवति परिपणरचितः परिपणेन दानेन स्थिरो भवति । विना दानेन संधिः स्थिरो न स्यात्॥७॥ अथ चतुर्थांगमाह । फलं प्राप्नोति । जीवपक्षे अंतिमत्रितारके झटितसंज्ञे याता अरिवृन्दानां गोधनानि गाश्च धनानि च लुंठयते । इदं फलं वर्षेण भवति । तत्र विशेषः । गुदे संतिष्ठत आनुर्जठरे रोहिणीपतिरिति योगेन गतो राजा दंडयित्वा रिपोः सैन्यं पुनरभ्येति । जीवप बलात् ॥ ८ ॥

**गुदऋक्षे जयं लक्ष्मीं पद्मिनीं प्रियवादिनीम् ॥ रूपयौवनसंपन्नां स्त्रियं प्राप्नोति निश्चितम् ॥ ९ ॥**

अथ पंचमांगफलमाह । गुदऋक्षेति । राहुनक्षत्रात्पञ्चदशर्क्षम् । तदपि जीवनपक्षे निर्दिष्ट चन्द्रादित्यौ यदा युक्तौ जीवपक्षे व्यवस्थितौ । तत्र क्षेमं जयो लाभ इत्यनेन गुदर्क्षे यदि या बलमाश्रित्य विजिगीषू राजा परपुरं याति । तदा यायिन्नलोक्तं फलं प्राप्नोति । अधिकं परपु निवासिनो जयलक्ष्मीमिव मनोरमां रूपयौवनसंपन्नां कन्यां प्राप्नोति । मासेन यात्राफलं भवत गुदनक्षत्रस्य बलात् । अथ षष्ठांगफलमाह । मृतपक्षे आदौ त्रीणि नक्षत्राणि राजससंज्ञानि तत्र यत्राफलं ० ॥ विग्रहस्येति । राजासाख्यैर्मृतपक्षे यदि चन्द्रादित्यौ । हृदयादीनीति ह्र दंगमारभ्य जिह्वापर्यंतं दशसंख्यान्यंगानि राहुचक्रे राहोर्वदामीत्यर्थः । तेषां दशांगानां नाम न्याह । पुष्पितं फलितमिति । राहुभुक्तर्क्षाणि यानि जीवपक्षसंज्ञानि तदारम्य दशांगा विभक्तानि । तत्र राहुस्थितनक्षत्राग्रतः जीवपक्षर्क्षादि हृदयादिसंज्ञकानि । पंचागषडंगच विभक्तानि सन्ति । पुनस्तान्येवांगनि दशांगेन विभज्यंते । तथा च । हृदयसंज्ञकानि स ऋक्षाणि । तन्मध्ये आदौ त्रयाणां पुष्पितसंज्ञा । तस्मिन्नक्षत्रे राज्ञां यात्राफलमाह त्रीणि पुष्पितऋक्षाणीति । सुगमम् । ततो हृदयांगेषु पुष्पितसंज्ञा । ततश्चत्वा धिष्ण्यानीति । एतेषु चतुर्षु नक्षत्रेषु परपुरग्रहणकामी नरपतिर्यदि प्रस्थितो भव

तदा मासेन गजवाजिधनानि लभते। गजस्य वाजिनो धनस्य वा दण्डेन लाभः। संग्रामे यायी जयी भवति। अन्योपि याता धनानि लभते। अथ जीवपक्षांगेपि हृदयाख्यसप्त-नक्षत्राग्रे षण्नक्षत्राण्युदरसंज्ञकानि। तत्रादित्रयाणां निःफलसंज्ञा। तत्फलम्। अफले त्रिष्वित्ति। जीवपक्षेपि अफलसंज्ञकनक्षत्रे यदि परदेशं प्रति राजा यायी भवति तदा तद्राज्ञः सकाशात् यायी परपुरनाथात्संधिं लभते। सेवां च लभते तथा आदेशं च आज्ञां देशं वा इदं निश्चितमेव। परं षण्मासपरिमितकालेन। अफलादग्रे त्रीणि नक्षत्राणि झटितसंज्ञकानि। तत्र गतस्य फलम्। फलं प्राप्नोतीति। अत्र गतस्य यायिनो वर्षेण फलं भवति। इति तात्पर्यम्। जीवपक्षाभ्यंतर एव गुदसंज्ञं नक्षत्रम्। तत्र गतस्य फलम्। गुदऋक्षे जयं लक्ष्मीति। यायी जयं प्राप्नोति। जयलक्ष्मीं च। तदुपरि यथायोग्यां पद्मिनीं प्रियवा-दिनीं रूपयौवनसंपन्नां स्त्रियं प्राप्नोति। यथायोग्यामित्यत्र म्लेच्छाधिपतयः शत्रुभूप-त्नीनां स्त्रियमभिलषंति कन्यां वा तदर्थोपन्यासोयम्। जीवपक्षेंगान्यभिहितानि एददुपरि मृतपक्षे अंगानि कल्पयित्वा फलानि। तत्र राहोर्गुदाग्रे षड्ऋक्षाणि तत्रादौ त्रयाणां राजससंज्ञा। तदग्रे त्रयाणां तामससंज्ञा। ततश्चतुर्णां वृद्धसंज्ञा। ततस्त्रयाणां मृतसंज्ञा। तदग्रे राहुनक्षत्रे जिह्वासंज्ञा॥ ९॥

॥ दशांगराहुकालानलच०॥

जिह्वा १ पुष्पितं ३ फलितं ४



विग्रहस्य भवेद्वृद्धिर्युद्धे भंग-स्तथैव च॥ रोगपीडा भवेद्वर्षे राजसाख्यैस्त्रिता-रकैः॥ १०॥ हस्त्यश्वपुत्र-मित्रादि देशकोशपरिग्रहाः॥ षड्भिर्मासैर्विनश्यंति यायि-नस्तामसत्रये॥ ११॥ ताम-सोग्रे चतुष्के च तारका वृद्धसंज्ञकाः॥ सर्वनाशकराः प्रोक्ता मासैकेन न संशयः॥ ॥१२॥ ततस्त्रिमृत्युऋक्षाणि राज्ञां मृत्युकराणि च॥ अर्थनाशश्च युद्धं च पक्षैकेन फलं स्मृतम्॥ १३॥ युद्धे भंग महाभीति-र्द्रव्यनाशं कुलक्षयम्॥ सद्यो मृत्युं लभेद्यायी राहुचक्रे सुनि-श्चितम्॥ १४॥ इति दशांगराहुकालानलशुभाशुभफलम्॥

एषां पंचानां क्रमशः फलमाह । अथ राजसाख्यफलम् । विग्रहस्येति । वर्षपर्यं यात्रासमाप्तिः। परमतेन क्रमेण दिने दिने वर्षपर्यंतं विग्रहवृद्धिर्भवति । युद्धस्य न निवृत्तिः तत्र कदाचिद्रोगपीडा तदुपरि यात्रा परिसमाप्तिसमये युद्धं भवति । तस्मिन् युद्धे भंगः पलायमानः स्वदेशमायाति ॥ १० ॥ अथ तामसाख्यफलम् । हस्त्यश्वेति । यदि गर्वात् कोशबलसंपन्नः परपुरजयाय गच्छति तदा षण्मासैरेव एतानि फलानि लभते हस्त्यश्वपुत्रमित्रादयः प्रतिपक्षाद्धता विनश्यंति । स्वयं तु परदेशगतो जेतुम् । अत्र स्व राज्ये तत्पश्चात् परिग्रहादयोंतः पुरवराविलीयंते । मृता भवंति ॥ ११ ॥ अथ वृद्ध संज्ञांगफलमाह । तामसोग्रेति ॥ १२ ॥ अथ मृत्युफलमाह । सर्परूपी राहुः तन्मुख सन्नतया तदभिमुखतया च तस्य विषफूत्कारात् मृतनक्षत्राणि । तेषां फलम् । तत्र मृत्युरिति ॥ १३ ॥ अथ जिह्वाफलमाह । युद्धे भंगमिति ॥ १४ ॥ इति नरपतिजयचर्या टीकायां जयलक्ष्म्यां दशांगराहुः ।

**युद्धकाले यदा शीघ्रं यात्रायोगो न लभ्यते ॥ उत्पाद्यौ तौ तदा शीघ्रं तत्कालेंदुदिवाकरौ ॥ १ ॥ इष्टनाड्यो हता धिष्ण्यैः षष्टिः भागाप्तशेषके ॥ अश्विन्यादींदुभुक्तेन फलं तात्कालचंद्रमाः ॥२॥ चंद्रवत्साधयेदर्कमृक्षस्थं चेष्टकालिकम् ॥ यतोहोरात्रमध्ये तौ विभ्रातौ धिष्ण्यमंडले ॥ ३ ॥**

युद्धकालेति । प्रत्यासन्ने परचक्रं आवश्यके परमपुरगमने यदि यात्रायोगः स्थिरचन्द्रे न लभ्यते । तदा तत्काले कोर्थः । मृतपक्षेपि आयोगलाभे उदयाद्दिवाकरेन्दू शीघ्रमु त्पादनीयौ । कस्मिन् काले जीवपक्षो लभ्यते जीवपक्षे प्राप्ते तदा तत्काले चन्द्रादित्यौ राहुकालानलचक्रे हृदयाद्यंगे ज्ञातौ भवतः ॥ १ ॥ तदर्थं तत्कालीकरणमाह । रव्या दीनाम् । इष्टनाड्येति । अस्मिन्नक्षत्रे तौ रवींदू तत्कालनक्षत्रस्थौ ज्ञातव्यौ भवतः तत्र करणं यथा । अश्विनीनक्षत्रस्य घटी २ पल १५ इष्टनाड्यो हता धिष्ण्यैरित्या दिकरणेन गुणितं जातं ६० । ४५ । षष्ट्या भक्ते लब्धं नक्षत्रमेकं १ गतं तदानीं भर णीस्थचन्द्रो जातः । एवं क्रियमाणे अश्विनीप्रारम्भसमयात् अश्विन्यंतं प्राप्य तत्काले अश्विनीं रेवतीं च भुक्त्वा भरणीगतश्चंद्रः । एवं सर्वेषु नक्षत्रेषु तत्कालिकीकरणम् । अथान्यत् । यदा पुष्यादिषु तत्करणम् । तत्पुष्यभुक्तघटिकाचतस्रः ४ पलानि ५४ ॥ इष्टनाड्यो हता धिष्ण्यैरित्यनेन गुणिते जातम् १३२ । १८ । उपरि षष्ट्या भागे लब्धं नक्षत्रद्वयं २ शेषम् । १२ । १८ । भोग्यनक्षत्रस्य । अत्र पश्चात् भुक्तनक्षत्रं चंद्रस्य सप्त तेन सह नवभुक्तनक्षत्राणि तत्काले मघायां चन्द्रोस्ति ॥ २ । तथा । चंद्रवत्साधयेदर्कम् । अथ सूर्यस्योदाहरणम् । रोहिण्यर्काः १० पूर्ववत्सप्तविंश तिगुण्या २७ जातं ५४ लब्धं ९ शेष० रोहिणीनक्षत्रचतुःसंयुक्तं जातम् १३ । ०

हस्तनक्षत्र घटी० प० ३ तत्र सुमतिविचारेण कन्याराशौ तत्कालसूर्यः एवं भौमादयोपि कार्याः आचार्यस्य सूर्याचंद्रमसोः प्रयोजनम् ॥ ३ ॥

स्थिरचक्रे मया प्रोक्तं चंद्रादित्यफलाफलम् ॥ परचक्रेप्यनेनैव प्रकारेण फलं वदेत् ॥ ४ ॥ सर्वेषु शुभकार्येषु यात्राकाले विशेषतः ॥ सर्वकाले शुभश्चंद्रो ज्ञेयो हृदि गुदोदरे ॥ ५ ॥ मुखपुच्छकपालस्थे शशांके राहुवक्रगे ॥ बंधनं हानिमृत्युश्च सर्वकार्येषु जायते ॥६॥ गुदसंपुटगे चंद्रे विवाहे नंदति द्वयम् ॥ नैःस्वं विद्वेषवैधव्यं मुखे पुच्छे च मस्तके ॥७॥ पुष्पिते फलिते धिष्ण्ये प्रश्नकाले शशी शुभः ॥ अफले झटिते मध्यो मृत्युःशेषांगके विधौ॥८॥

स्थिरचक्रे मया प्रोक्तमिति । स्थिरचक्रे पंचांगषडंगदशांगे चंद्रादित्यक्रमेण फलाफलमुक्तं स्थिरचक्रमिति किं यतो रविर्जीवांगे मृतांगेपि पृथक् मासषट्कं तिष्ठति । अतः स्थिरचक्रम् इदं तत्कालचक्रम् चरचक्रम् । यतो दिने दिने चतुर्दशदिनपर्यंतं यस्मिन्नृक्षे प्रवर्तमानस्तदारभ्य सप्तविंशति नक्षत्रं भुंक्ते । चंद्रः पुनरेकनक्षत्रस्थः सप्तविंशतिनक्षत्रं भुंक्ते । अतस्तत्काले चंद्रादित्यौ समुत्पाद्य यायी स्थायी बलं देयम् ॥ ४ ॥ सर्वेषु शुभकार्येष्विति । मुखपुच्छकपालस्थेति । श्लोकद्वयस्यार्थो जीवपक्षः । मृतपक्षसामर्थ्यात् । यतो हृदयादि अंगत्रयं जीवपक्षे मुखाद्यंगत्रयं मृतपक्षे ॥ ५ ॥ ६ ॥ अथ शुभकार्ये फलमाह गुदसंपुटगेति । नंदति द्वयं वरकन्याद्वयम् ॥ ७ ॥ अथान्यच्छुभफलमाह । पुष्पिते फलितेति ॥ ८ ॥

ऊर्ध्वं च खेचरं चक्रमधो भूचरमुच्यते ॥ उभयोः संनिपातेन राहुकालानलं मतम् ॥९॥ न लोभैर्न भयैः स्नेहैर्न देयं कार्यकारणैः॥ कालानलमिदं चक्रं गोपनीयं प्रयत्नतः ॥ १० ॥ चिरकालस्थिते भुक्ते सुपरीक्ष्य पुनः पुनः ॥ तस्मिञ्शिष्ये प्रदातव्यं राहुकालानलात्मकम् ॥११॥ इति श्रीनरपतिजयचर्यायां स्वरोदये राहुकालानलचक्रं समाप्तम् ॥

अथान्यदाह । ऊर्ध्वं तु खेचरमिति । ग्रंथे प्रास्तावसरे व्याख्यायते ऊर्ध्वं तु खेचरं चक्रमिति किं जीवपक्षचक्रं प्रथममुक्तं पश्चान्मृतपक्षचक्रम् । उभयोरूर्ध्वाधरत्वात् खेचरचक्रमुच्यते । यत उक्तमुत्तरार्द्धश्लोके । उभयोः सन्निपातेनेति । भूचरगाः खेचरगा अपि प्रोक्ताः । चक्रपाणिना कल्पलतायाम् । "भूचरसंस्थाः खेटा उक्ताः स्वर्भानुमार्गगा ये हि । दिनकरमार्गोपगताः खेचरचक्राश्रिताः पूर्वैः ।" ये स्वर्भानुमार्गगाः वक्रगतयः ते भूचरसंज्ञकाः । ये दिनकरमार्गोपगताः कोर्थः शीघ्रगतयस्ते खेचरा ग्रहाः खेचरसंज्ञकाः । अथवा राहुमार्गगाः यस्मिन्नक्षत्रे

राहुः संचरति । तत्सम्मुखानि नक्षत्राणि चतुर्दशतत्संस्थिता ग्रहा भूचरसंज्ञकाः ये च राहुगत-नक्षत्रादग्रे चतुर्दशनक्षत्रस्थाः खेचरसंज्ञकाः तैर्ग्रहैरपि यायिस्थायिबलमुक्तम् । यथा । कृत्तिकास्थो राहुस्तदग्रे रोहिणीप्रभृतिचतुर्दशनक्षत्रस्थाः खचरसंज्ञकाः । भरणीप्रभृतिवामं भरणी अश्विनीरेवतीत्यादिक्रमेण चतुर्दशनक्षत्रस्था ग्रहाः भूचरसंज्ञकाः । अनेनाभिप्रायेण मया राहु-कालानलचक्रे द्विधांगे ऊर्ध्वाधरतया खेचरभूचरचक्रमुक्तम् । अत एव तत्काले रविचंद्रौ तत्कालनक्षत्रगतावानीय षडंगैः पापारिष्टकरैर्योगैर्मृगयासिद्धिरुक्ता । येन च मृतपक्षे यायी भज्यते म्रियते । सैन्यक्षयं याति सैन्यावर्त्तादियोगैर्मृगयासिद्धिर्भवति । स्थायी भंगादियोगैरपि । यत्र कुत्रापि खचरभूचरचक्रं मृगयायै च प्रोक्तम् तत्रापि इदमेव । यथा भूचरचक्रे खचरचक्रे यायिस्थायिबलम् । "भूचरचक्रगाः पापाः स्थायी जयति विद्विषः । यायी खेचरचक्रे च जयदाः शुभदायिनः । यायी भंगमवाप्नोति भूचरस्थैः शुभाशुभैः । नागरो जयमाप्नोति सैन्यार्द्धे च क्षय गते । यायी विजयते नूनं खेचरस्थैः शुभाशुभैः । स्थायिनः सक्षतस्यापि जायतेऽत्र बल-क्षयः । भूचक्रगैः शुभैः खेटैः पापैः खेचरमाश्रितैः । बलद्वयं क्षयं याति राज्ञो जीवितसंशयः । मिश्रं फलं वदेन्मिश्रैर्भूचरे खेचरे गतैः । शुभाशुभैर्द्वयो राज्ञोरवश्यं स्थायियायिनोः ।" एतैः श्लोकार्थैः भूचरसंज्ञं खेचरजीवपक्षमृतपक्षविषयमित्यस्माकं मते । इति तात्काले राहुकालानले खेचरभूचरचक्रम् । अथ त्रिधा चतुर्दशांगराहुचक्रमुच्यये । कुमारविजये । चातुरंगसूचनायां चतुर्द्धांगराहुः । "शलाकासप्तके चक्रे मुख देयं च सप्तकम् ७ । राहोः स्कंधे च सप्तैव ७ सप्त चैव तथोदरे ॥ ७ ॥ कटिदेशे तथा सप्त ७ चातुरंगकनामके । राहुऋक्षादितः स्थाप्या सृष्टि मार्गव्यतिक्रमे । योधऋक्षगतं यत्र ज्ञेयं तत्र शुभाशुभम् । मुखे मृत्युभयं स्कंधे जयं चैव तथो-दरे । कटौ पातभयं प्रोक्तं चिंतनीयं च संगरे । मुखऋक्षगते योधा जीवयोगे तु मध्यमः । शनि योगे शिरश्छेदं भौमयोगे महत् क्षतम् । पलायते कवियुतौ नातिभद्रं शशांकजे । मृत्युश्चंद्रमसो योगे शस्त्रं त्यजति केतुना । महद्द्वेषकरो भानुश्चातुरंगगते सति ।" मुखाद्सिप्तनक्षत्रे यदि योद्धा युद्धाय गतो भवति । तन्नक्षत्रस्थैर्जीवादिग्रहैर्यत्फलमुक्तं तदवधार्यम्॥ इति मुखग्रहयोगः। स्कंध ऋक्षगतो योधा जीवेन जयदो भवेत् । शुक्रे शस्त्रपरित्यागी भंगी सूर्यसुतेन च । पादस्खलनदो बोधः सूर्यः शत्रुं वशं नयेत् । गात्रच्छेदकरो भौमः शस्त्रं भ्रंशयते विधुः । स्वशस्त्रतो मृतिं याति केतुयोगे न संशयः । इति चातुरंगे स्कंधगतयात्राफलम् । "उदरर्क्षगतो योधा जीव-योगे महाजयः । शुक्रेण सम्मुखः शत्रुः समयुद्ध शनैश्चरे । रवियोगे जयं विद्यात् सपा-पैंदोर्भयं भवेत् । परं जयति भौमेन चंद्रजे चातिशूरता । युद्धे संधिकरः केतुर्योधयो रुभयो रणे । इत्युदरगतग्रहयोगफलम् । कटिदेशगतो जीवो घातं न कुरुते रणे । समता भार्गवे योगे शनियोगे महद्भयम् । सूर्ये शत्रवशित्वं च चंद्रे हानिर्विनिर्दिशेत् । मारयति रणे भौमो बुधःक्लेशं करोति च । पलायनकरः केतुर्धर्मकेतुस्तृतीयके । विंशतिस्थः शिखी केतु-

त्रयोविंशतिनाशकृत्। पंचधा केतवस्त्वेते महोग्रा ब्रह्मणः सुताः। अन्यशास्त्रोदित-संख्या न संग्रामे फलप्रदा। कवियुद्धे द्वंद्वयुद्धे चातुरंगे महाहवे। चिन्तनीयं प्रयत्नेन गणकैर्जयकांक्षिभिः।" इति चातुरंगकेतवः। अथ चतुर्दशांगगूढचक्रम् "शलाकासप्तकं चक्रं लिखेत्खस्थानतः सुधीः। चतुर्दशांगचक्रं च महागूढमिति स्मृतम्। दिनभात्क-ल्पयेदंगनामानि च चतुर्दश। आद्यः शूलं १ त्रयं ३ कीलं द्वयं लोलं द्वयं मतिः २। विजयी द्वे २ द्वे कुलाख्यं २ कूलं चैव द्वयं स्मृतम्। त्रयं पाली ३ मृतिस्त्रीणि ३ चोल्का द्वे २ द्वे विनाशकः। वज्रे द्वे २ तु हनुश्चैकं १ दंष्ट्राप्येकं १ मुदाहृतम्। यदंगे योधभं तिष्ठेद्युद्धकाले फलं वदेत्। अस्त्रं त्यजति शूले च कीले विजयमादिशेत्। शूरो धावति लोलस्थे मतिस्थो घातवंचकः। विजये विजयी योधः कूले चैव पलायनम्। क्रूरे हानी रणे घातात्पालिस्थे शत्रुसंयुतिः। मृतिस्थे मरणं याति चोल्कास्थे याति भंगताम्। विनाशे नाशमायाति वज्रेप्येवं फलं भवेत्। योधभे हनुदंष्ट्रास्थे योधः कालेन गृह्यते। शुभस्थानगतः शूरः शोभनैर्यदि वीक्ष्यते। तदा द्विगुणभावत्वे यदुक्तं शोभनं फलम्। पापैर्विद्धं भयं भंगं तद्दिनं वर्जयेद्बुधि। वक्रपापग्रहैर्विद्धं संग्रामे योधभं भवेत्। तदा द्वैधं मनः शूरः संग्रामाद्विनिवर्तयेत्। शुभस्थानगतो राहुर्गूढचक्रे विनश्यति। राहुऋक्ष-गतो योधा यदा भवति पंचमे। बलं त्यक्त्वा व्रजेद्राजा मन्त्री शस्त्रेण हन्यते। योधर्क्षा-द्दशमे भौमः स्वपक्षैर्हन्यते नृपः॥" योधशब्देन सर्वत्र नृप एव। योधशब्देन योधभं गृह्यते। इति प्रथमचतुर्दशांगम्॥०॥ "चतुर्दशांगचक्रेऽस्मिन् योधभादि लिखेद्बुधः। शूलस्थे वदने घातं नक्षत्रे पापसंयुते। कीलस्थे मस्तकेप्येवं लोले वामभुजांतरे। मतौ हस्ते वदेद्वामे विजये वामपादके। जयाख्ये कूलतो घातः कूले तु जठरे स्मृतम्। पालिका हृदि देशे तु मृतिस्थे स्कंधयोर्द्वयोः। उल्काख्ये भुजदेशे तु विनाशो दक्षिणे करे। वज्राख्ये दक्षजंघायां हनुदंष्ट्राख्यपादके। क्रूरस्थाने वदेद्घातं चन्द्रयोगे विशेषतः।" अथ घाते भूबलम्। "दक्षपृष्ठगताः पापा घातदा न भवंति हि। सम्मुखा वामभाग-स्था भवंति क्षतदायकाः। क्रूरास्तु दक्षिणे यस्य शोभना वामभागगाः। तदा शूरो भवेद्योधा विपरीतास्तु भंगदाः। ग्रहभुक्तसमं घातं द्विगुणं वक्रगे ग्रहे। क्रूरे चैव स्वरा-शिस्थे घातं चैवार्द्धकृद्भवेत्। मित्रग्रहे तु पादोने समे सर्वं प्ररुह्यति। क्रूरे तु शत्रुभे प्राप्ते द्विगुणच्छेदनं तनोः। स भवेदुच्चसंस्थस्तु यदि वक्रगति स्थितः। त्रिगुणं चतुर्गुणं छेदं करोतीह न संशयः। ऊर्ध्वदृष्टिग्रहे शत्रुरूर्द्ध्वहस्तेन घातयेत्। अधो दृष्टिरधो घातं तिर्यग्दृष्टिर्द्विपादयोः। विचिंत्य घातं कुर्वीत चन्द्रयोगे विशेषतः।" इति चतुर्दशांगघात-चक्रम्। "आर्द्रादौ तु मृगस्यांतं मध्यं मूले प्रतिष्ठितम्। भुजंगसदृशाकारं कालचक्रस्य निर्णये। रवीन्दुनामनक्षत्रमेकनाड्यां भवेद्यदि। तस्य कालं विजानीयादित्युक्तं ब्रह्म-यामले।" अथ राहुसंपातचक्रम्। "ऊर्ध्वरेखात्रयं कार्यं तिर्यग्रेखा तथा पुनः। कोणे चैकै-कं कार्यं शृङ्गयुग्मं कृतार्द्धके। ऊर्ध्वाधोमध्यरेखायां सा त्रिशूलसमावृता। अर्द्ध-चन्द्रसमा रेखा कृता रुद्राग्निकोणयोः। ऊर्ध्वशूलस्य मध्यस्थं राहुऋक्षादितः फलम्।

योधभं पतितं यत्र वक्ष्ये तस्य शुभाशुभत् । मृतिर्मोहो जयो लक्ष्मीः क्रमाद्राहोश्चतुष्टये । अग्निकोणार्द्धचन्द्रे तु शक्रं जयति संगरे । तदग्रे त्रितयं सौम्यं विजयो नैर्ऋति द्वये । तदग्रे चैकरेखायां सा सदा शुभदा स्मृता । अधः शूलत्रये मृत्युस्तदग्रे शुभसंततिः । बंधनं मरणं घातं यदुक्तं शूलकत्रये । क्रमादृक्षत्रयेप्येवं योधऋक्षगते सति । मारयति रणे राहुरीशानादिषु पंचके । राहुसंपातकं चक्रं संगोप्यं जयकांक्षिभिः" इति राहुसंपातचक्रे प्रथमो भेदः । यस्मिन् चक्रे द्वयं क्षेत्रं जीवं मृतकसंज्ञकम् । भोग्यं तत्र मृतं ज्ञेयं भुक्तं जीवं चतुर्दश । जीवपक्षगते चन्द्रे मृते भास्करसंयुते । कृता कामप्रदा यात्रा विपरीता भयप्रदा । चन्द्रार्कौ जीवपक्षस्थौ यात्रासिद्धिकरौ मतौ । विपरीतांगसंस्थौ तौ सर्वकार्येषु विघ्नदौ । कालानलमुखस्थौ च सर्वकार्येषु निंदितौ । विनाशकमिति ख्यातमृक्षं राहोश्चतुर्दशम् । जीवपक्षे महीशस्य यात्रा श्रेष्ठा प्रकीर्तिता । विपरीता समाख्याता संगरे भंगदा सदा । उदितस्वरवर्णा ये ते वै कार्याः पुरोगमाः । कुमाराः पार्श्वतो देया वृद्धा पृष्ठे नियोजिताः । कतिपयाः समरे भूपैः कर्तव्या जयकांक्षिभिः" । इति राहुसंपातद्वितीयो भेदः । "अस्मिन् चक्रे प्रवक्ष्यामि चक्रं विजयसंज्ञकम् । दिनर्क्षमाद्यरेखायामूर्द्ध्वशूलत्रये फलम् । योधभं जायते यत्र ज्ञेयं तत्र शुभाशुभम् । आद्ये मृत्युं १ द्वये हानिः २ जयं चैव चतुष्टये । द्वये शूरः परान्हंति विक्षतो विजयी त्रये । व्यापादकं द्वये नाम तत्रस्थं मृत्युदं स्मृतम् । कुशिकानामकाःपंच रणे पंचत्वदायकाः । भयं भंग रुजो हानिं तदग्रे ऋक्षकत्रयम् । रेखे द्वे रुद्रकोणे तु निष्फले परिकीर्तिते । द्वंद्वयुद्धे च युद्धे च नामके नामसंज्ञकम् । शुभस्थानगतो योधो विध्यते पापखेचरैः । क्षयमेति रणे भूतं सौम्यैः श्रेष्ठफलप्रदम् । विचार्यं कार्यतत्त्वज्ञैश्चक्रे विजयसंज्ञके ॥ ९ ॥ ॥ १० ॥ ११ ॥ इति तृतीयराहुसंपातचक्रम् ।

**॥ सूर्यकालानलचक्रम् ॥**




**अथ सूर्यकालानलम् । ऊर्ध्वगास्त्रिशूलाग्रास्तिस्रस्तिर्यक् च संस्थिताः ॥ द्वे द्वे नाड्यौ स्थिते कोणे शृंगयुग्मं तथैकया ॥ १ ॥ मध्ये त्रिशूलदंडाधो भानुभाद्यं भमंडलम् ॥ साभिजिच्च प्रदातव्यं सव्यमार्गेण सर्वदा ॥ २ ॥ नामऋक्षं स्थितं यत्र ज्ञेयं तत्र शुभाशुभम् ॥ अधो गतैस्त्रिनक्षत्रैरुद्वेगो वधबंधनम् ॥ ३ ॥**

कोणाष्टके जयो लाभः कुक्षिषट्के तथा पुनः ॥ शृंगयुग्मे रुजो भंगो मृत्युःशूलत्रये स्फुटम् ॥ ४ ॥ सूर्यभात्रिचतुःपंचरससप्ताष्टगोमिते ॥ गतगम्यर्क्षके लाभजयौ शेषे रुजो मृतिः ॥ ५ ॥ विवाहे विग्रहे युद्धे रोगार्ते गमने तथा ॥ सूर्यकालानलं चक्रं ज्ञातव्यंच प्रयत्नतः ॥६॥ रोगे च कुजनक्षत्रं दिनऋक्षं तु युद्धके ॥ प्रयाणे कृत्तिकालेख्यमन्यत्रार्कं प्रदीयते ॥ ७ ॥ इति सूर्यकालानलचक्रं समाप्तम् ॥

ऊर्ध्वगास्त्रिशूलाग्रेति । ॥ १ ॥ मध्यत्रिशूलदंडाध इति ॥ २ ॥ नामर्क्षकेति ॥ ३ ॥ कोणाष्टकेति ॥ ४ ॥ सूर्यभादिति ॥ ५ ॥ विवाहेति । ऊर्ध्वगतास्त्रिरेखाः कार्याः ॥ तथा रेखात्रयं तिर्यक्कार्यम् । ईशानाग्नेयनैर्ऋत्यवायव्येषु द्वे द्वे रेखे कार्ये । ऊर्ध्वरेखात्रयोपरि त्रिशूलं देयम् । शूलत्रयाधो रुद्राग्नेयकोणयोरर्द्धचन्द्रवद्रेखिकैका कार्या तदग्रे गोशृंगवत् शृङ्गयुगम् । एवं चक्रं निर्माय सूर्यभं मध्यदंडाधो निवेश्य प्राङ्मुखोपविष्टो वातादिकोणमारभ्य प्रदक्षिणं भानि लिखेत् । विवाहादिषु यत्र नक्षत्रं तत्फलं वदेत् । सूर्यभात्रिचतुःपञ्चादिसप्तके गतगम्ये च शुभं वदेत् । इतरेषु अशुभमित्यर्थः ॥ ६ ॥ ७ ॥ इति सूर्यकालानलम् ।

## ॥ चंद्रकालानलचक्रम् ॥



चंद्रकालानलं चक्रं व्योमाकारं लिखेत्ततः ॥ चतुर्दिक्षु त्रिशूलानि मध्यभिन्नानि कारयेत् ॥ १ ॥ पूर्वत्रिशूलमध्यस्थं दिनऋक्षादिलिख्यते ॥ त्रिशूले च बहिर्मध्ये मध्ये बहिस्त्रिशूलके ॥ २ ॥ नामऋक्षं स्थितं यत्र ज्ञेयं तत्र शुभाशुभम् ॥ त्रिशूले चक्रबाह्ये च चक्रमध्ये तथैव च ॥३॥ त्रिशूलेषु भवेन्मृत्युर्मध्यमं बहिरष्टिके ॥ लाभक्षेमौ जयः प्रज्ञा चंद्रगर्भे न संशयः ॥४॥ वर्जनीयं प्रयत्नेन

प्रथमाष्टत्रिपंचकम् ॥ ऋक्षं द्वाविंशकं चात्र कालरूपं न संशयः ॥५॥ दिनभाद्रुद्रे त्रयं शैलात्त्रितयं च चतुर्दशात् ॥ चंद्रकालानले काले एकविंशतितस्त्रये ॥ ६ ॥ लाभालाभं सुखं दुःखं जयं चैव पराजयः ॥ चंद्रकालानले चक्रे ज्ञानं संशयवर्जितम् ॥ ७ ॥ चंद्राष्टके जयो लाभो मध्यशूर्पाष्टके मतः ॥ राह्वष्टके भवेद्व्याधिर्मृत्युः केतुचतुष्टये ॥ ८ ॥ इति चंद्रकालानलम् ॥

अथ चंद्रकालानलचक्रम् । चंद्रकालानलेति ॥ १ ॥ पूर्वत्रिशूलमध्यस्थेति ॥ २ ॥ ३॥ त्रिशूलेषु भवेन्मृत्युरिति ॥ ४ ॥ वर्जनीयमिति ॥ ५ ॥ दिनभादिति ॥ ६ ॥ मध्यभिन्नानीति । पूर्वपश्चाद्याम्योत्तररेखाभ्यां चंद्रस्य मध्यं भिन्नं भवति । बाह्यमध्यनक्षत्रलिखनार्थत्वात् मध्यायुग्म इति । पूर्वत्रिशूलमध्यात् युग्मे शृङ्गयुग्मे नक्षत्रद्वयम् २ तदधो बाह्यम् एकम् १ तदधश्चन्द्रोदरे एकम् १ पुनर्दक्षिणरेखासमीपमध्ये एकनक्षत्रं देयम् । तदुपरि बाह्ये चन्द्रपरिधावेकम् । एवं त्रिशूलत्रय एकैकम् एवं क्रमेण बहिर्मध्ये ततो मध्ये बाह्ये शूलत्रये क्रमादिति चक्रोद्धारः । इति चंद्रकालानलम् ॥ ७ ॥ ८ ॥

अथ घोरकालानलम् ॥ शलाकासप्तकं चक्रं लिखित्वा चंद्रभादितः ॥ त्रिषुत्रिषु च ऋक्षेषु नव सूर्यादयो ग्रहाः ॥ १ ॥ यदंगे नामनक्षत्रं दिनऋक्षादि जायते ॥ फलं तस्य प्रवक्ष्यामि एकैकस्य यथाक्रमम् ॥ २ ॥ भानुना शोकसंतापौ शशांकः क्षेमलाभदः ॥ भूसुतो मृत्युमाधत्ते बुधे प्रज्ञा प्रजायते ॥ ३ ॥ जीवे लाभः शुभं शुक्रे सूर्यपुत्रे महद्भयम् ॥ राहुणा घातपातं च केतौ मृत्युर्न संशयः ॥ ४ ॥ यात्राजन्मविवाहेषु संग्रामे विग्रहेपि

॥ घोरकालानलचक्रम् ॥



वा ॥ घोरकालानलं चक्रं ज्ञात्वा कर्म समारभेत् ॥ ५ ॥ इति घोरकालानलम् ॥

अथ घोरकालानलम् । शलाकासप्तकमिति ॥ १ ॥ यदंगेति ॥ २ ॥ भानुनेति ॥ ॥ ३ ॥ ४ ॥ ५ ॥ इति घोरकालानलम् ।

॥ सप्तशलाकाचक्रम् ॥




अथ सप्तशलाकाचक्रम् ॥ तिर्यगूर्ध्व-गता रेखाः सप्तसंख्या लिखेद्बुधः ॥ कृत्तिकादीनि भान्यत्र साभिजिंति क्रमेण च ॥ १ ॥ भुक्तं क्रांतं तथा भोग्यं विद्धं क्रूरग्रहेण भम् ॥ शुभाशुभेषु कार्येषु वर्जनीयं प्रयत्नतः ॥ २ ॥ यस्माभिधा-ननक्षत्रं विद्धं क्रूरग्रहेण च ॥ देशो ग्रामः पुरं सैन्यं नरो नारी विनश्यति ॥ ३ ॥ इति सप्तशलाकाचक्रम् ॥

अथ सप्तशलाकाचक्रम् । तिर्यगूर्ध्वगता रेखा इति ॥ १ ॥ २ ॥ ३ ॥ इति सप्तश-लाकाचक्रम् ।

अथ पंचशलाका तिर्यगर्ध्वगताः ॥ पंचशलाकाचक्रम् ॥




पंच द्वेद्वे रेखे व कोणगे ॥ ईशकोणाग्र-रेखातः कृत्तिकादि लिखेद्बुधः ॥ १ ॥ विशाखाकृत्तिकावेधो भरणीमित्रदेवयोः ॥ धनिष्ठा सार्पयोर्वेधो मघाश्रवणयोस्तथा ॥२॥ शुभाशुभग्रहैर्विद्धं भं विवाहे विवर्ज-येत् ॥ द्व्यादिविद्धं महादुष्टं राहुविद्धं तथैव च ॥३॥ इति पंचशलाकाचक्रम् ॥

अथ पंचशलाका । तिर्यगूर्ध्वगताः पञ्चेति ॥ १ ॥ २ ॥ ३ ॥ इति पञ्चशलाका ॥

अथ वक्रचंद्रचक्रम् ॥ वक्रेंदुसदृशं चक्रं त्रिशूलसमन्वितम् ॥ मध्ये द्वादशभान्यत्र षट् पृष्ठे नव शूलके ॥ १ ॥ मध्यशूलस्य मध्यस्थं शशभृदृक्षमादितः ॥ सव्येन गणयेच्चक्रं यावद्योधस्य नामभम् ॥ २ ॥ शृंगे मृत्युर्जयो मध्ये पृष्ठे भंगो महाहवे ॥ चातुरंगे कवौ कोटे द्वंद्वयुद्धे विशेषतः ॥ ३ ॥ इति स्वरोदये वक्रचंद्रचक्रम् ॥

॥ वक्रचंद्रचक्रम् ॥




अथ वक्रचंद्रचक्रम् । वक्रेंदुसदृशेति ॥ १ ॥ २ ॥ ३ ॥

अथ चतुरंगसूर्यचक्रम् ॥ रेखात्रयं त्रिशूलाग्रं तिर्यग्रेखाषडन्वितम् ॥ एकैककोणगास्तत्र मध्यादौ भानुभादितः ॥ १ ॥ अधस्त्रिके भवेन्मृत्युश्चतुर्भिः कोणगैः शुभम् ॥ मध्यमा द्वादशा प्रोक्ता नवक्ष भंगकारकम् ॥ २ ॥ इति चतुरंगसूर्यचक्रम् ॥

अथ चतुरंगसूर्यचक्रम् । रेखात्रयमिति ॥ १ ॥ २ ॥ इति चतुरंगसूर्यचक्रम् ।

## ॥ मातृकाचक्रम् ॥

| १५ | १४ | १३ | १२ | ११ | १० | ९ | ८ | ७ | ६ | ५ | ४ | ३ | २ | १ |
|---|---|---|---|---|---|---|---|---|---|---|---|---|---|---|
| अ | आ | इ | ई | उ | ऊ | ऋ | ॠ | ऌ | ॡ | ए | ऐ | ओ | औ | अं |
| क | ख | ग | घ | च | छ | ज | झ | ट | ठ | ड | ढ | त | थ | द |
| ध | न | प | फ | ब | भ | म | य | र | ल | व | श | ष | स | ह |

अथ प्रथममातृकाचक्रम् ॥ षोडशोर्ध्वगता रेखाः पंचरेखाश्च तिर्यगाः ॥ कोष्ठकानां भवेत्षष्टिस्तत्रांकाक्षरयोजना ॥ १ ॥ पूर्णिमादिविलोमांकान् लिखेत्प्रतिपदांतकान् ॥ तदधो मतृकान्

लिख्य ङञणांतस्वरोज्झितान् ॥ २ ॥ योधयोर्नामवर्णांकान् मात्राभेदेन संयुतान् ॥ मुनिभिस्तु हरेद्भागं शेषाज्ज्ञेयं बलाबलम् ॥ ३ ॥ मातृहीने भवेद्भंगो जयो मात्राधिके रणे ॥ मातृकायाः प्रभेदोयं तस्माज्ज्ञेयः प्रयत्नतः ॥ ४ ॥ इति प्रथममातृकाचक्रम् ॥ द्वादशोर्ध्वगता रेखाः पंच रेखाश्च तिर्यगाः ॥ मातृकां प्रस्तरेत्तत्र षडांत्यस्वरवर्जितान् ॥ १ ॥ कोष्ठकाधो लिखेदंकान् पंचयुग्मं त्रिकंत्रिकम् ॥ षट्द्वंद्वमष्टकं त्रीणि नवकैकं तथैव च ॥ ॥२॥ नामवर्णस्य या संख्या मात्रासंख्या तथैव च ॥ पिंडिता नवभिर्भक्ता जयो मात्राधिके रणे ॥३॥ इति द्वितीयमातृकास्वरचक्रम्॥

## ॥ द्वितीयमातृकाचक्रम् ॥

| अ | आ | इ | ई | उ | ऊ | ए | ऐ | ओ | औ | अं |
|---|---|---|---|---|---|---|---|---|---|---|
| क | ख | ग | घ | ङ | च | छ | ज | झ | ञ | ट |
| ठ | ड | ढ | ण | त | थ | द | ध | न | प | फ |
| ब | भ | म | य | र | ल | व | श | ष | स | ह |
| ५ | ५ | ३ | ३ | ३ | ६ | ६ | ८ | ८ | ८ | ९ |

अथ समरविजये मातृकाचक्रम् । षोडशोर्ध्वगतेति । अत्र षष्टिकोष्ठकेषु आकारादयोंतिमवर्जिता लेख्याः । तथाच कचटवर्गांतिमवर्जिताः ककारादयो लेख्याः ॥ १ ॥ तत्राधः पूर्णमासीचतुर्दशीव्युत्क्रमेण तिथयो लेख्याः प्रथममातृकाचक्रन्यासः ॥ २ ॥ इति प्रथममातृकाबलाबलम् । यथा देवदत्तयज्ञदत्तयोः देवदत्त एअअएवं योगे ६० सप्तशेषे ४ अथ यज्ञदत्ते । यज्ञदत्ते अ एषां योगे जातम् ८१ सप्तशेषे ४ एतावता द्वयोः समैव मात्रासंधिर्ज्जयपराजयौ तुल्यमेव ॥ ३ ॥ ४ ॥ इति द्वितीयमातृकाचक्रम् ।

## ॥ तृतीयमातृकाचक्रम् ॥

| १४ | १२ | २ | ५ | १५ | ७ | ६ | १० | ८ |
|---|---|---|---|---|---|---|---|---|
| अ | इ | उ | ए | ओ | क | ख | ग | घ |
| च | छ | ज | झ | ट | ठ | ड | ढ | त |
| थ | द | ध | न | प | फ | ब | भ | म |
| य | र | ल | व | श | ष | स | ह | क्ष |

अथ तृतीयमातृकास्वरचक्रम् ॥ मनुमार्तंडदोर्बाणतिथ्यश्वरसदिग्गजाः ॥ नवांतास्तदधः स्थाप्याः पंचस्वरकखादितः॥१॥ ङञणोनाहकारांतान् नवधा

कोष्ठकक्रमैः ॥ नाममात्राक्षरांकैक्यं सप्तशेषाधिके जयः ॥ २ ॥ इति तृतीयमातृकाचक्रम् ॥

## ॥ चतुर्थ मातृकाचक्रम् ॥

| १४ | १२ | २ | ५ | १५ | ४ | ७ | १० | ६ | ८ | ९ |
|---|---|---|---|---|---|---|---|---|---|---|
| अ | आ | इ | ई | उ | ऊ | ए | ऐ | ओ | औ | अं |
| क | ख | ग | घ | ङ | च | छ | ज | झ | ञ | ट |
| ठ | ड | ढ | ण | त | थ | द | ध | न | प | फ |
| ब | भ | म | य | र | ल | व | श | ष | स | ह |

अथ चतुर्थमातृकाचक्रम् ॥ भुवनादित्यदोर्बाणतिथिवेदाश्वदिक् १० रसान् ॥ वसुनंदादिकान् लिख्य षडांत्योज्झितमातृकान् ॥ १ ॥ पुंनामर्णमात्राणां स्वांकयोगेष्टशेषिते ॥ मात्राधिको जयी युद्धे मात्राहीनः पराजयी ॥ २ ॥ इति चतुर्थमातृकाचक्रम् ॥

द्वादशेति । ऊर्ध्वगता द्वादश रेखाः कार्याः तथा तिर्यक् षट् एवं पंचपंचाशत्कोष्ठा भवंति तत्र स्वरान् अन्तिमवर्जितान् लिखेत् । कादीन् सर्ववर्णान् ॥ १ ॥ कोष्ठकेति कोष्ठाधोंकान् लिखेदंकान् तानंकान् । "पंचेंद्रियाग्निरामाग्निषट्ऋत्वह्निगजाहयः । न द्विमातृकाचक्रे लिखेदंकान् क्रमादमून्" ॥ २ ॥ नामवर्णेति । उभयो राज्ञोर्योधयोर्वा ना वर्णमात्रासंख्या अधःस्थितांकैः पृथक् कार्या । पूर्ववत् । यथा देवदत्तस्य दे ६ व ६ द त ३ ए ६ अ १५ एवं ४२ नवशेषे ६ । यज्ञदत्तस्य य ३ ज्ञ ८ द ६ त ३ अ २० एवं ४ नवशेषे ४ एतावता देवदत्तात् यज्ञदत्तस्य पराजयः ॥ ३ ॥ एवं द्वितीयमातृकाचक्रम् अथ तृतीयमातृकाचक्रम् । मनुमार्त्तंडेति ॥ १ ॥ ङञणेति २ इति नरपतिजयचर्यास्वरोदये तृतीयमातृकाचक्रम् ॥ १ ॥ २ ॥ इति चतुर्थमातृकाचक्रम् ॥

अथ आयचक्रम् ॥ आयचक्रे द्वादशोर्ध्वा रेखाः षट् तिर्यगा-

## ॥ आयचक्रम् ॥

| १४ | २७ | २ | १२ | १५ | ६ | ४ | ३ | १७ | ८ | ९ |
|---|---|---|---|---|---|---|---|---|---|---|
| अ | आ | इ | ई | उ | ऊ | ए | ऐ | ओ | औ | अ |
| क | ख | ग | घ | ङ | च | छ | ढ | झ | ञ | ट |
| ठ | ड | ढ | ण | त | थ | द | ध | न | प | फ |
| व | भ | म | य | र | ल | व | श | ष | स | ह |

श्रिताः ॥ मनु १४ नक्षत्र २७ दस्रा २ र्क १२ तिथि १५ षट् ६ सागरा ४ त्रयः ३॥१॥ अथ सप्तदशाष्टौ च रंध्रांतं विलिखेत्क्रमात् ॥ ततः स्वरानषंढांश्च वर्णांश्च ङञणोज्झितान् ॥२॥ अत्राक्षराधःस्थैः स्वैस्वैरंकैः संकलितं भवेत् ॥ वसुभिर्भाजिते शेषे आया ध्वजमुखादयः ॥ ३ ॥ ध्वजो धूम्रोथ सिंहः श्वा सौरभेयः खरो गजः ॥ ध्वांक्षश्चैते क्रमेणैव आयाष्टकमुदाहृतम् ॥ ४ ॥ काकाद्बली श्वा च भवेत्सारमेयाच्च रासभः ॥ बलवान् रासभादुक्षा वृषभादपि कुंजरः ॥ ५ ॥ कुंजरादपि पंचास्यः सिंहादपि बली ध्वजः ॥ ध्वजादपि बली धूम्रस्तथा जातिविशेषतः ॥ ६ ॥ भागहारेण शून्यत्वादष्टमः परिगृह्यते ॥ एकाद्यैः शेषभूतांकैर्ध्वजाद्याश्चायचक्रमात् ॥ ७ ॥

अथ समरविजयतंत्रे। आयचक्रेति ॥ १ ॥ २ ॥ यथा देवदत्तयज्ञदत्तयोर्विजयपराजये। [देव]दत्तनामांकसंख्या एकोनपञ्चाशत् ४९ यज्ञदत्तनामांकसंख्या ८४ चतुरशीतिः। उभ[यसंख्या] [वस]ुभाजिते शेषे देवदत्तस्यैकं शेषं यज्ञदत्तस्य चत्वारि ४ देवदत्तस्यायो ध्वजः। यज्ञदत्त[स्य]ायः श्वा ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥

आयचक्रमिदं प्रोक्तं यत्सुरैरपि दुर्लभम् ॥ अत्र नामाक्षरादीनां युक्तिरन्या प्रदर्श्यते ॥ ८ ॥ जयाजयपरीक्षायां स्वरोदयपरिश्रितात् ॥ षोडशाक्षरवर्गः स्यात्कादयः पंच वर्णकाः ॥ ९ ॥ चतुश्चतुष्कवर्णौ च यशौ वर्गाः प्रकीर्तिताः ॥ नाम्नि वर्णास्स्वरास्तत्संख्या वर्गवर्णवशाच्च सा १० ॥ इति आयचक्रम् ॥

व्याख्या। योधस्य नाम्नि ये वर्णाः तेषां संख्या एकत्र कार्या कथं कार्या तत्राह। [वर्ग]वर्णवशात् ॥ वर्गाणां यावत्संख्यावर्णः तत्संख्या नाम्नि पृथक् ग्राह्या वर्णानां संख्या [ए]कत्र कार्या तथा नाम्नि ये मात्रास्वरास्तेषां स्वरवर्गाक्षरसंख्या पृथक् ग्राह्या स्वरसंख्या [द्वि]गुणा। वर्णसंख्या चतुर्गुणा तयोः संख्यांकसंयोगं कृत्वा भागं हरेत् ततः "सुप्त[...]र्योर्विशेषांकस्तेनारेरात्मनस्तथा। बलाबलं विचार्यं स्याद्युद्धावसरवेदिभिः" ॥ तथा उदाहरणम्। देवदत्तस्य दकारस्य त्रि ३ संख्या वकारस्य चत्वारः ४ द्वितीयदकार

स्यापि त्रिसंख्या ३ तकारस्यैकं १ वर्णानामेकादश ११ संख्या जाता । अथ स्वर संख्या । एकारस्यैकादश संख्या ११ यतः षोडशाक्षरवर्गः । एवं दत्त एषां मा स्वरोऽकारः । तेषां संख्या तिस्रः एवं मात्रास्वरसंख्या जाता चतुर्दश १४ मात्रासंख्या द्विगु २८ वर्णसंख्या चतुर्गुणा जाता ४४ तयोः संयोगे जात संख्या द्विसप्ततिः ७२ ॥ अथ य दत्तस्य यकारस्यैका संख्या १ गकारस्य त्रि ३ संख्या यकारस्यैका १ दस्य त्रिसंख्या तकारस्यैका १ एवं वर्णसंख्या एकत्र नव ९ तथा यज्ञदत्तनाम्नि वर्णस्वराश्चत्वारोऽका स्वरसंया चत्वारः ४ पृथक् स्वरसंख्या द्विगुणा ८ वर्णस्वरसंख्या चतुर्गुणा ३६ एवं प त्रिंशत् तद्योगे चतुश्चत्वारिंशत् ॥ ४४ द्वयोः सप्तभिस्तष्टे शेषांकौ २ उभयोः शेषं द्वि गतं २ तत्र बलाबलम् । "साम्येन संधिराधिक्ये तयोर्हीनतया वधः ।" इदं बलाबला अथात्रैव पुनर्विशेषमाह । "किंचिच्छेषेत्र विषमे समे वापि पृथक् भवेत् । विषमे वि न्यूनमाधिक्येऽपि समे परे ।" यदि द्वयोः सप्तशेषिते सति द्वयं विषमांकमेवावशिष्यते यस्याधिकं स जयी भवति । द्वयोः समांकेऽवशेषिते सति यस्य हीनांकः स जयी भवति अथ पुनर्विशेषमाह । "यथा शेषेत्र संख्याके चतुर्भिः शेषिते सति । विषमे हीनके समाहीने जयो भवेत् । ओजे समेऽधिके शेषेजय हानी पृथक् तयोः" योधयोराज्ञोर्विषमे जयः । समेधिके हानिः । "एतच्चक्रवरं प्रोक्तं सद्यः प्रत्ययकारकम्" ॥ ८ ॥ ९ ॥ १० इति समरविजये आयचक्रम् ।

अथ सारतरं वक्ष्ये लंपटाचार्यभाषितम् ॥ जयपराजयौ येन नामोच्चारणतः स्फुटौ ॥१॥ लघ्वालघ्वविभेदेन घोषाघोषक्रमेण च ॥ प्रवेशानिर्गमाभ्यां च क्रमाज्जयपराजयौ ॥ २ ॥ पवर्गश्चाप्युकारश्च लघ्वाख्यानक्षरान्विदुः ॥ उक्तवर्णान्यवर्णाः स्युरलघ्वाः परिकीर्तिताः ॥३॥ वर्गे त्रिचतुरा घोषाः पंचमाश्च स्वरास्तथा ॥ आद्या द्वितीया वर्णानामघोषाः शषसैः सह ॥ ४ ॥ वायुप्रवेशकालः स्यात् प्रवेशः श्वासनिर्गमः॥ निर्गमाख्यस्ततो ज्ञेयो नामोच्चारणतो जयः ॥५॥ इति स्वरोदये विजयचक्रम् ॥

अथ सारतरमिति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ इति विजयचक्रम् ।

॥ तोरणचक्रम् ॥




अथ तोरणचक्रम् ॥ नाडीचतुष्टयं चक्र लिखित्वा तोरणाकृति ॥ कृत्तिकादि न्यसेद्भानि प्रवेशे निर्गमे तथा ॥ १ ॥ स्तंभमूले स्थितान्यष्टौ सिंहद्वारे तथाष्टकम् ॥ मालायामष्टकं तत्र चतुर्धिष्ण्यानि तोरणे ॥ २ ॥ निर्गमे च यदा चंद्रः प्रवेशे यदि भास्करः ॥ तत्र काले शुभा यात्रा प्रवेशे विघ्नकारिका ॥ ३ ॥ चंद्रः प्रवेशऋक्षस्थो निर्गमस्थो दिवाकरः ॥ बंधबंधनदा यात्रा प्रवेशे तत्र शोभना ॥ ४ ॥ चंद्रादित्यौ प्रवेशर्क्षे ह्यथवा निर्गमस्थितौ ॥ मिश्रं फलं भवेत्तत्र प्रवेशे वाथ निर्गमे ॥ ५ ॥ प्रवेशर्क्षाह्नि कर्तव्या भूभृतां राजपट्टिका ॥ क्रूरग्रहयुतश्चंद्रः प्रवेशे चाथ निर्गमे ॥६॥ तद्दिने भूभुजां चैव निषिद्धा राजपट्टिका ॥ शुभग्रहयुते चंद्रे सिंहद्वारभसंस्थिते ॥ प्रवेशः पट्टबंधश्च भूभुजां शोभनः स्मृतः ॥७॥ स्तंभे सौरिर्नृपं हन्ति सिंहे स्वपरविग्रहः ॥ मालास्थिते चलं राज्यं तोरणे सर्वसिद्धयः ॥ ८ ॥ इति तोरणचक्रम् ॥

नाडीचतुष्टयमिति । राजद्वारं प्राङ्मुखं वामभागे नाडीचतुष्टयम् । दक्षिणभागे नाडीचतुष्टयम् अष्टनाडीभिरष्टौ स्तंभाः । प्रवेशे निर्गमे वाष्टौ स्तंभा ये स्तंभाः । प्रवेशे वामभागस्थाश्चत्वारः । दक्षिणभागस्थाश्चत्वारः । ते निर्गमे विपरीतस्थाः तत्र वामे चतुर्षु स्तंभमूलादुपरि चतुर्षु दक्षिणभागस्तंभमूलात् कृत्तिकाद्यष्टाविंशतितारकाः स्तंभमूलादुपर्युपरि प्रवेशनिर्गमानि लिखेत् । कृ. रो. मृ, आर्द्रा स्तंभमूले । तदुपरि सिंहद्वारि चत्वारि निर्गमाख्यानि पु० आ० म० तथात्र । "स्तंभमूलेषु चत्वारि प्रवेशाख्यानि वह्निभात् । मालायां निर्गमाते चत्वार्यदितिभान्न्यसेत् । भाग्यात् प्रवेशे चत्वारि मालायां विन्यसेद्बुधः । मारुताणे तद्वन्निर्गमाख्यानि विन्यसेत् । दक्षस्तंभेषु मालायां प्रवेशाख्यानि मूलतः । वैष्णवमे सिंहस्तंभमूलात् प्रवेशतः ।" यानि अष्टौ सिंहद्वाराख्यानि तानि तासां चत्वारि निर्गमाख्यानि चत्वारि प्रवेशाख्यानि मालायामष्टौ । तत्र राजगृहे सिंहद्वारोपरि माला-

निर्बध्यते पुष्पमयी आम्रपल्लवमयी वा। उपरि च तोरणेनालंक्रियते ॥ १ ॥ २ ॥
फलम् । निर्गमेति ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ इति नरपतिजयचर्याटीका
जयलक्ष्म्यां तोरणचक्रम् ।

अथ शशिसूर्यकालानलचक्रम् ॥

॥ शशिसूर्यकालानलचक्रम् ॥




द्वादशारं लिखेच्चक्रं मेषादिद्वादशान्वितम् ॥ क्षेत्रयुग्मं च तत्रैव ज्ञेयं भास्करचंद्रयोः ॥ १ ॥ सिंहादि मकरांतं च भानुक्षेत्रमुदाहृतम् ॥ कुंभादिकर्कपर्यंतं चंद्रक्षेत्रं न संशयः ॥ २ ॥ याम्योपरि स्थितं यत्तु भानुक्षेत्रमुदाहृम् ॥ पूर्वोत्तरस्थितं यत्तु चंद्रक्षेत्रं विनिर्दिशेत् ॥३॥ चंद्रक्षेत्रगते सूर्ये चंद्रे तत्रैव संस्थिते यायिनो विजयो युद्धे स्थायिनो भंगमादिशेत् ॥ ४ ॥ सूर्यक्षेत्रग चंद्रे सूर्ये तत्रैव संस्थिते ॥ यायी भंगं समायाति स्थायिनो विजय भवेत् ॥ ५ ॥ सूर्ये सूर्यांगसंयुक्ते चंद्रे चंद्रांगसंस्थिते ॥ तदा का भवेत्संधिर्युद्धं तस्य विपर्यये ॥ ६ ॥ व्यस्तगौ यदि चंद्रार्कौ संहा सैन्ययोर्द्वयोः ॥ कर्त्तर्यां यदि चंद्रार्कौ संहारः सैन्ययोर्द्वयोः ॥ यात्रा युद्धकाले च चक्रमेतद्विलोकयेत् ॥७॥ इति शशिसूर्यकालानलचक्रम्

अथ शशिसूर्यकालानलचक्रमाह । द्वादशारमिति ॥ १ ॥ सिंहादीति ॥
याम्येति ॥ ३ ॥ चंद्रक्षेत्रगतेति ॥ ४ ॥ सूर्यक्षेत्रगतेति । दक्षिणपश्चिमदिक्स्थ
यायिस्थायिनोः सूर्यक्षेत्रस्थयोरपि सूर्याचंद्रमसोः विशेषाद्भंगजयौ ॥ ५ ॥ सूर्ये
इति । यदि रविश्चंद्रगृहस्थो भवति चंद्रदिक्क्षेत्रस्थौ द्वौ । एवं चंद्ररविग्रहौ दि
नावपि तदा महद्युद्धं भवतीति विपर्ययार्थः ॥ ६ ॥ विपर्ययार्थमेव फलति । व्यस्
इति । "इंदौ तमोंगारकमध्यसंस्थे चंद्रेण चेत्कर्तरिकारकौ तु। अन्योन्यमध्ये शनि
मध्ये शौरिस्तयोस्तौ बलनाशनाय" ॥ ७ ॥ इति जयलक्ष्म्यां शशिसूर्यकालव्याख्या

अथ संघट्टचक्रम् ॥ अश्विन्यादि लिखेच्चक्रं सप्तविंशतितारकाः ॥ त्रिकोणं नवभिर्वेधः कर्तव्यस्तिर्यगाकृतिः ॥ १ ॥ अश्विनीरेवतीवेधो वेधश्चाश्विनिज्येष्ठयोः ॥ मघापौष्ण्ये मघाश्लेषा आश्लेषामूलयोस्तथा ॥ २ ॥ एवं संघट्टचक्रेऽस्मिन् कार्या ऋक्षगता ग्रहाः ॥

॥ संघट्टचक्रम् ॥




भूपनामर्क्षसंघट्टे युद्धं भवति नान्यथा ॥ ३ ॥ यस्य भूपर्क्षसंघट्टे विद्धं भं यस्य भूपतेः ॥ तस्यापि भं यदा विद्धं तत्तद्युद्धं समादिशेत् ॥ ४ ॥ अश्विन्यादिकसंघट्टे भावि युद्धं समादिशेत् ॥ यदा कुत्रेति संग्रामो वह्निभाये प्रजायते ॥ ५ ॥ निर्वेधे सौम्यवेधे च युद्धं नास्ति नरेशयोः ॥ क्रूरवेधे भवेद्युद्धं तत्काले घोरदारुणम् ॥ ॥६॥ शनिभौमार्कपातानां शशिविद्धं तु यद्दिने ॥ तद्दिने जायते युद्धं तत्काले घोरदारुणम् ॥७॥ ग्रहवेधयुते पाते पातोपग्रहसंयुते ॥ घातपातसमायोगे संग्रामं दारुणं भवेत् ॥ ८ ॥ युद्धकांक्षी भवेद्राजा यस्य क्रूरसमं भवेत् ॥ युद्धद्वेषी भवेत्सौम्यैस्तद्वद्द्वेषविवर्जितः ॥९॥ सौम्य क्रूरविभागेन मित्रामित्रक्रमेण च ॥ वक्रातिचारगत्या च युद्धमत्रास्ति नास्ति च ॥ १० ॥ आदित्यश्च यदा चंद्र एकरेखागतो यदि ॥ तद्दिने जायते युद्धं महाशस्त्रनिपीडनम् ॥ ११ ॥ कुजराह्वोर्यदा वेधश्चंद्ररेखाग्रसंस्थितः ॥ तद्दिने चाग्निपातश्च लोहपातो न संशयः ॥ १२ ॥ बुधशुक्रौ यदैकत्र तत्र चेत्संगतः शशी ॥ तदा वृष्टिं विजानीयाद्विद्युत्पातं न संशयः ॥ १३ ॥ इन्द्वर्कशनिराहूणामेकनाडी यदा भवेत् ॥ तद्दिने दुर्दिनं ज्ञेयमभ्रच्छन्नं न संशयः ॥ १४ ॥ राह्वर्ककुजसो-

माश्च नाडीवेधगता यदि ॥ कलहं तत्र जानीयादित्युक्तं चादि-
यामले ॥ १५ ॥ इति संघट्टचक्रम् ॥

अथ त्रिकोणसंघट्टमाह ॥ ० ॥ अश्विन्यादिलिखेच्चक्रमिति ॥ १ ॥ अथ वेधमाह । अश्वि-
नीरेवतीवेध इति ॥ २ ॥ एवं संघट्टेति ॥ ३ ॥भूपनामर्क्षसंघट्टेति । "यस्य भूपर्क्षसंघट्टे वि-
भं यस्य भूपतेः । तस्यापि भं यदा विद्धं तद्युद्धं समादिशेत्" । अश्विन्यादिसंघट्टे
समरारूढयोर्यदि नक्षत्रं क्रूरविद्धं भवति तदा युद्धमादेश्यम् । भूपनामर्क्षसंघट्टस्यैवं विचारः
यस्य राज्ञो नक्षत्रं पापविद्धं भवति तस्यापि यदि संपातयुद्धं स्यात् । तदा तेनैव सह यु-
जायते । "दृष्टिवेधं विनाप्यत्र न यथा विश्वदीपके ।" यथा सर्वतोभद्रे ग्रहदृष्टिं वि-
वेधफलं न भवति तथात्रापि क्रूरग्रहकारकस्यापि यदि वेदभेन दृष्टिस्तदा युद्धं न स्यात्
येन नक्षत्रेण यो राशिस्तद्दृष्टे राशिदृष्टवेधेन नक्षत्रमपि दृष्टं स्यात् । "क्रूरवेधे दृष्टिवेधे यु-
स्यादतिदारुणम् ।" नक्षत्रे दृष्टिवेधस्तु सर्वतोभद्रे ० यतःसर्वतोभद्र मपि चक्रं युद्धस्य मूर्ति-
भूतांगम् ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ युद्धकांक्षी भवेद्राजेति । सौम्यग्रहाः शुक्रबुधगुरुपूर्ण-
चंद्राः शुभास्तैर्विद्धं यन्नक्षत्रं स युद्धद्वेषी भवति युद्धाद्विमुखो भवति । तथा वेधविवर्जि-
तोपि ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ इति जयलक्ष्म्यां टीका-
संघट्टव्याख्यानम् ।

## ॥ गूढकालानलचक्रम् ॥




सतरे खा लिखेदूर्ध्वाः सत तिर्यक् तदा लि-
खेत् ॥ साभिजिच्चंद्र-
भाद्यंतं षडंगं कल्प-
येत्ततः ॥ १ ॥ दि-
नर्क्षाद्गण्यते चक्रं गूढं
संपुटकर्तरि ॥ दंडं
कपालं वज्रं च ज्ञात-
व्यं स्वरवेदिभिः ॥२॥
यस्मिन्नृक्षे स्थित-
श्चंद्रस्तत्रादौ त्रीणि
गूढकम् ॥ संपुटे नव
भान्यत्र कर्तरी च ततस्त्रिभिः ॥ ३ ॥ दंडे धिष्ण्यानि च त्रीणि

कपाले ऋक्षसप्तकम् ॥ वज्रांगे त्रीणि धिष्ण्यानि षडंगस्येति निर्णयः ॥ ४ ॥ यदंगे नामनक्षत्रं योधकारस्य जायते ॥ वक्ष्ये शुभाशुभं चास्य गूढकालानले स्थितम् ॥ ५ ॥ गूढस्थे विभ्रमो युद्धे जयो भवति संपुटे ॥ कर्तर्यां सक्षतं युद्धं दंडे भंगो न संशयः ॥ ६ ॥ कपालस्थे भवेन्मृत्युर्वज्रे तस्य महद्भयम् ॥ गूढकालानलं चक्रयुक्तं वै चादियामले ॥ ७ ॥ इति गूढकालानलचक्रम् ॥

अथ गूढकालानलमाह । सप्त रेखा लिखेदेति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ७ ॥ इति गूढकालानलम् ।

अथ कुलाकुलचक्रम् ॥ द्वितीया दशमी षष्ठी कुलाकुलमुदाहृतम् ॥ विषमा अकुलाः सर्वाः शेषाश्च तिथयः कुलाः ॥ १ ॥ रविचंद्रौ गुरुः सौरिश्चत्वारो ह्यकुला मताः ॥ भौमशुक्रौ कुलाख्यौ च बुधवारः कुलाकुलः ॥ २ ॥ वारुणार्द्राभिजिन्मूलं कुलाकुलमुदीरितम् ॥ कुलानि समधिष्ण्यानि शेषभान्यकुलानि तु ॥ ३ ॥ तिथौ वारे च नक्षत्रे अकुले यायिनो जयः ॥ कुलाख्ये स्थायिनो ज्ञेयः संधिश्चैव कुलाकुले ॥ ४ ॥ इति कुलाकुलचक्रम् ॥

॥ कुलाकुलचक्रम् ॥

| कुलाकुलं | अकुलगण | कुलगण |
|---|---|---|
| २ १० ६ | १३ . ५ ७ ९ ११ १५ | ४ ८ १४ १२ |
| बु | र चं बृ श | मं शु |
| आर्द्राशत भिष मूल अभिजित् | भ रो पु श्ले उ ह स्वा अ उ ध उ रे | चि वि ज्ये पू श्र पू अ कृ मृ पू म पु |

अथ कुलाकुलचक्रम् । द्वितीया दशमी षष्ठीति ॥ १ ॥ रविचंद्राविति ॥ २ ॥ वारुणार्द्रेति ॥ ३ ॥ तिथौ वारे च नक्षत्रेति । २ । १० । ६ । श. आ. अभिजित् । मू. बुध. । १ । ३ । ५ । ७ । ९ । ११ । १३ । १५ । र. चं. श. कृ. मृ. पु. आ. श्ले, पूफा. ह. स्वा. मू. उ. पू. रे. ४ । ८ । १० । १२ । १४. भौ. शु. भ. रो. पुष्य. म. उफा. वि. ज्ये. पूषा. श्र. उभा. । क्रमात्० कुलाकुलम् । अकुलाकुलम् । सुगमम् ॥ ४ ॥ इति नरपतिजयचर्याटीकायां जयलक्ष्म्यां कुलाकुलचक्रम् ।

॥ कुंभद्वयचक्रम् ॥




कुंभाकारं लिखेच्चक्रं तिर्यग्रेखासमन्वितम् ॥ क्रमादूर्ध्वमधस्थं च एकैकोत्तरभं लिखेत् ॥ १ ॥ भानुभाद्विन्यसेत्तत्र रिक्तं पूर्णमिति क्रमात् ॥ एवं राशीन्क्रमान्न्यस्य रिक्तपूर्णौ प्रकल्पयेत् ॥ ॥ २ ॥ रिक्ते रिक्ता भवेद्यात्रा पूर्णे यात्रा शुभावहा ॥ ३ ॥ इति कुंभचक्रम् ॥

कुम्भाकारमिति ॥ १ ॥ भानुभादिति । एवं राशीति ॥ २ ॥ कुम्भद्वयं लिखित्वा तयो मध्ये तिर्यक् एकैका रेखा कार्या । एकस्मिन् कुंभे सूर्याधिष्ठितनक्षत्रं रेखोपरि कुंभके न्यसेत् । द्वितीयं रेखाधो लिखत् । एवमूर्ध्वाधः क्रमेणैव सूर्याधिष्ठितनक्षत्रात् लिखत् । तथा विषमसं सूर्याधिष्ठितनक्षत्रात् पतंति । तेन किं विषमानि सूर्यभात्कुंभादुपरि कोष्ठे । समभान्यधः कोष्ठे । एवं रिक्तं पूर्णम् एकस्मिन्नेव कलशे कलशस्य खंडद्वयं भवति । एवं सूर्याधिष्ठितराशितः विषम समै राशिभिः राशिकुंभखंडद्वयं रिक्तं पूर्णाख्यं भवति ॥ ३ ॥ इति नरपतिजयचर्याटीकायां जयलक्ष्यां कुंभद्वयं रिक्तं पूर्णाख्यम् ।

पूर्वेजसिंहचापश्च विन्यसेत्कलशे क्रमात् ॥ वृषोथ मकरः कन्या दक्षिणे विनिवेशयेत् ॥ १ ॥ युग्मं कुंभं तुला पश्चादुदक्कर्किझषालयः ॥ चतुःखंडं भवेदेतत्कलशानामथ क्रमात् ॥ २ ॥ रिक्तं पूर्णं क्रमाज्ज्ञेयं कुंभस्य विषमे समे ॥ रिक्ते तु मरणं विद्याज्जयः पूर्णे न संशयः ॥ ३ ॥ सौम्ययुक्ते तु कलशे ध्रुवं शत्रुक्षयो भवेत् ॥ कुंभाकारमिदं चक्रं कथितं चादियामले ॥ ४ ॥ इति द्वितीयकुंभचक्रम् ॥

तथा च समरविजयतन्त्रे द्वितीयकुंभचक्रम् । पूर्वेजेति ॥ १ ॥ २ ॥ ३ ॥ अस्यापि कुंभस्यार्थः पूर्ववज्ज्ञेयः । सूर्याधिष्ठितराशितः । अन्यथा सर्वदैव मेषादिविषमाश्रयाज्ज्ञेय

एव । अस्यैवाग्रे उक्तमस्ति । "भानुभादि न्यसेदृक्षं रिक्तं पूर्णमिति क्रमात् । एवं राशिक्रमात्कुंभे फलमुक्तं क्रमाद्वदेत् ।" दिनर्क्षकुंभतो लाभो जये योधर्क्षकुंभतः । योधस्य योधनक्षत्राद्रिक्तपूर्णवशाद्यात्रा देया ॥ ४ ॥ इति कुम्भद्वयं समरविजये ।

## ॥ प्रस्तारचक्रम् ॥

| मं | शु | बु | चं | सू | बु | शु | मं | बृ | श | श | बृ |
|---|---|---|---|---|---|---|---|---|---|---|---|
| क | च | ट | य | अ | ट | छ | ख | त | प | फ | थ |
| ग | ज | ड | र | आ | ढ | झ | घ | द | व | म | ध |
| ङ | ञ | ण | ल | इ | ट | च | क | न | म | प | त |
| ख | छ | ठ | व | ई | ड | ज | ग | थ | फ | व | द |
| घ | झ | ढ | श | उ | ण | ञ | ङ | ध | भ | म | न |
| क | च | ट | ष | ऊ | ठ | छ | ख | त | प | फ | थ |
| ग | ज | ड | स | ए | ढ | झ | घ | द | व | भ | ध |
| ङ | ञ | ण | ह | ऐ | ट | च | क | न | म | प | त |
| ख | छ | ठ | क्ष | ओ | ड | ज | ग | थ | फ | व | द |
| मे | वृ | मि | क | सिं | क | तु | वृ | ध | म | कुं | मी |
| ७ | ७ | ७ | ७ | १२ | ७ | ९ | १३ | १२ | ७ | १२ | २५ |
| ३ | ७ | ४ | ५ | ७ | ५ | ७ | ४ | ८ | ५ | ६ | ५ |

## ॥ द्वितीयप्रस्तारचक्रम् ॥

| ७ | १० | ३१ | १३ | १५ | १० | २२ | १५ | २८ | ३० | १७ | १४ |
|---|---|---|---|---|---|---|---|---|---|---|---|
| २८ | ३५ | ४१ | ४९ | ५३ | ६३ | ७ | ११ | १५ | १९ | २३ | २७ |
| ३१ | ३५ | ४९ | ७ | १२ | १७ | २२ | २७ | ३२ | ३७ | ४२ | ४७ |
| १२ | १९ | २६ | ३३ | ४० | ४७ | ५४ | ६१ | ६८ | ७ | १२ | १७ |
| २२ | २७ | ३२ | ३७ | ४२ | ४७ | ९ | १६ | २३ | ३० | ३७ | ४४ |
| ५२ | ५८ | ६५ | ५३ | ५७ | ६१ | ६५ | ६९ | ७३ | ७७ | ८१ | ८५ |
| २४ | २९ | ३४ | ३९ | ४४ | [illegible] | ५४ | ५९ | ६४ | ३७ | १२ | १७ |
| २२ | २७ | ३२ | ३७ | ४२ | ४७ | १३ | १८ | २४ | ३० | ३६ | ४२ |
| ४८ | ५४ | ६० | २५ | ३० | ३५ | ४० | ४५ | ५० | ५५ | ६० | ६५ |

त्रयोदशोर्ध्वगा रेखा दशरेखाश्च तिर्यगाः ॥ भवेयुः कोष्ठकास्तत्र संख्यायाष्टोत्तरं शतम् ॥ १ ॥ मेषादिराशयो लेख्यास्तिर्यक्पृथमपंक्तिषु ॥ नवांशराशयश्चाधो नवधा सर्वराशिषु ॥ २ ॥ कवर्गं नवधा लिख्य कोष्ठके प्रथमेष्टमे ॥ द्वितीये सप्तमे चाद्यान्न्यसेदाद्यत्रिषष्ठके ॥ ३ ॥ यशवर्गौ चतुर्थे तु अवर्गं पंचमे तथा ॥

नवद्वादशके ताद्याः शेषे पाद्या द्विकोष्ठके ॥ ४ ॥ चतुरसंयोगादश्विन्यादिक्रमेण च ॥ ज्ञेया नवांशका वर्णा मेषादौ राशिमंडले ॥ ५ ॥

अथ प्रस्तारद्वादशारचक्रम् । अस्मिन्द्वादशारप्रस्तारे उपरि द्वादशपंक्तिषु मेषाद्या राशयो लेख्याः । ततः स्वस्वाधः सर्वराशीनां नवधा नवांशा लेख्याः । तत्र नवांशलिखनम् । अजमकरतुलाकुलीराद्या इत्यदि प्रक्रियया मेषादिराशिषु नवधा नवधा अधः कोष्ठेषु नवसु लिखेत् । यथा मेषे मेषादिनवधा अंशाः वृषे मकरादि नवांशाः मिथुने तुलादि कर्कटे कर्कटादि नव । एवमजमकरतुलाकुलीराद्या इति क्रमेण सिंहादिमीनांतं लिखेत् ॥ १ ॥ २ ॥ कवर्गमिति ॥३॥ यशवर्गाविति । एषामर्थो यो ग्रहो यस्य वर्गाधिपः तान्वर्गवर्णान् लिखेत् । नवांशराशिपवर्गवर्णान् लिखेत् । यथा "मेषवृश्चिकयोर्भौमः शुक्रो वृषतुलाभृतोरिति । राश्यधिपस्य ये वर्गाः अकचटतपयशाष्टौ वर्गाणामधिपा रविकुजशुक्रचांद्रिगुरुशनयः यशवर्गाधिपश्चंद्रः । एतेषां वर्गाणामक्षराधिपस्वस्वाधिपनवांशराशिषु नवधा नवधा लिखेत् । तत्र मेषराशेरधिपो भौमः तस्य वर्गः कवर्गः कवर्गस्य नववर्णाः कखगघङाः कखघांताः मेषनवांशराशिस्थानेषु यत्र यत्र राश्यधः स्थितेषु तत्र तत्र नवधा कवर्गादीन् घांतान् प्रथमं लिखेत् । एवं कवर्गं नवधा वृश्चिकनवांशराशिषु न्यसेत् । एवं कृते कवर्गं नवधा लिख्य कोष्ठके प्रथमेष्टके इत्यर्थः संपन्नो भवति । एवं चवर्गवर्णान् नवधा वृषनवांशराशिषु सर्वेषु लिखित्वा पश्चात्तुलाराशिनवांशेषु चवर्गं लिखेत् अयमर्थः । लिखनक्रमश्च "यशौ वर्गौ चतुर्थे च अवर्गं पंचमे तथा ।" अनयोरर्थवशाद्व्याख्यातः । ये तु पुनः कवर्गं नवधा विलिख्य कोष्ठके प्रथमेष्टके इत्यर्थेन कं मेषराशेरधः खं वृश्चिकराशेरधः गं मेषाधो घं वृश्चिकाधः क्रमेण ये वर्गवर्णान् लिखंति । तेपि साधुप्रक्रिया लिखंति । नवधा मेषाधः वृश्चिकाधः क्रमेण ये वर्गवर्णा नवधा वृश्चिकाधस्थाः कवर्गवर्णा नवाक्षरनवांशेषु स्थितश्चंद्रो रक्तवर्णो भवति । अयमर्थो दृष्ट्या स्थिरीकृतः । सा प्रक्रिया यवनाचार्योक्ताक्षरोत्पत्तिकोशेऽस्ति तत्र मया दृष्टा । कवर्गं नवधा यो वर्णविन्यासो मया मेषादिमीनांतान् नवांशराशीन् ऋजुपंक्त्यां लिखित्वाष्टोत्तरशतसंख्यया प्रथमं मेषाख्यराशिनवांशेषु नवधा कवर्गवर्णा एव लिखिताः तथा चवर्गवर्णान्नवधा वृषाख्यराशिनवांशेषुप्रथमं लिखिताः । एवं मिथुनादिषु प्रथमम् । यस्य यस्य द्वौ राशी एवं वर्णविन्यासं कृत्वा पश्चाद्यशापायांता इंदोर्नव । एवमवर्गाणां नव सूर्यस्य अनेन सह अष्टोत्तरशतं वर्णानां संख्या ॥ ४ ॥ चतुरक्षरेति । एतेषां वर्गानां चतुर्भिः कृत्वा अश्विन्यादिचतुश्चतुश्चरणेषु सर्वे वर्णाः सप्तविंशतिनक्षत्रेषु दत्ताः । तद्यथा । "कचौटपावश्विनीषु भरण्यंग्रिष्वटौ चकौ । तपौ पतौ कृत्तिकासु रोहिणीषु खछौ ठरौ । आठौ छखौ मृगे देयौ शिवे देयौ थफौ फथौ । गजौ डलावदितिभे पुष्ये इडजगा ऋषि । दवौ बदौ सर्पदेवे वर्णाः कर्कांतगा इमे । पैत्रे घझौ

ढवौ देयावीढो भाग्ये झवौ तथा । थमौ भधावर्यमणि तथा हस्ते ञ्ओ णशौ उणज-डानममनाश्चित्रास्वात्योश्चतुश्चतुः । कचटपौ द्विदैवे तु मैत्रे ऊटचकाः स्मृताः । तपो पतौ शक्रदैवे नैर्ऋते तु खछौ ठसौ । एठौ छखौ वारिदैवे वैश्वदेवे थफौ फथौ । विष्णुदैवे गजडहा एडौ वासवभे जगौ । दवौ वदौ शतर्क्षे तु पूर्वाभाद्रे घझौ ढवौ । अढउभा अहि-र्बुध्न्ये पौष्णे वर्णौ धमौ अमौ । एवमष्टोत्तरशतं वर्णा राशिनवांशजाः । न्यस्ताश्चतुश्चतुः-संख्या दस्रादिचतुरंघ्रिपु । चतुरक्षरसंयोगादश्विन्यादिक्रमेण चेत्यस्य श्लोकस्यार्थोऽयं न्यासः । अत एवास्य द्वादशारचक्रस्य द्वादशारतुंबुर्वावर्त्तः ॥ तुंबुरुर्देवगायकः तस्य य आवर्त्तः गाने गमकगाने सरिगमपधनिससस्वराणां सप्तादिमवर्णैस्तत्तालमंद्रघोषोच्चारै-यथावर्त्तस्तथेदं चक्रं नामाक्षरानयने तुंबुरुरिव नामाक्षराण्यालोडयति । एतान्येवाक्षराणि मुरजबंधेन रज्जुवेधेन आलोड्यंते नामानयनो । असुमर्थं मुरजवेधचक्रे व्याख्यास्यामि ॥ ५ ॥

भौमं शुक्रं बुधं चंद्रं भानुं सौम्यं सितं कुजम् ॥ गुरुं सौरिं शनिं जीवं विदध्यात् कोष्ठकोपरि ॥ ६ ॥ कोष्ठाक्षरगतो ज्ञेयश्चंद्रस्ता-त्कालसंभवः ॥ तदधीनं फलं सर्वं लाभालाभं जयाजयम् ॥ ॥ ७ ॥ इष्टनाड्यो हता धिष्ण्यैः २७ षष्टिभागाप्तशेषके ॥ अश्विन्यादिंदुभुक्तेन युक्तस्तत्कालचंद्रमाः ॥ ८ ॥ क्रूरक्षेत्राक्षरे चंद्रे न शुभं सर्वकर्मसु ॥ शुभक्षेत्रे शुभं सर्वं प्रस्तारे चंद्रनिर्णयः॥ ॥ ९ ॥ अंशकेनांशकं गुण्यं ध्रुवयुक्तं कृतं पुनः॥ स्वगुणैर्गणयेत्प-श्चान्मूलांकैर्भाजयेत्ततः ॥ १० ॥

अस्य प्रयोजनमाह । भौममिति । राशिपतित्वन्यासः ॥ ६ ॥ कोष्ठेति । लाभाला-भादि जयपराजयादिप्रश्नस्तत्कालचंद्राधीन एव ॥ ७ ॥ तत्कालीकरणं चद्रस्याह । इष्ट-नाड्येति । एकैकं नक्षत्रं प्रति १ घटी २ पलं पे३ अक्षरं २० भोगः उक्तंच । दिने धिष्ण्यांतरैकैके धिष्ण्यं प्रतिघटीद्वयम् । त्रयोदशपलानोह भोगो विंशतिअक्षरः । उक्तंच । राशिसपादधिष्ण्यद्वयं पंचघटीप्रमाणम् । एकैकांशे त्रयस्त्रिंशत्पलान्यक्षरविंशतिः । प्रश्नकाले वर्त्तमाननक्षत्रस्य यावंत्यो घटिकाश्चंद्रेण भुक्तास्ता इष्टनाड्यो हता धिष्ण्यैः । सप्तविंशतिभिर्हताः गुणितास्तेभ्यो गुणितेभ्यः षष्ट्याप्तशेषं च द्विस्थं फलं जातं तत्र लब्धे यावंति नक्षत्राणि चन्द्रेण भुक्तानि तानि संयोज्य तदनुमानेन अश्विन्यादिभुक्तं चन्द्रेण तत्काले ज्ञेयम् । शेषे भुक्तनक्षत्राग्रिमनक्षत्रे चन्द्रो वर्तते । यदि च लब्धभुक्तयोगे सप्तविंशत्यधिकं जायते तदा सप्तविंशतिभिर्विशोधयेत् । ततः किं कर्तव्यमिति । शेषं पंचदशभिर्विभज्य लब्धं तस्मिन्नक्षत्रे तत्काल चन्द्रोस्ति तच्चरणा लब्धा भवन्ति । तेन लब्धचरणा एव भुक्तनवांशाः । ततो यस्य राशेस्तन्नक्षत्रं तस्मिन् राशौ तन्नवांशे चन्द्रो वर्तते । तन्नवांशस्य यदक्षरं द्वादशार-चक्रे त द्राश्यधो दृश्यते ॥ ८ ॥ तदक्षरं शुभग्रहस्य पापग्रहस्य वा क्षाते सति कर्तव्यमाह ।

क्रूरक्षेत्राक्षरेति । प्रस्तारे अथोदाहरणम् । शाके १४४२ समये वैशाखसुदि पंचम्यां मृगशिरा-नक्षत्रे घटी २० चन्द्रवासरे घटीद्वादशके प्रश्नः केनापि कृतो ममलाभः कदा भविष्यतीति तद्विचारः—तत्र मृगशिरोनक्षत्रस्य भुक्तघटिका द्विपंचाशत् सप्तविंशतिभिर्गुणिते जातः १४०४ एभ्यः षष्ट्या लब्धं त्रयोविंशति २३ भुक्तनक्षत्रं पुनस्तत्राश्विन्यादिभुक्तनक्षत्राणि चत्वारि तैर्लब्धं योजितम् २७ सप्तविंशतिः शेषं २४ चतुर्विंशतिः पंचदशभिर्भागे लब्धचरणः १ एक तेन चंद्रो जातः तत्कालेश्विन्याद्वितीयचरणेस्ति चंद्रः । अश्विन्या द्वितीयचरणे मेषराशिद्वितीयो नवांशः स च वृषराशिर्नवांशः तस्याधिपः शुक्रस्तस्य वर्गश्चवर्गः तद्वर्गस्य वर्णः प्राप्तश्चकारः तेन शुभनक्षत्रे शुभं ज्ञेयं प्रस्तारे चंद्रनिर्णय इति वचनात् । लाभप्रश्ने लाभो भविष्यतीति प्रश्नार्थः ॥ ९ ॥ १० ॥

नाडी फलौ यशौ वर्गौ दिने वर्गफलोदयः ॥ कपक्षेण च मासेन टवर्गेण ऋतुं वदेत् ॥ अयने तपवर्षेण फलं ब्रूयाद्विचक्षणः॥११॥ चतुस्था मुनयः ७।७।७।७। सूर्याः १२ सप्त ७ नंदा ९ गुणे ३ षवः ५ ॥ मासाः १२ शैला ७ इना १२ स्तत्त्वा २५ राशीनां च ध्रुवा इमे ॥१२॥ एते राशिध्रुवाः ॥ गुणाः ३ शैलाः७ युगाः ४ पंच ५ सप्त ७ पंचा ५ द्र्यो ७ युगाः ४ ॥ नागा ८ बाणा ५ रसा ६ भूता ५ मेषादेरंशका मताः ॥१३॥ तत्कालेंदुशककृतिं कृत्वा ध्रुवयुता तथा ॥ स्वगुणयेत्पश्चान्मूलांकैर्भाजयेत्सुधीः ॥ १४ ॥ षष्टिर्वाणविधौ नेत्रे पक्षाग्न्यक्षिरविस्तथा ॥ चंद्रभूसुतशुक्राणां गुरुज्ञरविसौरिणाम् ॥१५॥ शैला नंदा रसा बाणा नंदाः शैला युगा दश ॥ इनाः १२ सप्त ७ रसा ६ भूता ५ मूलांकाश्च उदाहृताः ॥ १६ ॥ अथ मूलांकाः क्वचित् ॥ घना १७ नखा २० शिवप्रकृति २१ युग्मेषु २५ दिक् १० रसाक्षि च २६ ॥ सार्धद्वौ २।३० । वेदवेदाश्च ४४ वस्वष्टि १६८ युग्मपंच च ५२॥१७॥ रसांगाः ६६ खाब्धिशनो १४० मूलांका मुनिभाषिताः ॥ प्रश्नकाले विवाहे वा याने जन्मनि संगरे ॥ शशांकस्य फलं श्रेष्ठं सर्वशास्त्रेषु भाषितम् ॥ १८ ॥ इति प्रस्तारचक्रम् ॥

तत्र कदा भविष्यतीत्याकांक्षया उच्यते । नाडीफलाविति ॥ ११ ॥ चतुस्थेति मेषादीनां चतुर्णां प्रत्येकं सप्तैवं ध्रुवका द्वादश सिंहस्य एवं क्रमेण द्वादशध्रुवकाः राशि

ज्ञेयाः ॥ १२ ॥ अथ गुणाकारमाह । गुणाः श्लेति ॥ १३ ॥ अथ करणमाह । तत्कालेंद्विति । अत्रोदाहरणमाह । मेषद्वितीयनवांशे चन्द्रः २ तस्य कृति ४ वृषराशिध्रुवः सप्त तेन सहैकादश ११ जाताः पश्चाद्वृषगुणाकारैः सप्तभिः ७ गुणिते जातं सप्तसप्ततिः ७७ ॥ १४ ॥ अथ भागहारमाह । मूलांकैर्भाजयेत्सुधीरित्यनेन तन्मूलांकभागहारमाह । षष्टिर्बाणेति । अस्य कृति २५ दिनार्धं सूर्यध्रुवः १२ युतः ३७ दिनार्थं रविगुणकेन गुण्यं जातं २५९ शुक्रभागहारेण लब्धं दिन २ शेष ७ घटिकाथ चंद्रध्रुवः ७ अस्य कृति ४९ ध्रुवयुता ५६ चंद्रगुणकेन गुणितं २२४ शुक्राहारेणभक्तं लब्धं १८ तत्र शुक्रस्य नवांशः प्रश्ने तत्र शुक्रस्य भागहारा द्वादश १२ भाज्यराशितो भागहरेण लब्धं षट् ६ शेषं ५ तत्रोत्तर प्रश्नस्य लब्धप्रमाणेन षण्मासे व्यतीते सप्तममासस्यैकविंशति २१ दिने व्यतीते द्वाविंशदिनस्याष्टादश १८ घटिकाभ्यन्तरे लाभः । अयं प्रश्नविशेषः । एवं पापांशे चन्द्रे न लाभः कियदवधि न लाभः तद्गुणाकारभागहारलब्धेन वदेत् फलं तु यद्गृहस्य नवांशा वर्णा भवन्ति तद्वर्णवशात् । एकपक्षेण च मासेनेत्यादिना फलं वदेत् नात्र विकल्पना शुभाशुभफलैः ॥ १५ ॥ १६ ॥ १७ ॥ प्रश्नकालेति ॥ १८ ॥ इति नरपतिजयचर्याटीकायां जयलक्ष्म्यां द्वादशारतुंबुर्वावर्तः ।

प्रस्तारे द्वादशारे च ऋक्षाक्षरक्रमेण च ॥ नवांशराशिमार्गेण चक्रं भवति तुंबुरुम् ॥ १ ॥ यत्र मेषादिराशिस्थस्तत्कालेंदुः प्रजायते ॥ ग्रहदृष्टिवशात्सर्वं ज्ञेयं तस्य शुभाशुभम् ॥ २ ॥ त्रिदशे पंचमे धर्मे चतुर्थाष्टमसप्तमे ॥ पादवृद्ध्या निरीक्षंते प्रयच्छंति तथा फलम् ॥ ३ ॥ ऊर्ध्वदृष्टी च भौमार्कौ केकरौ बुधभार्गवौ ॥ समदृष्टी च जीवेंदू शनिराहू त्वधोमुखौ ॥ ४ ॥ मेषो वृषो मृगः कन्या कर्कमीनतुलास्तथा ॥ आदित्यादिग्रहेषूच्चा नीचा यस्तस्य सप्तमः ॥५॥ परमोच्चा दिशो १० रामा ३ अष्टाविंशास्तिथींद्रियाः॥ सप्तविंशास्तथा विंशाः सूर्यादीनां तथांशकाः ॥ ६ ॥ परमोच्चात्परं नीचमर्धचक्रांतसंख्यया ॥ नीचस्थानात्क्रमेणोच उक्तः सर्वत्र खेचरः ॥ ७ ॥ उच्चान्नीचाच्च तुर्ये समस्थानं तदुच्यते ॥ उच्चनीचसमस्थाने चंद्रं ज्ञात्वा फलं वदेत् ॥ ८ ॥

अथ प्रकरणवशान्मुरजबंधरज्जुवेधकरणचक्रं व्याख्यायते । प्रस्तारेति । द्वादशारे यान्यक्षर्युक्तानि तानि चतुश्चतुः कृत्वा अश्विन्यादिचरणेषु दत्तानि नक्षत्राणां चरणा एव नवांशाः । तन्मार्गेण तुंबुरुचक्रं भवति ॥ १ ॥ यत्र मेषादीति । यस्य राशिनवांशे प्रश्नकाले तत्कालचंद्रो यत्रेति । स च येन ग्रहेण दृष्टः एवंविधाच्चचंद्रात्प्रश्नफलं वदेत् ॥ २ ॥ अथ दृष्टिः त्रिद-

शेति । सुगमम् ॥ ३ ॥ ऊर्ध्वदृष्टीति । बुधभार्गवौ केकरौ कोर्थः तिर्यग्दृशावित्यर्थः । च शेति । सुगमम् ॥ ४ ॥ अथ ग्रहोच्चमाह । मेषेति ॥ ५ ॥ परमोच्चांशमाह । परमेति ॥ ६ सुगमम् ॥ ४ ॥ अथ ग्रहोच्चमाह । मेषेति ॥ ५ ॥ परमोच्चांशमाह । परमेति ॥ ६ परमोच्चेति । मेषादयः सामान्यमुच्चमुक्तम् । स्वस्वोच्चराशावपि दिशो रामादयोंशाः परमोच्चां तत्रस्थो ग्रहोतिश्रेष्ठं फलं प्रयच्छति । तथा च जातककारः तत्रोच्चग्रहदशा राज्यदायिनी एव यदि स्वपरमोच्चांशस्थितो भवति । तुरगगजरथच्छत्रचामरादिभिरुपपन्नं राज्यं ददाति सामान्योच्चस्थो राज्यमात्रम् । तथा च परमोच्चसामान्योच्चयोः फलमिदं गर्गसंहितायां "स्वोच्चगौ रविशीतांशू जनयेतां नराधिपम् । उच्चस्थौ धनिनं ख्यातं स्वत्रिकोणगतावपि ॥ ७ ॥ उच्चान्नीचेति । यथा वृषे चन्द्र उच्चस्थः वृश्चिके नीचस्थः वृषवृश्चिकाभ्यां चतु राशी सिंहकुंभौ तौ राशी समस्थानं चन्द्रस्य एवमुच्चनीचसमस्थानगं चन्द्रं तत्का ज्ञात्वा फलं वदेत् ॥ ८ ॥

## ॥ अथ दृष्टितुंबुर्वावर्तचक्रम् ॥




| सू | चं | मं | बु | गु | शु | श | रा | ग्रह |
|---|---|---|---|---|---|---|---|---|
| रक्त | श्वेत | रक्त | पीत | पीत | श्वेत | कृष्ण | कृष्ण | वर्ण |
| ऊर्ध्व | सम | ऊर्ध्व | तिर्यक् | सम | तिर्य. | अधः | अधः | दृष्टि |
| १० | ३ | २८ | १५ | ५ | २७ | २० | पर- | -मोच्च |

उच्चस्थाने स्थितं चंद्रं भौमादित्यौ प्रपश्यतः ॥ समस्थाने च गुर्वींदू नीचस्थं राहुसूर्यजौ ॥९॥ बुधशुक्रौ त्रिकोणस्थं चंद्रं तत्कालसंभवम् ॥ अन्यत्रस्थं न पश्यंति जात्यंधा इव खेचराः ॥१०॥ सौम्यदृष्टिस्थिते चंद्रे सर्वसौख्यं प्रजायते ॥ क्रूरदृष्टिस्थिते पुंसां मृत्युर्हानिर्महद्भयम् ॥ ११ ॥ एवं शुभयुते चंद्रे सर्वसौख्यं प्रजायते ॥ क्रूरैः क्रूरफलं तत्र मिश्रैर्मिश्रं न संशयः ॥ १२ ॥ रक्तं पीतं सितं कृष्णं चंद्रे वर्णचतुष्टयम् ॥ ज्ञातव्यं च प्रयत्नेन प्रश्नकाले सदा बुधैः ॥ १३ ॥ रविर्भौमः सितः सौम्यो गुरुः सौरी शशी तमः ॥ वर्गेशा अकवर्गाद्यो ग्रहा ज्ञेया विचक्षणैः ॥१४॥ स्यातां रविकुजौ रक्तौ पीतौ जीवबुधौ ग्रहौ ॥ शशिशुक्रौ सितौ वर्णौ कृष्णत्वं राहुमंदयोः ॥ १५ ॥ यद्वर्गवर्णगश्चंद्रस्तस्य स्वामी तु यो ग्रहः ॥ तस्य वर्णेन वर्णत्वं शशांकस्य प्रजायते ॥१६॥ रक्ते चंद्रे भवेद्युद्धं कृष्णे मृत्युर्न संशयः ॥ पीते शुभं विजानीयात्सिते शुभतरं फलम् ॥ १७ ॥ इति दृष्टितुंबुरुचक्रम् ॥

अथ चन्द्रे ग्रहदृष्टिमाह। उच्चस्थानेति। भौमादित्यौ उच्चस्थानगतं चद्रं पश्यतः यतस्तावूर्ध्वदृष्टी। समस्थानस्थं सिंहकुम्भस्थं चंद्रं जीवेन्दू पश्यतः यतस्तौ समादृष्टी। नीचस्थं वृश्चिकस्थं चन्द्रं राहुशनी पश्यतः यतस्तावधोदृशौ ॥ ९ ॥ बुधशुक्राविति। शुक्रबुधौ चन्द्रं तत्काले स्वमूलत्रिकोणस्थं पश्यतः वृषस्थतृतीयांशमतिक्रम्य स्थितम्। अथ कथमुक्तम्। त्रिकोणस्थं मूलत्रिकोणस्थं तत्रोच्यते यदि बुधशुक्रयोरेव मूलत्रिकोणं यदि स्वीक्रियते। तत्र भवति। यतः सञ्चारवशात्कन्यामकरस्थौ शुक्रबुधौ भवतः ताभ्यां वृषस्थश्चन्द्रः त्रिकोणे भवति तत्र उच्चस्थं चन्द्रं तौ तिर्यग्दृशा न पश्यतः। तथा चान्यत्। सिंहकुम्भस्थश्चन्द्रः समगः सञ्चारवशात् त्रिकोणगो भवति तथापि न। एवं नीचगोपि ताभ्यां त्रिकोणगो भवति तत्रापि न दृष्टिः एवं विचार्यमाणे पर्यवसन्नं मूलत्रिकोणस्थं चन्द्रं बुधशुक्रौ पश्यत इति। उच्चनीचसमस्थानस्थे चंद्रे ऊर्ध्वसमाधोदृष्टिग्रहाणामेव दृष्टिरुक्ता। अन्यथा ब्रह्मयामलादौ अत्र चक्रे ग्रहदर्शनं चन्द्रे यदुक्तं तत्र दूषणमेव स्यात् बुधशुक्रदृष्टे सति आचार्यस्यापि दोषः प्रसज्येत। जात्यंधा इव खेचरा इति वचनात् ॥ १० ॥ सौम्यदृष्टीति ॥ सुगमम् ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ इति स्वरोदयटीकायां जयलक्ष्म्यां तुंबुरुचक्रम्।

अथ तुंबुर्वावर्तचक्रम् ॥ अंशकुंडलीचक्रं लिख्यते ॥




द्वादशारं लिखेच्चक्रं नाड्यैकैका त्रिधा पुनः ॥ पंचमे पंचमे स्थाने तिर्यग्वेधं तथा कुरु ॥ १ ॥ अष्टोत्तरशतं चैव नाडीसंख्या प्रजायते ॥ अंशाक्षराणि चक्रस्य नाडिकाग्रे तु विन्यसेत् ॥ २ ॥ क्रूरवेधाक्षरे चन्द्रो यदा तत्कालसंभवः ॥ तदा तस्य फलं वक्ष्ये विवाहादौ शुभाशुभम् ॥३॥ विवाहे क्रूरवेधेन वैधव्यं च विशीलता ॥ यात्रायां च भवेद्धानिर्मृत्युर्भंगो महाहवे ॥ ४ ॥ सर्वहानिकराः क्रूरा ग्रहाः सौम्याः फलार्धदाः ॥ द्व्यादिवेधो भवेद्यस्य मृत्युस्तस्य न संशयः ॥ ५ ॥ तत्कालेन्दुफलं सर्वं यदुक्तं रुद्रयामले ॥ गोपितं सर्वशास्त्रेषु मया चात्र प्रकाशितम् ॥ ६ ॥ स्वरविवराविशेषैश्चक्रबंधैस्तु भूम्या विविधफलपताकामातृकाभेदरम्यम् ॥ नरपतिकविचंद्रः सर्वशास्त्रेष्वधीती नरपतिजयचर्याशास्त्रमेतच्चकार ॥ ७ ॥ इति नरपतिजयचर्यायां स्वरोदये तुंबुर्वावर्तचक्रं अंशकुंडलीचक्रम् ॥

द्वादशारमिति । द्वादशारं लिखेच्चक्रमित्येनेन द्वादशारे चक्रे द्वादशैव रेखाः । [cut off] कैका त्रिधा कृता षट्त्रिंशद्रेखिका ३६ जायन्ते ततोऽग्रेप्युक्तमाचार्येण एकैकया ना[cut off] अष्टोत्तरशतं वेधो जायते । तत्कथं पूर्यत इति ये केचिदुदाहरणचक्रेस्मिन्वेधं द[cut off] अष्टोत्तरशतं ते धन्याः अत्र पाठ एव लिख्यते मया । अस्य द्वादशारचक्रस्य चक्रान्[cut off] ऽक्षरन्यासश्च अष्टोत्तरशताक्षरोत्पत्तिनाऽसौ च तुंबुर्वावर्त्तचक्रे दर्शयिष्यामः । दिङ्मात्र[cut off] शारे दर्शितम् ॥ १ ॥ २ ॥३॥ ४ ॥५॥६॥७॥ इति नरपतिटीकायां द्वितीयं तुंबुरुच[cut off]

## ॥ राशितुंबरुचक्रम् ॥




राशिचक्रं प्रवक्ष्यामि नृपाणां हितकाम्यया ॥ रविर्जीवस्तथा सौम्यस्तैश्चंद्रे च समागते ॥ जलपातो भवेत्सत्यमित्युक्तं विष्णुयामले ॥ १ ॥ रविर्जीवस्तथा शुक्रस्तैश्चंद्रे च समागते ॥ वायुपातो भवेत्सत्यमित्युक्तं विष्णुयामले ॥ २ ॥ रविर्जीवस्तथा सौरिस्तैश्चंद्रे च समागते ॥ अग्निपातो भवेत्सत्यमित्युक्तं शक्तियामले ॥ ३ ॥ रविर्भौमस्तथा राहुस्तैश्चंद्रे च समागते ॥ लोहपातो भवेद्घोर इत्युक्तं रुद्रयामले ॥ ४ ॥ रवी राहुस्तथा केतुस्तैश्चंद्रे च समागते ॥ पाषाणपातो भवने इत्युक्तं भानुयामले ॥ ५ ॥ इति राशितुंबुरुचक्रम् ॥

राशिचक्रमिति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ इति तृतीयतुंबुरुचक्रम् ।

प्रथमे नवमे वेधो द्वितीये सप्तमे तथा ॥ तृतीये पंचमे वेधो राशौ षष्ठचतुर्थके ॥ १ ॥ पंचमे पंचमे राशौ द्रेष्काणे च नवांशके ॥ पंक्तियुक्त्या लिखेद्वर्णान्संख्यया ऽष्टोत्तरं शतम् ॥ ॥ २ ॥ सर्पाकारो भवेद्वेधस्तेन नामानि साधयेत् ॥ ३ ॥ इति नामसाधनम् ॥

कवर्गं नवधाऽऽलिख्य कोष्ठके प्रथमेष्टकेत्येवं प्रक्रियया एषामपि संप्रदाय इत्येवं भासते तत्रादौ चराणामाद्यक्षराणि कलत्रफ स्थिराणां पघषज द्विस्वभावानां छभखय एतदादीन्य-राणि चरादिराशिषु ज्ञेयानि ॥ १ ॥ २ ॥ ३ ॥ इति नामसाधनम् ।

अथान्यत्संप्रवक्ष्यामि तत्कालेंदुपरिस्फुटम् ॥ येन विज्ञायते सर्वं त्रैलोक्यं सचराचरम् ॥ १ ॥ लाभालाभौ सुखं दुःखं जीवितं मरणं तथा ॥ जयं पराजयं संधिं समागमविनिर्णयः ॥ २ ॥ लूका चिंता तथा मुष्टी राजावस्थादिकौतुकम् ॥ एतत्सर्वं तथा चान्यज्ज्ञायते च परिस्फुटम् ॥ ३ ॥ शिलातलेंबुसंशुद्धे वज्रलेपे समेथ वा ॥ स्वबुद्ध्या समभूम्यां वा स्फुरत्यत्र यथामति ॥ ४ ॥ क्रियते वलयाकारं चक्रं कर्कटकेन च ॥ विभागः पारधौ पश्चात्क्रियते राशिमानतः ॥ ५ ॥ कुर्यात्तेषु समं भागं नवधा नवधा पुनः ॥ एवं कृते भवंतीह शतमष्टाधिकं गृहाः ॥ ६ ॥ द्वादशारं भवेच्चक्रं मेषादिद्वादशान्वितम् ॥ अस्वराद्याः स्वरा देया राशिवेधा भवंत्यमी ॥ ७ ॥ प्रस्तारचक्रलिखितान्वर्णान् राशिनवांशकात् ॥ अन्योन्यं वेधयेद्वर्णान् सुमती रज्जुरेखया ॥ ८ ॥

अथ मुरजाख्यतुंबुर्वावर्तः । रज्जुवेधोपि तुंबुर्वावर्तः । अथेति । सुगमम् ॥ १ ॥ लाभेति ॥ २ ॥ ३ ॥ अथ रज्जुवेधमुरजवेधकरणार्थमुपायमाह । शिलातलेति ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥

एकद्वित्र्यादिकानंकाँल्लिखेद्वर्णानपि क्रमात् ॥ प्रथमे नवमे वेधो द्वितीये सप्तमे तथा ॥ ९ ॥ तृतीये पंचमे राशौ राशौ षष्ठचतुर्थके ॥ पंचमे पंचमे राशौ द्रेष्काणे च नवांशके ॥ १० ॥ अजवृषमिथुनकुलीराः पंचमनवमैः सहेंद्राद्याः ॥ त्रिकोणराशयः प्रोक्ता मेषसिंहहयादिभिः ॥ ११ ॥ आद्य १ द्वि २ वह्नि ३ तुर्याशा ४ नवा ९ ष्ट ८ नग ७ ष ६ ण्मिथः ॥ वेधयंतस्त्रिकोणे तु पंचमं पंचमोंशकः ॥ १२ ॥ द्रेष्काणेऽप्यंशवेधोयं रज्जौ मुरजबंधने ॥ तुंबुरे तुंबुरावर्ते विज्ञेयः स्वरपारगैः ॥ १३ ॥ प्रथमेन

**तृतीयं तु तृतीयेनादिमं तथा ॥ त्रिकोणवेधतोन्योयं द्वितीयः सप्तसप्तके ॥ १४ ॥ आद्यतृतीयौ द्रेष्काणौ वेधयंतौ परस्परम् ॥ त्रिकोणे च द्वितीयोपि द्वितयं सप्तसप्तके ॥ १५ ॥**

अथ वेधमाह नवांशके । एकद्विन्यादीति । प्रथमे नवमे वेध इत्ययं त्रिकोणवेधो नवांशवेधः ॥ ९ ॥ १० ॥ तत्र त्रिकोणराशयः । अजवृषेति । तेन पञ्चमे वेधोपि राशिवेधे सति सर्वराशीनां कृते नवपञ्चमवेधः संपन्नो भवति । यथा मेषनवांशैः सिंहनवांशवेधे द्विराशिवेधः पञ्चमपञ्चमवेधः । तथा वृषकन्ययोः मिथुनतुलयोः कर्कवृश्चिकयोः एवं पञ्चमपञ्चमवेधे कृते सर्वराशिषु नवपञ्चमवेधः संपन्नोभवति । अथ श्लोकव्याख्यानं पञ्चमे नवमे वेधेति मेषप्रथमनवांशः सिंहस्य नवमनवांशः अनयो रज्जुरेखया प्रथमवेधः एवं ततो मेषद्वितीयनवांशः सिंहस्याष्टमः अनयो रज्जुरेखया वेधः एवं कृते द्वितीये सप्तमे वेधार्थो भवति । तत्कथम् । यतो मेषस्य द्वितीयो वृषःसिंहस्याष्टमो वृश्चिकः वृषात्सप्तमो भवति । सप्तसप्तके वेधो द्वितीये सप्तमे वेध इत्यनेन प्रच्छाद्य उक्तम् । तथा मेषस्य तृतीयांशो मिथुनं सिंहस्य सप्तमं तुला तयोर्वेधः कार्यं एवं कृते तृतीये पञ्चमे राशौ वेधः संपन्नो भवति । यतो मिथुनराशेः पञ्चमं तुला तुलातो नवमं मिथुनं तेन नवपञ्चमवेधे तृतीये पञ्चमे राशौ वेध इत्यनेन प्रच्छाद्योक्तम् । तथा मेषचतुर्थांशः सिंहस्य षष्ठः अनयोर्वेधः कार्यः एवं कृते वेधराशौ षष्ठचतुर्थकवेधः संपन्नो भवति । यतः अयं तृतीयैकादशवेधः यतः कर्कातृतीयः कन्याराशिः कन्यातः कर्कट एकादशः । अथ वर्णप्रस्तार आद्यपक्षे ॥ १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ ॥ १ । २ । ३ । ४ । ५ । ६ । ६ । ७ । ८ । ९ । १० । ११ । १२ ॥ १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ । ॥ १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ ॥ १ कचटय । अटचक । तपयत्र । खछठर । आठछख । थफफय गजडल । इडजग । दवबद । घऊठव । ईढऊच । धभभध । ङञण । १ । २ । ३ । ४ । ५ ६ । ७ । ८ । ९ । १० । ११ । १२ ॥ १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ ॥ १ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ ॥ १ । २ । ३ । ४ । ५ । ६ । उखजङ । नममन । कटचष । ऊटचक ॥ तपपत । एठछख । थफफथ । गजडह । डजग । दवबद । घऊढय । ओठऊछ । धभभध । ७ । ८ । ९ । १० । ११ । १२ ॥ । २ । ३ । ४ । ५ । ६ । ७ । ८ । ९ । १० । ११ । १२ ॥ १ । २ । ३ । ४ । ६ । ७ । ८ । ९ । १० । ११ । १२ ॥ अयमपि पूर्ववदर्थप्रकाशो ज्ञेयः ॥ पंचमे पंचमे राशाविति ॥ मेषस्य पंचमोंशः सिंहः सिंहस्यापि पंचमः सिंह एवानयोर्वेधः एवं मेषराशेः षष्ठांशादिभिः क्रमैः सिंहस्य चतुर्थादिव्युत्क्रमांशा वेध्याः एवं कृतेपि राशिवेधः पंचम-

वेधः सम्पन्नो भवति । नवांशवेधोयं द्रेष्काणवेधोयमेव ॥ ११ ॥ द्रेष्कावेधश्चक्रे द्रष्टव्यः । तथा च श्लोककृतः ॥ १२ ॥ १३ ॥ अथ द्रेकाणवेधः ॥ प्रथमेति ॥ प्रथमा प्रशस्तः ॥ १४ ॥ १५ ॥

**प्रथमः पंचदशमेन्योन्यं पंचमपूर्वयोः॥नमादिमयो राश्योस्तृतीयश्च त्रिविंशतिः ॥ १६ ॥ द्वितीयैकोनविंशो च द्रेष्काणौ समसप्तके ॥ द्रेष्काणबंधवेधोयं कथितश्चादियामले ॥ १७ ॥**

अन्यच्च । पूर्वस्मिन्ने चक्रे नवधा नवांशलिखिते द्रेष्काणवेध एव क्रियते मेषे प्रथम द्वितीयतृतीयनवांशः प्रथमद्रेष्काणः पंचमराशेः सिंहस्य सप्ताष्टनवमांशास्तृतीयो द्रेष्काण अनयोः प्रथमम् ॥ प्रथमे नवमे वेधो द्वितीये सप्तमे तथा ॥ तृतीये पंचमे राशावित्या राशिरेखया यदि वेधः क्रियते तदा आद्यतृतीयौ द्रेष्काणौ वेधयन्तः परस्परमिति द्रेष्का णवेधः संपन्नो भवति ॥ प्रथमः पंचदशमेन्योन्यं पंचमपूर्वयोरित्यस्यार्थोऽप्यवगतो भवति तथा मेषस्य सप्तमाष्टमनवमाशैर्धनराशेः प्रथमद्वितीयतृतीयांशाः विध्यन्ते तदापि "आद्य तृतीयौ द्रेष्काणौ वेधयन्तः परस्परम्" इस्यर्थः सम्पन्नो भवति ॥ पूर्ववन्नवमादिम राश्योस्तृतीयश्च त्रिविंशतिरित्यर्थोऽप्यवगतो भवति ॥ तथा मेषस्य चतुर्थपञ्चमषष्ठांशैस्तु राशेश्च तुर्यपंचमषष्ठांशाः यथाक्रमं त्रिरेखया विद्धाः कार्याः तेन किं चतुर्थांशे मेषस्य तुलायाः षष्ठांशो रेखया वेधितः कार्यः ॥ तथा पंचमेन पञ्चमांशरेखया वि कार्यः षष्ठेन चतुर्थः एवं कृते द्वितीयः संमसप्तकवेध इति द्रेष्काणवेधः संपन्नो भव "द्वितीयैकोनविंशौ च द्रेष्काणौ समसप्तके" इत्यर्थोपि व्याख्यातो भवति ॥ अन्यच्च अष्टोत्तरसंख्याकान् नवांशवर्णानपि ऋजुपंक्त्या विलिख्य प्रथमे नवमे वेध इति प्रक्रि यदि विध्यते तदा रज्जुरिव वेधः संपन्नो भवति द्रेष्काणवेधो नवांशवेधश्च द्रे मुरजवंध इवाभाति ॥ यथा मुरजश्चर्मरज्जुभिरुभयमुखेन गृह्यते तथैव नवांशवेधो द्रे वेधो जायते । इदं कर्तुरभिप्रेतं व्याख्यानम् "ऋक्षाक्षरचतुष्कं च चतुष्कं च पुनः सप्तविंशतिधिष्ण्यानां वेधोयं मुरजाकृतिः" नवांशवर्णाश्चतुश्चतुः कृत्वा आश्विन्यां श्चतुश्चरणेषु दत्त्वा श्लोकबद्धाः कृतास्ते द्वादशारतुंबुर्वावर्ते द्रष्टव्याः । तथा श्लोकाः ॥ "कचौ टपावश्विनीषु भरण्यंन्त्रिष्वटौ चकौ । तपौ पतौ कृत्तिकासु" श्लोकबद्धा वर्णा बोद्धव्याः । तत्राश्विन्यादिषु बद्धाः श्लोकैः । अत्र राश्य ककारचकारटकारा यकारोऽकारटकारश्चकारककारास्तककारो नवैतेऽजवर्णाः पपौ खकारछकारठकारौ रकारः आठौ वृषाख्या राशेर्नवभागवर्णाः । छखौ फफथागजौ डो युग्मे । "ल इडौ जगदाबबौ दः कर्कराशिवर्णाः" घझौ ढवावीढ एते मृगारिराशेर्नवभागवर्णाः । भमधा ङञणा शउणौ युवत्याम् । ञङौनममो नकव "षऊभचौ कस्तपपास्त एत । खछौ ठसावेधछखास्थकारः ।" फफौ थोगजौ डोह

मृगे। जगौ दो ववौ दोघझौ ढकुंभे। क्षओढौ ऊयौ धो भमौ नवैते झषे यावनाचार्यकोशा मयोक्ताः। नवांशक्रमेणोक्ता एते द्वादशारे चक्रे एव वर्गाः। अतएवोक्तं द्वादशारे, यद्वर्गवर्णगश्चंद्रस्तस्तद्वर्णयुतो भवेत्। रक्तवर्णौ रविकुजौ शुक्लौ भार्गवशीतगू। पीतौबुधगुरु कृष्णा ज्ञेयाः केत्वार्किराहवः। एते च चक्रवेधं एव कथिताः॥ १६॥ १७॥

द्रेष्काणवेधः षट्त्रिंशदष्टोत्तरशताक्षरैः॥ चंद्रवेधेन विज्ञेयं चौरनाम स्फुटं भवेत्॥१८॥ राज्ञो मनः स्त्रीशयनासनेषु स्वप्नाद्यवस्था रसभोजनेषु॥ नपुंसकस्त्रीपुरुषाभिघाते चौरस्य नष्टस्य च चिंतितस्य॥ १९॥ लूकस्य मुष्टेर्हृदयस्थितस्य धात्वादियोनित्रितयस्य नाम॥ परोक्षमंत्रस्य महीपतीनां नामानि मुद्रालिखनस्य चापि॥२०॥ द्रेष्काणवृद्ध्या प्रवदंति नाम त्रिपंचसप्ताक्षरमोजराशौ॥ तदन्यराशौ द्विचतुर्थषष्ठे नामाक्षरं वै द्वितनौ द्विनाम॥ २१॥

अथ कर्तव्यमाह। द्रेष्काणवेधेति। तत्र चरा एव चत्वारःएषामेकतमस्य नवांशवर्णे तत्कालचंद्रो भवति तेन च चतुर्णां चरराशीनां चंद्राधिष्ठितनवांशसमवर्णा ग्राह्याः। अयमर्थः कुत्र प्राप्तः। तत्कालश्चंद्रश्चरराशेसोंश एकद्वित्र्यादिकः। तत्समचतुर्णां चरनवांशाक्षराणीति कथं तदर्थमाह। अग्रिमग्रंथे उदयास्तमये द्रव्यं चौरनाम रसातले। दशमे च धनस्थानमेवं नामत्रयं भवेदिति। अस्य एवं कल्प्य एवार्थः। एकस्मिँश्चरे लग्ने चत्वारश्चरराशयः एवं स्थिरद्विस्वभावयोरपि। अथवा यत्र नवांशवर्णे चंद्रः तस्य नवांशवर्णस्य यत्र यत्र वेधस्ते सर्वे ग्राह्याः। देष्काणवंधवेधेऽयं विधिः। चतुर्णां राशीनां द्वादशद्रेष्काणं प्रतिद्रेष्काणे त्रयस्त्रयोंशाः षट्त्रिंशदक्षराणि भवंति। यस्मिन्द्रेष्काणनवांशे चंद्रस्तद्द्रेष्काणवेधेन ये द्रेष्काणा लभ्यंते षडक्षराणि लभ्यंते चतुर्णां चरराशीनां चत्वारो वर्णाः स्थिराणामेवं चत्वारः यद्येकस्मिन् स्थिरराशिगते चंद्रे तन्नवांशे तन्नवांशसमसंख्याक्षराणि। चतुर्णां स्थिरराशिनवांशवर्णा ग्राह्याः। एवं द्विस्वभावादिकानां चतुर्णामपि। द्वितीयप्रकारः। तैर्वर्णैर्नाम साधयेच्चौराणाम्। चौराणामित्युपलक्षणम्॥ १८॥ तत्र नामसाधने विधिरयम्। अन्यत्र प्राप्ते विधिरत्रोपन्यस्यते। राज्ञो मन इति॥ १९॥ २०॥ द्रेष्काणवृद्ध्येति। ओजराशीनां द्रेष्काणनवांशे यदि चंद्रःतद्द्रेष्काणवृद्ध्या नामाक्षरसंख्या भवति। हृतनष्टादीनां एत दुक्तं भवति। मेषमिथुनसिंहादीनां विषमाणां द्रेष्काणनवांशे यदि चंद्रस्तदा त्रि ३ पंच ५ सप्त ७ क्षरनाम भवति। तथा द्रेष्काणवृद्धिः प्रथमद्रेष्काणे त्र्यक्षरं नामं द्वितीये पंचाक्षरं तृतीये सप्ताक्षरं तदन्यराशौ ओजादन्ये समराशौ द्विचतुःषष्ठाक्षरं द्रेष्काणवृद्ध्या नाम समराशिद्रेष्काणनवांशे यदि तत्काले चंद्रः तदा प्रथमद्रेष्काणे द्व्यक्षरं द्वितीये द्रेष्काणे चतुरक्षरं तृतीये षडक्षरं नाम। द्वितनौ द्विस्वभावद्रेष्काणनवांशे यदि चंद्रः द्विनाम

चौरस्य पूर्वोक्तनाम समेपि द्वितनौ द्विनामविषमाक्षरैरेव प्रथमद्रेष्काणे त्र्यक्ष त्र्यक्षरं द्विनाम माधवगोविन्देति । एवं द्वितीयद्रेष्काणे मिथुनधनुषोरेकतमस्य त पंचाक्षरैर्द्विनाम भवानीदासेत्यादि । तृतीयद्रेष्काणे सप्ताक्षरैर्द्विनाम द्वारकानाथदासेति एवं कन्यामीनयोरेकतमद्रेष्काणे द्व्यक्षरं नाम हरिहरेति । चतुरक्षरं देवदत्तेति यज्ञदत्ते द्विनाम । तृतीयद्रेष्काणे षडक्षरं नाम द्विनामेति संप्रदायः । विषमौ मिथुनधनुषो समौ कन्यामीने ॥ २१ ॥

वर्गोत्तमात्मीयनवांशराशौ नवांशनाथे द्विगुणो हि वर्णः ॥ वक्रो-
च्चसंस्थे त्रिगुणो ग्रहस्य त्रिघ्नोऽसकृद्धि त्रिगुणत्वलाभे ॥२२॥ नीचा-
स्तसंस्थस्य नवांशपस्य वर्णस्य लाभेपि वदंति हानिम् ॥ नामा-
दिवर्णैः परिपाटिलब्धैस्त्रि ३ पंच ५ सप्त ७ द्वि २ चतुर्थ ४ षष्ठैः
६ ॥२३॥ द्व्यक्षरं समचरांशतोदये त्र्यक्षरं विषमचरांशसंस्थिते॥
नाम चास्य चतुरक्षरस्थिरे निश्चयादसमके षडक्षरम् ॥२४॥ आद्ये
द्वितीये त्रिचतुःपदेषु वर्णाः क्रमेणैव नियोजनीयाः ॥ विलग्नतो-
यास्तनभस्थलेभ्यः प्राप्ता यथानामनि दैवविद्भिः ॥ २५ ॥

अन्यद्विधानमाह । वर्गोत्तमेति । स्वनवांशे स्वगृहे वर्गोत्तमे वा नवांशनाथे ये नवांशवर्णाःप्राप्तास्तेषां नवांशाधिपानां वर्गोत्तमादिलक्षणे प्राप्ते सति तेषां वर्णानां द्विगुण कार्यम् । यथा मेषस्य प्रथमनवांशे चन्द्रः तेन चन्द्रेण सिंहस्यांतिमो नवांशवर्णो वेधि तेनैव धनूराशेरंतिमास्त्रयो वर्णाः प्राप्ताः कतटाः नवांशवेधवर्णा अमी । यदि भौमो व त्तमादिलक्षणणे यत्र कुत्रापि राशौ तिष्ठति तथापि ककारद्वयं प्राप्नोति एवं गुरुत्व ततो बुधात्तु तटठौ वक्रोच्चस्थे सति त्रिगुणा वर्णाः । अथ द्वयोर्द्रेष्काणवेधे ष प्राप्तं द्रेष्काणवेधे द्वाभ्यां द्रेष्काणवेधः । एकस्मिन् द्रेष्काणे चंद्रे द्वयोर्द्रे णयोः षड्वर्णाः अत्रापि द्विगुणत्वम् । ततस्तृतीयप्रकारेऽपि एकस्मिन् चरनवांशे तदा चतुर्णां चरराशीनां चंद्रनवांशसमवर्णा ग्राह्याः । यथा मेषस्य प्रथमेंशे तद्वशान्मेषकर्कटतुलामकराणां चरवर्णा लब्धा भवंति । तत्र प्रथमनवांशवर्णाः । ककारो हिबुके यकारस्तुले चकारो मकरे पकारः । एते चत्वारो वर्णा लब्धा स्थिरराशिषु चायमेव विधिः । द्विस्वभावचतुर्ष्वपि द्वित्रिगुणत्वं पूर्ववदेषामपि ॥ २ अथ प्राप्तवर्णानां ह्रासमाह । नीचास्तेति । प्राप्ताक्षरनवांशपो यदि नी ष्ठति अस्तमितो वा तदक्षरं नाशमुपयाति शेषवर्णैः शोध्यक्षेपविशुद्धैः पारि लब्धैः नाम साधयेत् परिपाटिलब्धैः पश्चादुक्तैर्विषमसमनवांशक्रमैः ॥ २ अन्यदाह । द्व्यक्षरमिति । समराशौ चरांशौ चरांशोदये द्व्यक्षरं नाम साध्यम् । विषम राशिनवांशोदये त्र्यक्षरं नाम । समस्थिरनवांशोदये चतुरक्षरं नामां निश्चयाद्वदेत् । वि

राशौ समनवांशोदये षडक्षरं नाम युग्ममपि द्विमूर्तिभे त्र्यक्षरं भवति पंचमाक्षरं द्विस्वभावविषमे समेऽथवा युग्मनाम च चतुः षडक्षरं समद्विस्वभावराशौ चरांशोदये त्र्यक्षरं नाम भवति । विषमद्विस्वभावराशौ चरांशोदये पंचमाक्षरं द्विनामास्ति द्विस्वभावराशौ समें विषमनवांशोदये तदा चतुरक्षरं द्विनाम । विषमे द्विस्वभावराशौ समनवांशोदये तदा द्विनामषडक्षरं विद्यते । एसा परिपाटी ॥ २४ ॥ अथ वर्णन्यासमाह । आद्येति । विलग्नात्प्रथमनामवर्णः प्रातः सवर्णः नाम्नि प्रथमं योज्यः । चतुर्थात्प्राप्तः सद्वितीयस्थाने । सप्तमात्ततीयस्थाने । दशमाल्लब्धंश्चतुर्थे द्विगुणवर्णः त्रिगुणवर्णश्च देशविशेषनाम दृष्ट्वा योजयेत् । अथ ये कुशाग्रबुद्धयस्ते सविशेषं निरूपयन्ति ॥ २५ ॥

क्रूरक्षेत्रगते चंद्रे विद्याच्चोरस्य संभवः ॥ अवेधे सौम्यवेधे च नष्टं चौरविवर्जितम् ॥ २६ ॥ यत्संख्याः खेचरा क्रूराश्चंद्रवेधे व्यवस्थिताः ॥ तत्संख्यास्तस्करा ज्ञेयाः सहायाश्चांतराक्षरैः ॥ २७ ॥ रूपं द्रेष्काणरूपेण तस्करस्य प्रजायते ॥ द्रेष्काणक्रमतो ज्ञेयाः कुशमध्यबलाधिका ॥ २८ ॥ पंक्तियुक्त्या लिखेद्वर्णान्संख्यया-ष्टोत्तरं शतम् ॥ सर्पाकारो भवेद्वेधस्तेन नामानि साधयेत् ॥ ॥ २९ ॥ उदयास्तमये द्रव्यं चौरनाम रसातले ॥ दशमे च धनस्थानमेवं नामत्रयं भवेत् ॥ ३० ॥ वर्गांशकात्तु भूमानमष्टहस्तनिवर्त्तनम्ं अधक्रोशं तथा क्रोशं द्विक्रोशं योजनादिकम् ॥ ३१ ॥ दंडाहः पक्षमासर्तुषण्मासाब्दाः शुभाधिके ॥ वर्गाक्षरगते चंद्रे वर्णश्चैकांतरक्रमात् ॥ यदुक्तं पुस्तकेंद्रेण ज्ञानं तत्कालचंद्रतः ॥ ३२ ॥ एतत्सर्वं मयाख्यातमवस्थादिपरिस्फुटम् ॥ येन ज्ञानेन सर्वाणि सत्यतां यांति भूतले ॥ तत्कालचंद्रजं ज्ञानं भणितं स्तेयहेतवे ॥ ३३ ॥ इति प्रथमपरिच्छेदस्तुंबुरावर्ते ॥

अथ चौरचौराहृते नष्टज्ञानोपायमाह । क्रूरक्षेत्रगतेति । यत्र कुत्रचिद्राशिद्रेष्काणनवांशाक्षरगते चन्द्रे ज्ञाते सति सवर्णश्च क्रूरस्य भवति तदा चौरेणापहृतम् । क्रूरग्रहवेधगते चन्द्रे चौरेण वस्तु हृतम् । अवेधपापग्रहवेधरहिते सौम्यवेधे सौम्याक्षरगतेऽपि चन्द्रे चौरेणापहृतम् । किंतु क्रूरक्षेत्रवर्णगे चन्द्रे पापविद्धे चौरविवर्जितं नष्टं वस्तु ज्ञेयम् ॥ ॥ २६ ॥ यत्संख्येति ॥ चंद्रगृहांतरगैः क्रूराक्षरैः तत्संख्याः चौरस्य सहाया अन्तरे मिलिताः ॥ २७ ॥ रूपमिति ॥ यस्मिन्द्रेष्काणे नवांशे चन्द्रस्तस्य द्रेष्काणस्य तद्रूपं यद्रूपं चौरस्य ज्ञातव्यम् । षट्त्रिंशद्रेष्काणानां रूपं यवनादिभिः कथितमस्ति ॥ द्रेष्का-

णक्रमतः कृशमध्या ज्ञातव्याः । यो द्रेष्काणपतिस्तस्यैव कृशमध्यबलाधिकत्वम् ॥ २८ ॥ पंक्तियुक्त्येति ॥ अस्य व्याख्यानं पूर्वमेव व्याख्यातम् ॥ २९ ॥ नामसाधने विधिमाह उदयास्तेति । पश्चादुक्तं नामसाधनं नरपतिजयचर्याकर्तुरुदयास्तमये द्रव्यमित्यस्य श्लोकस्यार्थोवगंतव्यः । द्रेष्काणवृद्धया प्रवदन्ति नामेत्यादयः श्लोका मयोक्तास्चतु-श्चराणां वर्णैः स्थिराणां वर्णैः स्थिराणां चतुर्णां वणः द्विस्वभावादिकानां चेति चरादि राश्यश्चतुर्ष्वेव केन्द्रस्थिता भवंति ॥ तत्रोदयास्तमययोर्यावन्तो नवांशवर्णाश्चंद्रवेधे प्राप्य तैर्वर्णैस्तु नाम साधयेत् ॥ चतुर्थराशिनवांशवर्णैश्चौरनाम साधयेत् ॥ दशमराशेर्नवांश वर्णाश्चंद्रवेधे प्राप्यन्ते तैर्वर्णैस्तु स्थाननामतस्तस्मिन् स्थाने धृतमस्ति ॥ ३० ॥ वर्ण शकादिति ॥ ३१ ॥ अथ वस्तुप्राप्तिः अप्राप्तिर्वा ॥ प्राप्तव्यवस्तुनःकालमाह ॥ दंडाहेति । यद्वर्गवर्णगश्चंद्रस्तस्य वर्गस्य यः कालः स कालो वाच्यः । क्रूरवर्गाक्षरेण ज्ञातं वस्तु चौरहृतं तेन अवर्गेण दिनं कवर्गेण पक्षः पवर्गेणाब्दाः तेन किं शुभग्रहयुते चन्द्रे दृष्टे प्राप्तव्यम् । क्रूरग्रहयुते दृष्टे न प्राप्तिः ॥ तेन किं शुभपापयोर्बलाबलं पापग्रहबलाधिक्यात् तत्र प्राप्तव्यं शुभाधिक्ये प्राप्तव्यमिति ॥ लग्ननवांशकाद्यावत्संख्ये चन्द्रस्तावत्संख्य कालस्य एकः पक्षः अपरः पक्षः वर्णाश्चैकांतरक्रमात वर्गस्य नवांशवर्णानां मध्ये यावद्वर्णाक्ष चन्द्रस्तावत्संख्या लाभो वा पुस्तकेंद्रेणेति पुस्तकानमिंद्रः नरपतिजयचर्यापुस्तकं यत्तस्येंद्र अत्र तदुक्तं तत्र प्राप्तम् अयमर्थस्ताजककारेणापि प्रोक्तः कुत्रापि द्वितीयः पाठो दैशि केंद्रेणेति दैशिको ज्योतिषी दैववित् तेन यदुक्तं स च कालः ॥ ३२ ॥ एतत्सर्वमिति ॥ ३३ ॥ इति प्रथमपरिच्छेदस्तुंबुरावर्ते ॥

**अश्विन्यादींदुभुक्तानि भानि षष्टिहतानि च ॥ स्वभुक्तनाडी-संयुक्तं द्विघ्नं नंदयुतं त्रिधा ॥ दिनेंदोर्भुक्तभागादि जायते चेष्ट-कालिका ॥१॥ दिनेंदुभुक्तभागादि जायते चेष्टकालिकः ॥ उद-यादिष्टनाड्यस्तु षड्गुणास्तत्र योजयेत् ॥ त्रिंशद्भागाप्तराश्या-दिश्चंद्रस्तत्कालसंभवः ॥ २ ॥ शशांकवत्सर्वखेटान्कुर्यात्तत्काल-सम्भावान् ॥ तत्कालराशिनक्षत्रे द्रेष्काणे च नवांशके ॥ ३ ॥**

अथ गणितमाह ॥ तत्कालकरणमाह । अथातः संप्रवक्ष्यामि तत्कालेन्दुपरिस्फु-मित्याद्यारभ्य राजावस्थादिकौतुकपर्यन्तं एषामर्थानां प्रकटीकरणेऽसमर्थाः सर्वे वयं तथापि व्याख्यायंते प्रकरणवशात् अथैषां व्याख्याने व्याख्यायते मूलसूतश्चंद्रस्तस्य तत्का-करणमाह अश्विन्यादीति । लाभालाभादिप्रश्नकाले उदयादिघटिकाः साध्यास्तत्का-च ततस्तत्कालदिने यवंति नक्षत्राणि चन्द्रेण भुक्तानि भवंति तानि षष्ट्या गुणित कार्याणि ॥ स्वभुक्तनाडीसंयुक्तमितितात्कालेष्टघटीपर्यन्तं वर्तमाननक्षत्रस्य याव घटिका भुक्ता भवंति ताभिर्घटिकाभिर्युक्तानि षष्टिगुणितानि नक्षत्रस्य यावत् घटिका भुक्ता भवंति ताभिर्घटिकाभिर्युक्तानि षष्टिगुणितानि नक्षत्राणि तत्संख्य घटिका चन्द्रभुक्तिर्ज्ञेया ॥ अनेन प्रकारेण भुक्तघटिकाः द्वादशारे च का

अहिबलचक्रे च सर्वत्र तत्कालकरणे भुक्तघटिकाः सप्तविंशतिभिर्गुणिताः षष्ट्या पुनर्विभजेद् भुक्तनक्षत्राणि लभ्यते तानि सप्तविंशतिभिः शेषयेत् शेषभुक्तं भोग्यं भोग्यचन्द्रो वर्तते ॥ अत्र प्रकरणे कर्तव्यमाह ॥ स्वभुक्तनाडिसंयुक्तं द्विघ्नं नवहृतं त्रिधा ॥ स्वभुक्तनाडिसंयुक्ते सति यावत्संख्याका नक्षत्रस्य याता घट्यस्ता द्विगुणितास्ताभ्यो नन्देन ९ लब्धभागाः शेषं षष्ट्या संगुण्य लब्धाः कलाः शेषात्पलानि त्रिधा फलं ग्राह्यम् अत्रोपपत्तिः ॥ सप्तविंशतिनक्षत्राणां विंशत्यधिकं षोडशशतं घटिकाः १६२० द्विघ्नं ३२४० चत्वारिंशदधिकं द्वात्रिंशच्छतं असान्नंदहृताः प्राप्ता भगणाः ततः अहोरात्रघट्यः षड्गुणिताः भगणा भवंति ॥ अतः षड्गुणितास्तत्र युज्यंत इति तात्कालिककरणेऽस्मिन्नुपपत्तिः अंशेभ्यस्तत्र त्रिधा फलं उदयादिष्टघटिकाः प्रश्न तजाः षड्गुणितास्त्रिधा फलमध्ये त्रिंशस्थाने योजितास्त्रिंशता विभज्य लब्धा राशयो द्वादशभिः शेषिताः एवं कृते राश्यादिकश्चन्द्रस्तात्कालिको भवति ॥ तत्र पुनः कर्तव्यता ॥ तत्रांशः षष्ट्या गुणिताः राशीनपास्य कलायुता द्विशत्या भागे २०० लब्धांशाः एवं कृते अंशजश्चन्द्रो नवांशस्थो जातो भवति ॥ १ ॥ अथ विचारः ॥ दिनेंद्विति ॥ २ ॥ शशांकवदिति चन्द्रवत्सर्वखेटाः यदि तत्कालजा न क्रियन्ते तदा पश्चादुक्तम्। क्रूरविद्ध विद्धो वा चन्द्र इति वचनात् असमर्थः भवति। राश्यादिचन्द्रात् उक्तप्रक्रियया नक्षत्रस्य ज्ञातव्यं चरणम् अथ कस्मिन्नक्षत्रचरणे चन्द्रः कस्मिन्नवांशे कस्मिन्द्रेष्काणे वा इत्याकांक्षया करणम्। राशयस्तत्कालचन्द्रस्य त्रिंशद्गुणाः तत्रांशा युताः अंशाः षष्ट्या गुणिताः अधःकलायुताः आभ्यः कलाभ्योऽष्टशेत ८०० भागे लब्धानि भुक्तनक्षत्राणि शेषकलाभ्यो द्विशत्या भागमपहृत्य वर्तमाननक्षत्रस्य भुक्तचरणाः शेषं तत्कालवर्तमाननक्षत्रस्य चरणाःएवं कृते चन्द्रे ज्ञातेस्मिन्नक्षत्रे नक्षत्रचरणे वर्तते चन्द्रः। अथ नवांशज्ञानम्। भुक्तराशीनपास्य अंशास्त्रिंशाद्याः षष्ट्या गुणिताः ६० कलायुताः कलाभ्यो द्विशत्या २०० भागमपहृत्य लब्धं भुक्तनवांशाः शेषं तत्कालवर्तमाननवांशस्य कलाः। अथ द्रेष्काणज्ञानम्। नवांशज्ञानोपर्येंशस्य कलास्ताभ्यः ६०० भागमपहृत्य द्रेष्काणा लभ्यन्ते शेषं वर्तमानद्रेष्काणकलाः ततोवस्था निरीक्षयेदिति। अथावस्थाज्ञाने उपायो लिख्यते। अत्रावस्थाज्ञानोपायो न प्राप्तः। अथ संहितायां श्रीपतिः। "राशौ राशौ द्वादशेंदोरवस्थाः प्रोक्ताः कैश्चित्सूरिभिः शेषिताद्या" इति। तत्र अवस्था द्वादश। प्रवासाख्या १ च नष्टाख्या २ मृताख्या ३ च जया तथा ४ ॥ हास्या ५ रति ६ स्तथा क्रीडा ७ सुप्ता ८ भुक्ता ९ ज्वरा १० तथा ॥ कंपिता ११ सुस्थिरा १२ राशौ राशौ मेषादयः क्रमात्। मेषे द्वादशावस्था वृषे च मिथुनादावपि तत्र चन्द्रस्य तत्कालभुक्तराशीन् अपास्य वर्तमानराशिकलासार्धशतेन १५० भागमपहृत्य भुक्तभोग्यावस्था लभ्यते। अथोदाहरणम् शके १४४१ समये वैशाखशुक्ले ५। २४। ५० मृ. २० चन्द्रवासरे। अथ द्वादश १२ घटिकोपरि तत्कालचन्द्रकरणं तत्काले मृगशिरोनक्षत्रस्य प्रभुक्तघटिका द्विपंचाशत् ५२ भुक्तनक्षत्राणि

चत्वारि ४ षष्टिहतानि जातानि २४० मृगशिरोघटिकायुक्तानि २९२ द्विघ्नानि ५८४ नवे
ह्वतानि त्रिधाफलं त्रिंशांशादित्रिधा ६५ । ५३ । २० तत्कालेष्टघटिका १२ षड्गुण्याः
प्रथमागतात्रिधाफलं अंशेषु दत्ता जाताः १३६ ५३२० अंशेभ्यस्त्रिंशता भक्ते राश्यादि
श्चन्द्रः ४ । १६ । ५३ । २० तत्काले सिंहराशौ चन्द्रः । अथ कस्मिन्नक्षत्रे अथ चन्द्रक
८२ । १३ । २० आभ्योष्टशतभागे लब्धनक्षत्राणि २० शेषं २२३२० शेषात् लब्धं
फाल्गुन्या द्वितीयचरणे चन्द्रः । अथ द्रेष्काणज्ञानम् । अथ तत्काले राशिमपास्य वर्तमा
राशिकलाः २० । १३२० । षट्शतैः ६०० भागमपहृत्य लब्धं प्रथमद्रेष्काणा
द्वितीयद्रेष्काणे वर्तते चन्द्रः सिंहे द्वितीयद्रेष्काणे धनुषः तदधिपो जीवः । अथ नवांश
कलाभ्यो द्विशत्या २०० भागे लब्धनवांशाः पंचषष्ठे नवांशे वर्तते राशिनक्षत्रद्रेष्काणनवां
वस्थाभ्यो बलाधिकावस्था नवांशभवाःतद्वशान्नवांशावस्था आनीयन्ते एवं निरूपिते राशिधि
द्रेष्काणानाम तावेस्था सर्वाः एकमार्गगाः नवांशावस्था भिन्नाः ॥ ३ ॥

एताश्च द्वादशावस्था शशांकस्य दिनेदिने ॥ शुभाशुभेषु कार्येषु फलं नामानुसारतः ॥ ४ ॥ यथोत्तरबलाऽवस्था राशिद्रेष्काण-जांशकाः ॥ तस्मात्सर्वप्रयत्नेन भागावस्थां निरीक्षयेत् ॥ ५ ॥ नवांशकाः अमी भव्या हयकर्कितुलाझषाः ॥ वृषसिंहोद्भवा मध्याः शेषाः स्युर्मृत्युदायकाः ॥६॥ स्वक्षेत्रे स्वांशकावस्था शुभ-दृष्टाथवा युता ॥ शुभमध्यगतश्चंद्रः सर्वकार्येषु शोभनः ॥ ७ ॥ शत्रुक्षेत्रांशनीचस्थः क्रूरदृष्टोऽथवा युतः ॥ क्रूरमध्यगतश्चंद्रः स च हानिकरःस्मृतः ॥८॥ लग्नांबुसप्तमध्यस्थो भवेत्क्रूरग्रहो विधोः ॥ आत्मनो बंधुवर्गस्य जायायाः कर्मणः क्रमात् ॥ विनाशो जायते शीघ्रं तद्वेलाकर्मकारकः ॥ ९ ॥ एवं शुभग्रहश्चंद्राद्यदा भवति केंद्रगः ॥ आत्मबंधुकलत्राणां कर्मणश्च तदा जयः ॥ १० ॥ षष्ठा ६ ष्ट ८ मांश १२ गाः सौम्याः पापाः केंद्रांत्यवित्तगाः ।१। ४ । ७ । १० । १२ । २ ॥ चंद्रात्प्रयत्नतस्त्याज्या अन्यत्रैव तु शोभनाः ॥ ११ ॥

एताश्चेति ॥ ४ ॥ ५ ॥ नवांशेति सर्वावस्थाभ्यो राजाऽवस्था ग्राह्यास्ताभ्यःफल
दिषु । अथ नवांशानामुत्तमाधमज्ञानमाह । हयो धनुःकर्कराशिःतुला तुलाराशिःझषो
राशिः एषां राशीनां नवांशा भव्याः शुभाः सर्वकार्यसाधनक्षमाः वृषसिंहोद्भवा

शेषांशा अधमा मृत्युदायकाः मेषमिथुनकन्यावृश्चिकमकरकुंभनवांशा अधमाः एषामेकतमस्थे चन्द्रे न शोभनः विवाहादौ शुभप्रश्ने च ग्रंथकारस्य मतमेतत् ॥ ६ ॥ अथ विशेषमाह । स्वक्षेत्रेति । स्वक्षेत्रे यदि चंद्रः स्वांशे वा तस्यावस्था वा ॥ ७ ॥ निषेधमाह । शत्रुक्षेत्रेति ॥ ८ ॥ लग्नेति । तस्मिन्काले आत्मकार्यं यः करोति स आत्मपीडां लभते । चंद्रात् बंधोर्वा पापः बंधुमित्रगृहादीनां वा कार्यं करोति । एषां पीडा भवति एवमिति एवं विशिष्टं यदि सप्तमे पापः तस्मिन्काले जायायाः कर्म करोति प्रश्नो वा तदा जायायाः हानिर्वाच्या एवं दशमे कर्मणो हानिः ॥ ९ ॥ एवमिति ॥ १० ॥ ११ ॥

चरराश्यंशके चंद्रे यात्रा भवति निश्चितम् ॥ स्थिरेषु तु भवेन्नैव द्विःस्वभावे विलंबता ॥ १२ ॥ नवांशकक्रमेणैव ज्ञेया अक्षरजा ग्रहाः ॥ तैश्चचंद्राक्षरं विद्धं रज्जुवेधे निरीक्षयेत् ॥ १३ ॥ राशिद्रेष्काणधिष्ण्यैंशे यस्य यस्याक्षरे स्थितिः ॥ तस्य तस्य फलं वक्ष्ये शशिना रज्जुवेधतः ॥१४॥ राशितोऽत्र दिशो ज्ञेया नक्षत्रात्स्थाननिर्णयः ॥ द्रेष्काणैस्तस्करा ज्ञेया द्रव्यनाम नवांशकात् ॥ १५ ॥ मूलमाग्नेयपितृभे द्विदैवतयमाह्वयम् ॥ पूर्वात्रयं च नवकमधोमुखमिदं स्मृतम् ॥ १६ ॥ पुष्यार्द्रा श्रवणो ब्रह्म वसुभं शतभं तथा ॥ उत्तरात्रितयं चैव व्योमास्यं नवकं त्विदम् ॥१७॥ पुनर्वसुर्मृगशिरः सार्पदैवतकं तथा ॥ हस्तादीनि षडक्षाणि तिर्यक्पश्यंति सर्वदा ॥ १८ ॥ कृष्णः पुमान् रक्तनेत्रो रौद्रः परशुशस्त्रभृत् ॥ प्रथमः स्त्री दीर्घमुखी लोहितांबरधारिणी ॥ स्थूलोदरैकपादा च द्वितीयः समुदाहृतः ॥१९ ॥ मेषस्य पुरुषः क्रूरःकपिलो वसुरूपधृक् ॥ दंडहस्ता तृतीयस्तु द्रेष्काणःकथितो बुधैः ॥ २० ॥ कुंचितः कचकेशा स्त्री स्थूलोदरसमन्विता ॥ दीर्घपादा वृषस्याद्यो द्वितीयः पुरुषाकृतिः ॥ २१ ॥ कलाविद्देदशकटकर्मणां कुशली स्मृतः ॥ बृहत्कायस्तृतीयस्तु बृहत्पादो नरः स्मृतः ॥ २२ ॥ स्त्रीरूपं मिथुनस्याद्यो रूपयौवनशालिनी ॥ नित्यं रजस्वला वंध्यालंकारेण कृतादरा ॥ २३ ॥ उद्यानस्थः पुमान् धन्वी द्वितीयः कवची स्मृतः ॥ पुमांस्तृतीयो

धन्वी च रत्नभूषणभूषितः ॥ २४ ॥ कर्काद्यः पुरुषो हस्ती सूकरस्य सुखः स्मृतः ॥ मध्यस्त्री यौवनोपेता सामर्षारण्यसंस्थिता ॥ २५ ॥ सर्पास्यश्च तृतीयस्तु पुरुषः सर्पचेष्टितः ॥ सुवर्णाभरणो नौस्थद्रेष्काणः कथितो बुधैः ॥ २६ ॥ सिंहाद्यः श्वा जंबुकास्यो गृध्रास्यो शाल्मलीतरौ ॥ द्वितीयः पुरुषो धन्वी नतनासः स्मृतो बुधैः ॥ नरकूर्ची तृतीयस्तु चंडकुंचितमूर्धजः ॥२७॥ गुरोःकुलं वांछति कन्यका स्त्री कन्या दृकाणःप्रथमःप्रदिष्टः॥ पुष्पप्रपूर्णेन घटेन पिष्ठा नीलांबरैवं मुनिभिः प्रदिष्टः ॥२८॥ श्यामो द्वितीयः पुरुषो दृकाणो विस्तीर्णवक्षो धृतलेखनीकः ॥ धन्वी तृतीयो युवतिस्तु गौरी देवालये कुंभदुकूलहस्ता ॥२९॥ तौली तुलायां पुरुषो दृकाणो वीथ्यापणस्थः पुरुषो द्वितीयः ॥ कुंभः करे गृध्रमुखो बिभर्ति कंदर्पमूर्तिः पुरुषस्तृतीयः ॥ ३० ॥

अथ यात्रायां प्रश्नः । चरेति ॥ १२ ॥ अथान्यत् । नवांशेति । अथैषां व्याख्या... ...त्र कर्तव्या वर्तते । यस्य राशिनवांशे तत्कालग्रहो भवति यस्य नवांशकस्य यो वर्णस्त... दक्षरगहस्य शुभस्य वा क्रूरशुभाक्षरगेन ग्रहेण तत्काले चंद्रो विद्धश्चेद्भवति रज्जुवे... सर्पाकारवेधे तत्फलं वाच्यमिति । राशिद्रेष्काणधिष्ण्यंशे यस्य यस्याक्षरे स्थित इति कस्य राशेरक्षरे चंद्रः धिष्ण्यस्य वा नवांशस्य वा तस्य तस्य फलं वाच्यम् ॥ १३ ॥ १४ ॥ तत्कालं फलयति । राशित इति । शाके १४४१ समये वैशाखसुदि तत्कालीकृतश्चंद्रोयं ४ । १६ । ५३ । २० सिंहराशिरत्र प्रश्ने लाभादौ हृतनष्टादौ सिंहराशितो ज्ञातं नष्टं वस्तु प्राग्दिशि जातं लाभप्रश्ने प्राग्दिशि लाभः गमनप्रश्ने ग... मनं चौर्यप्रश्ने सिंहस्य षष्ठे नवांशे स कन्याया नवांशः रज्जुवेधे वेधेत प्रासष्टकार... टकारो बुधवर्गवणः शुभक्षेत्रे चंद्रः न चौरेण हृतं लाभप्रश्ने लाभः यतः शुभा... नक्षत्रे स्थाननिर्णयः पूर्वफल्गुनीनक्षत्रे चंद्रो विद्यते तेन हृतनष्टवस्तुनः स्थानं नक्ष... द्वदति शास्त्रकाराणां मतम् । अधोमुखनक्षत्रं नष्टं वा हृतम् वस्तु यत् तद्भूमौ निर्ग... तमस्ति मूषकप्रचारभूमौ । एवं स्थाननिर्णयः । अथ येन हृतं येन चौर्येण तस्य रूपम् सिंहस्य द्वितीयो द्रेष्काणः तद्रूपेन चौरेणापहृतं सिंहद्वितीयद्रेष्काणरूपं पुरुषो नता... नासः । द्रव्यनाम नवांशकात् व्याख्येयमस्ति । प्रकरणवशात नक्षत्रात्स्थाननिर्णये ऊर्ध्वमुखनक्षत्रे ऊर्ध्वं वस्तु धृतमस्ति अधोमुखनक्षत्रे भूमौ निखातमस्ति तिर्यङ्मुख... नक्षत्रे समस्थाने वस्तु धृतम् ॥ १५ ॥ तथा च । मूलमिति ॥ १६ ॥ १७ ॥ १८ अथ द्रेष्काणरूपमाह । कृष्ण इति ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ उद्या... इति ॥ २४ ॥ २५ ॥ २६ ॥ सिंहाद्य इति ॥२७॥ गुरोः कुलमिति॥२८॥तौलीति ॥ ३०

स्थानच्युता सर्पनिबद्धपाला कांता विवस्त्रा प्रथमो दृकाणः॥ कीटस्य मध्ये युवती सुरूपा भर्तृक्षता सर्पशरीरयष्टिः ॥ सा वांछति स्थानसुखं तृतीय एता दृकाणश्चिपिटास्ययुक्तः॥ ३१ ॥ धनुषः पुरुषो धन्वी प्रथमः स्याद्द्वितीयकः॥ गौरवर्णस्तृतीयस्तु दंडी कूर्ची बृहत्पुमान् ॥ ३२ ॥ मृगादिमो रोमशगात्रयष्टिः स्थूलद्विजो रौद्रमुखो धनुष्मान् ॥ द्वितीयकः श्यामललोहवर्णोऽलंकारयुक्ता युवतिर्दृकाणः ॥ तृतीयकस्तस्य पुमान् सतूणो धन्वी तथा दीर्घमुखः प्रदिष्टः॥ ३३ ॥ कुंभाद्यः पुरुषो गृध्रतुल्यवक्रः सकंबलः॥ मध्यो रक्ताम्बरा जाया श्यामांत्यो रोमकर्णधृक्॥ ३४ ॥ मीनाद्यः पुरुषो नौस्थो गौरांगी वरस्थिता ॥ झषस्तृतीयः पुरुषो नग्नः सर्पावृतांगकः॥ ३५॥ इत्यादि स्वयमप्यूह्यं द्रव्यनाम नवांशकात् ॥ ग्रहदृष्टिवशाद्वर्णाः संख्या भुक्तिप्रमाणतः ॥ ३६ ॥ जीवज्ञशशिभिर्जीवं धातुपातार्किभूसुतैः॥ मूलमादित्यशुक्राभ्यां मिश्रैर्मिश्रं विनिर्दिशेत् ॥३७॥ इति चंद्रे ग्रहैर्दृष्टे कार्यो द्रव्यस्य निर्णयः॥ बलाधिकेन निर्देशः कर्तव्यो मिश्रीते ग्रहे ॥ ३८ ॥ सजीवं जीवचंद्राभ्यां निर्जीवं बुधवीक्षणात् ॥ धाम्याधाम्यं क्रमाद्द्वियाद्धातुं पातार्किभूसुतैः॥३९॥ मूलमादित्यशुक्राभ्यां शुष्काशुष्कक्रमेण च ॥ मिश्रं मिश्रैर्वदेद्द्रव्यं तत्कालेंदुनिरीक्षणात् ॥ ४० ॥

स्थानच्युतेति ॥ ३१ ॥ धनुष इति ॥ ३२ ॥ मृगादिम इति ॥ ३३ ॥ कुंभाद्य इति ॥ ३४ ॥ मीनाद्य इति। इत्यादिद्रेष्काणरूपैर्यथायोग्यसंभवैः तस्कराणां रूपं ज्ञेयं तेन किम्, मीनाद्ये द्रेष्काणरूपे पुरुषो नौस्थ इति घटते स्त्री गौरांगी नौस्था इत्यपि घटते। इति यथा संभवति। असंभवस्तु कुंभाद्यः पुरुषो गृध्रवक्र इति न घटते ॥ ३५॥ इत्यादीति। नवांशवर्णैर्नाम साधयेत् वर्णसंख्या पुनर्ग्रहदृष्टिवशात् । यया दृष्ट्या यो ग्रहः पश्यति चन्द्रं तद्दृष्टिवशाद्वर्णवृद्धिः। एकपादेन एक एव द्विपादेन द्वावेवमादि। अक्षरात्कालनिर्देशः। अवर्गादीनां यः कालः स तद्वर्णवशात्कालः कपक्षेण च मासेनेत्यादि। नामरज्जुप्रबन्धतः। रज्जुवेधेन न्यायाक्षराणि लभ्यंते तैर्नाम साधयेत् नामसाधनं प्रागेवोक्तम् ॥ ३६ ॥ अधुना द्रव्-

नष्टचिंतितद्रव्याण्याह । जीवज्ञेति । तत्कालचन्द्रो यस्मिन् राशौ तत्र द्वादशारचक्रे ग्रहदृ
न त्वन्यत्र । हृतनष्टाद्युदिते प्रश्ने तत्कालचन्द्रं राशिनवांशगतां ग्रहदृष्टिं च विचारयेत् ।
बलाधिकः पश्यति तद्हृतद्रव्यं विनिर्दिशेत् । जीवज्ञशशिभिरेकतमैः सर्वस्माद्बलिभिर्दृष्ट
जीवं विनिर्दिशेत् । सर्वस्मद्वा बलिनि चन्द्रे विशेषेण जीवं द्वाभ्यां चैव विशेषेण वदेत् हृते
मुष्टौ चिंतायां सति । एवमपरग्रहैर्बलवद्भिर्दृष्टे ॥ ३७ ॥ ३८ ॥ अतो धातुजीवमूलं त्रया
विस्तारमाह । सजीवमिति । प्रथमं समुदायेनोक्तं जीवशशिभिर्जीवमित्यादिसजीवमित्येव
फलयति जीवचन्द्राभ्यामेव दृष्टे चन्द्र जीवं प्राणसहितं जीवं वदेत् । चिंतायां पुष्ये वा
वा नष्टशब्देन मूलकमुच्यते । केवलेनैवं च बुधेन दृष्टे चन्द्रे निर्जीवं जीवं विनिर्दिशेत् ।
धाम्याधाम्यं धातुपातार्किभूसुतैः । आर्किभूसुतैर्धाम्यम् । राहुणा दृष्टे अधाम्यं । सुवर्ण
सुवर्णरौप्यताम्रे वंगं रांगमित्यर्थः । नागः सीसमिति भाषा अत्र नामवंधेन विशेषः का
॥ ३९ ॥ ४० ॥

द्विपदः स्त्री तुलायुग्मे ६ । ७ ३ चापे ९ कुंभे ॥११॥ पदोनितः॥
बहंघ्री मीन १२ कर्की ४ लौ ८ शेषेष्विदौ चतुष्पदः ॥ ४१ ॥
चतुर्धा द्विपदा ज्ञेया देवनृयक्षराक्षसाः एवं मेषाधिके चंद्रे ज्ञातव्यं
च भ्रमत्रये ॥ ४२ ॥ मेषसिंहहये देवा वृषस्त्रीमकरे नराः ॥
नृयुकूतुलाघटे यक्षाः कर्कालिझषभे सुराः ॥ ४४ ॥ अपदानेक-
पादाश्च द्विधा स्थलजलोद्भवाः ॥ ते च राशिस्वभावेन ज्ञातव्या
येत्रगाः पशोः ॥ ४४ ॥ हेमं तारं च ताम्रं च वंगं नागारलो-
हकम् ॥ रंगं कांस्यं च विज्ञेयं नवांशकक्रमेण च ॥ गुल्मवल्ली
तथा कंदं मेषाद्येकैकसंस्थिते ॥ ४५ ॥

अधुना जीवयोनिं प्रस्तारयति । द्विपद इति । यदि तत्कालचन्द्रः कन्यानवांशे तुला
मिथुननवांशे राशौ वा तदा द्विपदयोनिश्चितायां मूके च मुष्टौ असंभावना । धनुषि
चरणरहिता जीवयोनिर्वाच्या । कर्कटवृश्चिकमीनेषु तत्कालचन्द्रे बहुपाज्जीवयोनिर्वाच
गंडगुआरिप्रभृतयःगोकीटऊर्णनाभादयः उर्णनाभो मकरीति । शेषेपु सिंह मेष
मकरेषु चन्द्रे चतुष्पदयोनिः ॥ ४१ ॥ पुनर्विशेषः । चतुर्धा इति । एवं मेषादिचन्द्र
श्लोकस्य व्याख्या न कृता असमंजसत्वात् । द्विपदस्त्रीतुलायुग्ममस्य श्लोकस्यार्थेन महद्भिः
आलस्याद्वा । ग्रंथार्थो वा न ज्ञायते ततो व्याख्या न कृता एकस्यार्थो व्याख्यायते सो
तेन व्याख्यातो भवति ॥४२॥४३॥ विशेषांतरमाह । अपदेति । तथापि व्याख्यायते ।
च क्रमेण नवाक्षरेषु चन्द्रस्थित्या प्रश्नः तत्र कन्यातुलामिथुनाद्द्विपदाः मनुष्या नान्ये न दे
पक्षिणः न वा राक्षसाः । एकराशिषु द्विपदप्रश्नः द्विपदेष्वयं विशेषो देवादयः अस्मिन्
रोगप्रश्ने चन्द्रे स्थिते नकपवेधेन देवादयः एषु राशित्रयेषु सर्वेषां राशीनां नवांशका ज्ञेयाः ४४ ॥

पत्र पुष्पं फलं मूलं, त्वचं त्रिंशांशके विधौ ॥ जातिविप्राधिकारी स्त्री अन्त्यजास्तस्कराः क्रमात् ॥ ४४ ॥ सूर्यादिगृहगे चन्द्रे चिन्तितः पुरुषो भवेत् ॥ सूर्यादिवेश्मगे चन्द्रे कुष्टं लांछनलोहकम् ॥ ४७ ॥ मशकं तिलकस्फोटं चौरस्य निर्दिशेत् ॥ गौरोऽतिगौरः श्यामश्च कृष्णो मर्कटसंनिभः ॥ ४८ ॥ चन्द्रे त्रिंशांशका वर्णा मानवानां विलोमतः ॥ ग्रहदृष्टिकृता वर्णास्ते च वर्णाः पुरोदिताः ॥ ज्ञातव्या सर्ववस्तूनां मुष्टौ वा चिन्तितेपि वा ॥४९॥ इति वेधतुम्बुरावर्ते द्रेष्काणादिज्ञानम् ॥

पत्रं पुष्पमिति । इत्यादयः श्लोका न व्याख्याताः । अत्र प्रकरणे वस्तूनां नामवेध एव मूलम् । विशेषताश्चिंतितस्य नष्टस्य वा चौरस्य वा नामवर्णज्ञानं वेधफलम् । अत्र वेधे योनीनां यः प्रस्तारविस्तारः कृतस्तस्य श्लोकार्थस्य परिच्छेद एव न भवति । अधुना नष्टद्रव्यस्य चौरस्य नामधेयपरिश्रमः क्रियते । अथ प्रश्नः केनापि कृतः मम किं वस्तु नष्टं चौरेण वा गृहीतं कुत्र वा चौरेण धृतमस्ति तत्र कर्तव्यता । शाके १४४१ समये वैशाखशुक्ल ५ पंचम्यां चंद्रवासरे घटिका १२ द्वादशदिनादौ केनापि प्रश्नः कृत, तत्र तत्कालचंद्रः ४ । १६ । ५३ । २० ॥ सिंहे चंद्रः धनुपो द्रेष्काणे चन्द्रः कन्यानवांशके चंद्रः प्रथमः तस्तु राजावस्थायिकौतुकं केनापि प्रश्नः कृतः राजा किं करोतीति प्रश्ने कन्यानवांशे चंद्रग्रंथकारस्योक्तिः नवांशावस्था ग्राह्या तत्रैकस्य नवांशस्य कलाः २०० आसां द्वादशांशः षोडश १६ । ४० कलाश्चत्वारिंत् विकला अत्र वर्तमानसप्तदशमः अंशः पंचमो नवांशः तस्य पंचमांशोनकलाः सप्तदश वर्तते॥ १३ । २० एका द्वादशांशकला तेन किं कन्याप्रथमावस्थायां चंद्रः रतावस्थश्चंद्रो ज्ञातः । यस्य राज्ञो मेषराशिः सोपि तत्काले मेषप्रथमावस्थायां प्रवासाख्यायां राजा वर्तते प्रवासस्य कोर्थः स्वस्थानादन्यत्र कुत्रापि चलित इति ज्ञातो राजा यात्रायां च रतावस्थचंद्रस्य फलम् । अथवा यस्य मीनराशिः स मीनाद्यावस्थायां वर्तते मीनस्याद्या भुक्तात्रावस्था भोजनं कुर्वन् राजा आसीदिति कौतुकम् । अत्रापि नामसंबंधेनावस्थानयनम् । अथ नष्टं वा चौरेण हृतं वा तत्करणोदाहरणम् । सिंहे तत्काले कन्यानवांशे चंद्रः द्वितीयद्रेष्काणे धनूराशेः चंद्रे गुरुदृष्टिः । अथ द्वादशारचक्रं तत्र द्विपादेन रविशुक्रौ त्रिपादेन शनिरा चंद्र एकेन । तत्र कन्यायाः प्रथमनवांशो मकरः शनिगृहं शनिवर्गाक्षरे चंद्रः प्राप्तस्तीयोप्यकारः क्राक्षरे चंद्रः क्रूरवेधोपि न रज्जुवेधचक्रे तत्कथं रज्जुवेधचक्रे सिंहस्यांतिमाक्षरेण धकारेण विध्यतेऽयकारः तुलाराशिरंतिमाक्षरेण विध्यते । सिंहतुलयोरंतिमनवांशे ग्रहाभावः । तेन किं क्रूरभे वेधरहिते क्रूराक्षरे चंद्रः नष्टं चौरविवर्जितं वस्तु ज्ञातमिति । कुत्र नष्टं तत्र सिंहराशौ चंद्रः तस्य फलं प्राच्यामरण्ये नष्टं तत्रापि चतुष्पदाधिष्ठितायां भूमौ । अथ यदि चौरेणापहृतं भवति तदा तेन कुत्र स्थापितम् इति जिज्ञासायां विचारः । तत्र पूर्वाफाल्गुन्या द्वितीयचरणे चन्द्रः पूर्वाफाल्गुनी अधोमु-

खगणः मूषकयोनिः तत्र विचारश्चौरेणारण्ये मूषकादिकुनखिनां विवरे घृतमिति वदेत् । अथ किं तद्वस्तु तन्नामकरणे उपायः ग्रहदृष्टिवशाद्योनिज्ञानं नवांशक्रमेण वा " मू- मादित्यशुक्राभ्यां धातुं पातार्किभूसुतैः " अत्र मिश्रितग्रहदृष्टिः । रविर्मेषे रविशुक्रयोर्मे- रविर्बली । रवितो मूलं भवति वस्तु । वृषे राहुः मकरे शनिः उभाभ्यां धातुर्भवति । उभयो राहुर्बली राहुणा धाम्यं लौहम् । रवितः शुष्कं मूलम् । एतावता शुष्कमूल- हितो लोहधातुः तत्र वस्तुनो जिज्ञासायां कुठारो भवति । दात्रो वा खानती वा । शिलि- काष्ठच्छेदकारी विषयं चेत्यादिस्वरूपमूह्यम् । एवं तु बुद्ध्या परिच्छिन्ना । अ- नामवेधे किमायाति । अथ नवांशकमः । मेषस्य षष्ठ इति समनवांशः । धातुर्मूलं जीव- मित्योजराशौ युग्मे विद्यादेतदेव प्रतीपम् । समनवांशत्वात् । जीवो मूलं धातुरि- गणनया षष्ठो धातुरेव । चूडामणावपि । पवर्गेण लोहं यतः शनिवर्गाक्षरे चंद्रः । अथ- न्यत् । द्वादशारचक्रं तुंबरुतुंबुरावर्तचक्रत्रयमेव । तुंबुरुचक्रे तूर्ध्वाधस्तिर्यग्दृशोग्र उच्च- ते च तत्कालचंद्रम् उच्चनीचसमगं च क्रमेण पश्यंति । अत्र सिंहस्थश्चंद्रः स्वोच- त्समस्थानस्थः अस्मिन् जीवेंद्वोरेव दृष्टिः संभवति । अत्र प्रश्ने तत्कालचंद्रं नित्यं चं- एव पश्यति नान्ये ग्रहाः इति ग्रंथकर्तुरभिप्रायः । सर्वग्रहदृष्टिर्बाधिता । दृग्विचारका- बलाबलकरणे च बहुव्याप्तिरिति वा तद्वशाज्जीवो भवति प्रश्नकर्तुः । तत्र स को जीवः सिंहस्थितत्वादारण्यभवः चतुष्पदः क्रूरक्षेत्रे क्रूरनखी जीवः । अत्र पूर्वव्याख्यानम- घटते नक्षत्रादिफलम् । व्याख्यानं स्वबुद्धिसामर्थ्यादेव क्रियते । नामबंधानयनं तु गुरू- पदेशबलादेव भवति । अत्रास्माकं गुरूपदेशो नास्ति तथापि यथाबुद्ध्या स्वव्याख्यानम- पूर्वापरपर्यालोचनया च चौरस्य नाम वस्तुनो वा करिष्याभि ये कृतज्ञा मत्सररहिताः सकल- व्याख्यानं दृष्ट्वाऽवशिष्टं पूरयिष्यंति शोधयिष्यंति च ॥ ४६ ॥ ४७ ॥ ४८ ॥ ४९ ॥

इति वेधतुंबुरावर्ते द्रेष्काणादिज्ञानम् ।

## ॥ भूचरखेचरचक्रम् ॥



अथभूचरखेचरचक्रं लि- ख्यते ॥ अधःस्थं भूचरं चक्रमूर्ध्वचक्रं तु खेचरम् ॥ स्थिरशीघ्रविभागेन स्था- यी यायी बलं क्रमात् ॥ १ ॥ मेषादिद्वादशारेषु वाममा- र्गेण भूचरम् ॥ तस्योर्ध्व खेचरं चक्रं सव्यमार्गेण विन्यसेत् ॥ २ ॥ ये ग्रहा राहुमार्गस्था भूचक्रे ते

व्यवस्थिताः ॥ सूर्यमार्गेण ये लग्नाः खेचराः खेचरे स्थिताः ॥ ३ ॥ भूचक्रे संस्थितैः पापैः खे चक्रे सौम्यखेचरैः ॥ यायिस्थायिबलं ज्ञेयं क्रमात्स्वरविचक्षणैः॥४॥सौम्याश्च भूचरे चक्रे क्रूराः खेचरगा यदा ॥ संहारो जायते तत्र सैन्ययोरुभयोरपि ॥ ५ ॥ भूचरस्था ग्रहा यत्र दृश्यन्ते च शुभाशुभाः ॥ यायी संहारमायाति स्थायी चार्धक्षयो जयी ६ ॥ खेचरे खेचराः सर्वे सौम्याः सौम्यगता यदा ॥ स्थायिनो बलसंवर्तो यायी भवति सक्षतः ॥ ७ ॥ खेचरे भूचरे चक्रे यदा मिश्राः शुभाशुभाः ॥ तदा मिश्रफलं वाच्यं स्थायिनो यायिनोपि वा ॥ ८ ॥ इति भूचरखेचरचक्रम् ॥

अथ भूचरखेचरचक्रम् । अधःस्थमिति ॥ १ ॥ मेषादीति ॥ २ ॥ ये ग्रहा इति ॥३॥ भूचक्रेति ॥४॥ सौम्याश्चेति ॥५॥६॥७॥८॥ इति भूचरखेचरचक्रम् ।

## पथचक्रम् ॥




अथ पथचक्रम् ॥ अश्विन्यादीनि धिष्ण्यानि पंक्तियुक्त्या लिखेद्बुधः ॥ नाडीचतुष्टये वेधः सर्पाकारपथाख्यके ॥ १ ॥ क्रूरवेधस्थिता नाडी तद्धिष्ण्येन युते दिने ॥ यात्रा युद्धं न कर्तव्यं पथचक्रफलं त्विदम् ॥ २ ॥ इति स्वरोदये प्रथमपथचक्रम् ॥

अथ पथचक्रम् । अश्विन्यादीनीति ॥ १ ॥ २ ॥ इति प्रथमपथचक्रम् ।

## द्वितीयपथचक्रम् ॥




अथ द्वितीयपथचक्रम् ॥ पथचक्रं प्रवक्ष्यामि रुयातं यद्ब्रह्मयामले ॥ येन विज्ञातमात्रेण सद्यो यात्राफलं वदेत् ॥ १ ॥ अश्वि-

न्यादि लिखेच्चक्रं रेवत्यंतं त्रिनाडिकम् ॥ सर्पाकारे च ऋक्षाणि प्रत्येकं च वदाम्यहम् ॥ २ ॥ अश्विन्यार्द्रादितिर्ज्ञेया तथा चोत्तरफाल्गुनी ॥ हस्तो ज्येष्ठा तथा मूलं शतभं पूर्वभाद्रकम् ॥ ३ ॥ प्रथमा नाडिका पश्चात् भरणीमृगशीर्षके ॥ पुष्यः सभाग्यश्चित्रा च मैत्रमाप्यं च वासवम् ॥ ४ ॥ अहिर्बुध्न्यमिति ज्ञेया द्वितीया नाडिका बुधैः ॥ तृतीया नाडिका ज्ञेया वह्निब्रह्मभुजंगमम् ॥ ५ ॥ मघा स्वाती द्विदैवत्यं विश्वं विष्णुश्च रेवती॥ग्रहसंयोगतो ज्ञेयमेतासु च शुभाशुभम् ॥ ६ ॥ यात्रिकं यत्तु नक्षत्रं नाड्यां यात्रादिभादितः ॥ यावती तावती संख्या तत्रस्थग्रहसंगुणा ॥ ७ ॥ अक्षभक्ते तु यल्लब्धं योजनं तदुदाहृतम् ॥ शेषात्क्रोशादिका संख्या विज्ञेया दैवचिंतकैः ॥ ८ ॥ भंगस्तत्र तु विज्ञेयो यात्रांशे पापखेचरैः ॥ सौम्यसंयोगतः सौख्यं विशेषेणापि तच्छृणु ॥ ९ ॥ त्रासः सूर्याद्भवेन्मृत्युः कुजात्सौराच्च बंधनम् ॥ राहुसंयोगतो भंग इति पापविनिर्णयः ॥ १० ॥ स्त्रियः समागमश्चंद्रात्कलावित्संगमो बुधात् ॥ जीवेन धार्मिकैः शुक्रात्पंडितैरुक्तमानतः ॥ ११ ॥ द्विघ्नं स्वक्षेत्रमित्रर्क्षे त्रिघ्नं वक्रे तथोच्चगे॥यात्रायां सर्वदा चिंत्यं पथचक्रमिदं बुधैः ॥ १२ ॥ इति द्वितीयपथचक्रम्

अथ द्वितीयपथचक्रम् ॥ पथचक्रमिति ॥ १ ॥ अश्विन्यादीति ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ मघास्वातीति ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ द्विघ्नमिति ॥ १२ ॥
इति द्वितीयपथचक्रम् ।

खेचरभूचरचक्रम्




॥ अथ खेचरभूचरचक्रम् ॥ खेचरं भूचरं वक्ष्ये मृगयासिद्धिदं नृणाम् ॥ ऊर्ध्वे तु खेचरं चक्रमधो भूचरमुच्यते ॥ १ ॥ पापरिष्टक्रूरैर्योगैर्मृगयासिद्धिरुत्तमा ॥ द्यूने हीनबलैः पापैर्युद्धयोगैर्बलान्वितैः ॥ २ ॥ पंचांगसंदृष्टैः स्याद्योगैः पापायगोचरैः विशेषाद्द्यूनलग्नेशौ ज्ञेयौ हेतू वदामि

तौ ॥३॥ सिद्धिर्योगे द्वयोः केन्द्रे क्लेशानर्थप्रदौ च तौ ॥ पापांशगौ कुजज्ञौ तु तल्लोपे मृगया नहि ॥ ४ ॥ सौम्यो लग्नपतिः सिद्धिः क्रूरो द्यूनपतिर्यदि ॥ जलर्क्षे जलजैःखेटैर्जलैः स्यान्मृगया स्फुटम् ॥ ५ ॥

अथ खेचरभूचरचक्रम् । खेचरमिति । अथ खेचरभूचरयोर्विषयविभागः । यस्मिन् लग्ने यात्रा मृगयार्थं तत्तस्मात्षड्राशिपर्यंतं खेचरम् । सप्तमतो व्ययपर्यंतं भूचरम् । यतो लग्नादधःस्थं चक्रार्द्धं सप्तमात् ऊर्ध्वस्थं यावत् लग्नम् । अमुमर्थं फलयति । यस्मिंल्लग्ने वक्रगा द्यूनादिस्थं भवंति ते च स्वभावमार्गगास्ते खेचरस्थाः कार्याः ॥१॥ ततो योगः । पापा इति । पापग्रहैर्यदि इष्टमुत्पद्यते तस्मिन् योगैर्यदि मृगयादिसिद्धिः । यथा । "वक्री शनिर्भौमगृहे प्रपन्नश्छिद्रे ८ ऽथ षष्ठे ६ ऽथ चतुष्टये १ । ४ । ७ । १० । वा ॥ कुजेन संप्राप्तबलेन दृष्टे वर्षद्वयं जीवयति प्रजातम्" इत्यादिपापग्रहोत्पन्नैरिष्टयोगैर्यदि मृगयायात्रा तदा सिद्धिरिति । आगमप्रमाणम् । तथा च अवमार्धप्रहरकालवेलांतं कुलि कव्यतिपातवैधृतिगंडातिगंडकुलिशादियोगजदुष्टयोगाद्यनिष्टसूचका योगाः सिद्धिदाः ॥ २ ॥ पंचांगेति ॥ तिथयो रिक्ताः अमावास्या आर्द्राभरणीमघाश्लेषादीनि नक्षत्राणि व्याघातशूलपरिघव्यतीपातयोगाः । रविभौमशयनो वाराः । करणानि विष्टिशकुनिनागगरवणिजादीनि करणानि पंचांगमिदं लग्नाद्यदि द्यूने पापा बलवर्जिताः युद्धयोगे ते बलान्विताः तस्मिन्योगे मृगया चेष्टा । तथा चाग्रे वक्ष्यति । यतो द्यूनलग्ने वध्याः प्राणिनो ज्ञेयाः । लग्नपद्यूनपयोर्योगे यात्रा मृगयासिद्धिः ॥ ३ ॥ पापांशगाविति । तदा मृगया सिद्धिः तुलालग्नेऽयं योगः वृषलग्ने चापि पूर्णे चंद्रे कर्कलग्ने चापि ॥ ४ ॥ अथ मृगयाविशेषः । जलर्क्षेति । अन्यतो व्याख्यानम् । वृश्चिकवृषकर्कटतुलामकरमीनकुंभधराः सजलराशयः । भृगुचन्द्रौ जलात्मकौ ज्ञेयौ । एवं लग्नेषु भृगुचन्द्रौ लग्नस्थौ तदा जले मृगयासिद्धिः ॥ ५ ॥

शुभैर्लग्नगतैर्द्यूनं यावद्भिश्चेक्षितं ग्रहैः ॥ तत्संख्या प्राणिनो वध्या वक्रोच्चस्थैस्त्रिसंगुणाः ॥ ६ ॥ कुशलं शुभनक्षत्रे क्लेशोऽनर्थस्तथाशुभे ॥ शुभपापेन विद्धं चेत्तदा दोषः प्रजायते ॥ ७ ॥ चंद्रार्खेटकयोर्मध्ये यावद्भान्यशुभग्रहैः ॥ अधिष्ठितानि तत्संख्यप्राणिनां वधमादिशेत् ॥ ८॥ शुभयुक्तैश्च तत्संख्यप्राणिनां च पलायनम् ॥ नक्षत्रजातिवज्जातिमाकृतिं वर्णसंस्थिताम् ॥ पापसंयोगतो ब्रूयाद्राशिभिर्वा यथाक्रमात्॥ ९ ॥ द्विगुणं स्वांशमित्रांशे

**वक्रोचे त्रिगुणं वदेत् ॥ ऋक्षपादचतुष्के तु ग्रहयोगक्रमाद्वदेत् ॥ प्रहारं प्राणिनां जातं प्राक्पश्चात्पृष्ठपार्श्वगम् ॥ १० ॥**

शुभैरिति ॥ यावद्भिर्लग्ने शुभैर्लग्नगतैर्यूनं सप्तमं वीक्षितं भवति तावत्संख्याः प्राणि-वध्या भवंति । स ग्रहो वक्रो यदि उच्चस्थो वा तदा त्रिगुणं वाच्यम् ॥ ६ ॥ मृगयाकर्त्तुः शुभाशुभमाह । कुशलमिति । मृगयादिने मृगयाकर्त्तुः शुभतारायां सं-क्षेमसाधकमैत्रातिमैत्रतारायां शुभमादिशेत् । कुशलेन मृगयासिद्धिः । जन्मविपत्प्र-त्यरिवधसंज्ञिकायां तारायां क्लेशं वदेत् । अनर्थान् व्याघ्रादिभिर्भयमादिशेत् । अश्वा-दिपतनादिकमपि । अथ शुभा अपि ताराः पापविद्धा भवंति तदापि क्लेश एव ॥ ७ ॥ अ-न्यद्विशेषमाह । चंद्राखेटेति । आखेटकस्य मृगयाकर्त्तुर्जन्मनक्षत्रदिननक्षत्रयो-र्यावंति तानि पापग्रहाधिष्ठितानि भवंति तावत्संख्यप्राणिनां वधमादिशेत् । तेन दिननक्षत्रात् आखेटकनक्षत्रं यावदिति तयोर्मध्ये ॥ ८ ॥ अत्राग्रेविंशेषमाह । शु-भैरिति । चंद्राखेटकयोर्मध्ये यावन्ति नक्षत्राणि शुभयुक्तानि भवंति तावत्सं-ख्याः प्राणिनः पलायन्ते ॥ प्राणिनां जातिः तज्जातिः प्राणिनः सूकरादयः एवं नक्षत्रजा-तिवज्जातिर्वाच्या ॥ ९ ॥ पापसंयोगेति । चन्द्रराश्याखेटिकराशिमध्ये या राशयः प-युक्तास्तदाकृतिप्राणिनो वध्याः । यथा मेषराशिर्यदि पापयुक्तस्तदा मृगादयो व-ध्या भवंति । वृषराशौ पापाधिष्ठिते महिषादयः । मिथुने वानरादयः । कर्के गोधाद-यः सिंहे व्याघ्रादयो नखिनः । वृश्चिके सर्पादयः कीटाः । धनुषि गवयः । मकरे जलजाः नक्र-मीने मत्स्यकूर्मादयः एवं यथाबुद्ध्या वक्तव्याः । लग्नादिषट्सु पापैः पूर्वांगे घातः द्यूना-पर्यंते पश्चाद्भागे घातं वदेत् । सप्तमे अष्टमे घातं वदेत् ॥ १० ॥

**छागौ तु कृत्तिकापुष्यौ सर्पभे रोहिणीमृगौ ॥ आर्द्रामूले तथा श्वानौ मूषकौ पितृवासवौ ॥ ११ ॥ सर्पादिती च मार्जारौ व्याघ्रौ चित्राविशाखके ॥ अर्यमे तोयभे गावौ मैत्रे शक्रे तथा मृगौ ॥ १२ ॥ हस्तस्वाती च महिषौ तुरङ्गावश्विवारुणौ ॥ मर्कटौ विष्णुविश्वाख्यौ याम्यपौष्णे मतंगजौ ॥ १३ ॥ भगाहिर्बुध्न्यभे सिंहौ विज्ञेयौ दैवचिन्तकैः ॥ पूभाद्राभिजितो बभ्रुर्भानां जाति-रितीरिता ॥ १४ ॥**

अथ नक्षत्रयोनयः । छागाविति चतुर्दश योनयः छागौ तु कृत्तिकातिष्यौ पापा-मृगादयो वध्याः आर्द्रामूलयोर्वेधे सृगालादयो नखिनः । अथ च । आखेटकस्यैव

वध्याः वाच्याः प्रस्तावात्। मूषकशब्देन गोधादयः मूषको वा। पूर्वाभाद्राभिजितौ वसुर्भानां जातिरिति चिंता ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥

**अथवा गणयेद्धीमान्वक्ष्यमाणक्रमेण तु ॥ तस्मिन्नहनि यो वारस्तिथिर्या तद्दिने तु तत् ॥१५॥ एकीकृत्य भवेदेवं वर्गितं दलितं भजेत् ॥ त्रिघनेन च शेषांकसंख्यप्राणिवधं दिशेत् ॥१६॥ दले शेषे विजानीयाद्युद्धादेकः पलायते ॥ वक्रितैरपि निर्देश्यं प्राणिनां ते पलायनम् ॥१७॥ अथवापि तिथिं वारं युक्तं कृत्वा तु वर्जितम् ॥ दलितं चेष्टनाडीभिर्भक्तं शेषांकसंख्यया ॥ प्राणिनां वधमादिश्यमाकृतिं राशिऋक्षवत् ॥१८॥ स्खलनं जन्मभे वाच्यं दुःखं चैव विपत्कभे ॥ अङ्गभेदाश्च निधने प्रत्यरौ पतनं दिशेत्॥१९॥ शेषे तु शोभनं वाच्यं फलं दैवविदा सदा ॥ खेचरं भूचरं प्रोक्तं नृपाणां मृगयार्थिनाम् ॥२०॥ इति नरपतिजयस्वरोदये खेचरभूचरचक्रम्॥**

अथान्य आखेटिकयोगः। अथवेति ॥ १५ ॥ अनेनाखेटिकस्य भमाह ॥ एकीकृत्येति। अनेनाखेटकस्य हरिणादिलाभमाह। उदाहरणम्। भरणीनक्षत्रं पापाक्रांतमत्र तद्दिने भसंख्या। द्विः २ तिथिः षष्ठी तयोर्योगेऽष्टौ ८ एकं त्यक्त्वा सप्त ७ अस्य वर्गः ४९ अस्य दलं २४ । ३० सप्तविंशतिभिः २७ भाजितः शेषं चतुर्विंशतिः २४ । ३० तद्दिने प्राणिलाभसंख्यां वदेदित्यर्थः ॥ १६ ॥ दलेति। शेषे दलिते यद्येकस्तिष्ठति तदा यूथादेकस्य पलायनं ब्रूयात्। वक्रग्रहेण यन्नक्षत्रयोनिप्राणी यो विद्धस्तत्त्रिगुणः पलायते॥ १७ ॥ अथान्यद्वध्यप्राणिनां संख्यामाह। अथवेति। उदाहरणम्। तिथि षष्ठी ६ वारो गुरुः ५ तद्योगे एकादश ११ अस्य वर्गः १२१ एकविंशत्यधिकं शतं दलितमिदम् ६० । ३० तद्दिने लुब्धकयात्राघष्टौ घटीः ८ अष्टाभिर्घटीभिः भक्तं शेषं सार्द्धचत्वारि ४ । ३० प्राणिनां संख्यैषामाकृतिः पूर्ववत् ॥ १८ ॥ अथाखेटिकानां नक्षत्रफलमाह। स्खलनमिति। जन्मनक्षत्रे यदि मृगयायै गम्यते तदा स्खलनं पादस्खलनं वाच्यम्। विपन्नक्षत्रे बहु दुःखं वदेत्। अष्टमतारायां निधनं प्रत्यरौ पंचमतारायां तु रागात्पतनं वदेत्। सप्तमतारापि वर्जनीया। शेषतारायां द्विचतुःषष्ठनवमतारायां शुभम् वदेत् ॥ १९ ॥ २० ॥ इति नरपतिजयचर्याटीकायां जयलक्ष्म्यां खेचरभूचरचक्रम्।

**अथ पञ्चांगम् ॥ अथ वक्ष्यामि पञ्चांगं तात्कालिकमनुत्तमम् ॥ येन विज्ञातमात्रेण यातुर्यात्राफलं भवेत् ॥१॥ वारादिकं च पञ्चांगमुच्यते तत्र तच्छृणु ॥ वारस्तिथिश्च ऋक्षाणि योगश्च समुहूर्तकः ॥ २ ॥ वारादिकं हि पञ्चांगं गतनाडीगुणाः क्रमात् ॥**

अष्टौ सविंशतिर्वारे तिथौ त्रिंशच्च भे तथा ॥३॥ ऋक्षाणि योगे भान्येवं मुहूर्ते तिथयो हताः ॥ गतनाडी हता षष्ट्या भक्ता युक्ते स्वसंख्यया ॥ ४ ॥ अष्टाविंशत्तथा त्रिंशत्सप्तविंशत्तथा तिथिः ॥ षष्टिभागे फलं लब्धं स्वस्वसंख्यायुतं भवेत् ॥ ५ ॥ इष्टकालिकपञ्चांगं वाराद्यैः शेषिते भवेत् ॥ सामान्येन प्रमाणं स्यात्पंचांगं यदि तत्र किम् ॥६॥ शुभाशुभानि तत्र स्युरेकस्मिन्नपि वासरे ॥ तस्मात्सूक्ष्ममिदं ज्ञेयमेकस्मिन्नपि वासरे ॥ ७ ॥ स्थूलवत्सर्वकार्याणि विधेयान्यत्र सर्वदा ॥ वर्तमानं तु पञ्चांगं तत्कालघटिकादलैः ॥८॥ युक्तं तत्कालपञ्चांगं तदग्रे प्रत्ययो भवेत् ॥९॥इति श्रीनरपतिजयचर्यायां तात्कालिकतिथ्यादिपञ्चांगचक्रं समाप्तम् ॥

अथ पंचांगम्। अथ वक्ष्यामीति ॥ १ ॥ वारादिकमिति ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ इष्टकालिकेति ॥ ६ ॥ शुभाशुभानीति ॥ ७ ॥ ८ ॥ युक्तमिति ॥ ९ ॥ इति पंचांगम्।

## नाडीचक्रम् ।




अथ नाडीचक्रम् ॥ अर्द्रादिकं लिखेच्चक्रं मृगांतं च त्रिनाडिकम् ॥ भुजङ्गसदृशाकारं मध्ये मूलं प्रकीर्तितम् ॥ १ ॥ यद्दिने एकनाडीस्थाश्चन्द्रनामर्क्षभास्कराः ॥ तद्दिने वर्जयेत्तत्र विवादे विग्रहे रणे ॥ २ ॥ इति नाडीचक्रम् ॥

अथ नाडीचक्रम् ॥ आर्द्रादिकमिति ॥ १ ॥ २ ॥ इति नाडीचक्रम् ॥

## द्वादशनाडीचक्रम् ।




अश्विन्यादि लिखेच्चक्र सर्पाकारं त्रिनाडिकम् ॥ तत्र वेधवशाज्ज्ञेयं विवाहादि शुभाशुभम् ॥ १ ॥ नाडीवेधेन नक्ष-

त्राण्यश्विन्यार्द्रादिउत्तराः ॥ हस्तेंद्रमूलवारुण्याः पूर्वाभाद्रपदा तथा ॥ २ ॥ याम्यं सौम्यं गुरुर्योनिश्चित्रा मित्रजलाह्वये ॥ धनिष्ठा चोत्तराभाद्रा मध्यनाडीव्यवस्थिता ॥ ३ ॥ कृत्तिका रोहिणी सार्पं मघा स्वातीविशाखिके ॥ उषा च श्रवणं पूषा पृष्ठनाडीव्यवस्थिता ॥ ४ ॥ अश्व्यादिनाडीवेधर्क्षं षष्ठे च द्वितयं क्रमात् ॥ याम्यादि तुर्यतुर्यं च कृत्तिकादि द्विषष्ठकम् ॥ ५ ॥

अथ द्वादशनाडीचक्रम् । अश्विन्यादीति ॥ १ ॥ नाडीवेधेनेति ॥ २ ॥ याम्यमिति ॥ ॥ ३ ॥ ४ ॥ ५ ॥

## अथ विवाहाद्यंशचक्रम् ।

| चु | चे | चो | ल | लि | लु | ले | लो | अ | इ | उ | ए |
|---|---|---|---|---|---|---|---|---|---|---|---|
| छ | ङ | घ | कु | कि | क | वो | वे | वु | वि | व | ओ |
| के | को | ह | ही | हु | हे | हो | ड | डि | डु | डे | डो |
| पि | प | टो | टे | टु | टि | ट | मो | मे | मु | मि | म |
| पु | ष | ण | ठ | पे | पो | र | रि | रू | रे | रो | त |
| यु | यि | य | नो | ने | नु | नि | न | तो | ते | तु | ति |
| जे | जो | भ | भि | भु | ध | फ | ढ | भे | भो | ज | जि |
| शु | शि | श | गो | गे | गु | गि | ग | षो | षे | षु | षि |
| शे | शो | द | दि | दु | थ | झ | ञ | दे | दो | च | चि |

एवं निरीक्षयेद्वेधं कन्या मंत्रे गुरौ सुरे ॥ पण्यस्त्रीस्वामिमित्रेषु देशे ग्रामे पुरे गृहे ॥ ६ ॥ एकनाडीस्थऋक्षाणि यदा स्युर्वरकन्ययोः ॥ तदा वेधं विजानीयाद्गुर्वादिषु तथैव ॥ ७ ॥ प्रकटं यस्य जन्मर्क्षं तस्य जन्मर्क्षतो व्यधः ॥ प्रनष्टं जन्मभं यस्य तस्य नामर्क्षतो भवेत् ॥ ८ ॥ द्वयोर्जन्मभयोर्वेधो द्वयोर्नामभयोस्तथा ॥ जन्मनामर्क्षयोर्वेधो न कर्तव्यः कदाचन ॥ ९ ॥

एकनाडीस्थिता दुष्टा भर्तुश्चैव कुलांगना ॥ स्मान्नाडीव्यधो वीक्ष्यो विवाहे शुभमिच्छता ॥ १० ॥ हन्नाडीवेधने भर्ता मध्यनाडीव्यधे द्वयम् ॥ पृष्ठनाडीव्यधे कन्या म्रियते नात्र संशयः ॥ ॥ ११ ॥ समासन्ने व्यधे शीघ्रं दूरवेधे चिरेण तु ॥ वेधांतरभमानेन वेधे दुष्टं प्रजायते ॥१२॥ एकर्क्षे जायते यत्र विवाहे वरकन्ययोः ॥ मूलवेधो भवेत्तत्र महादुष्टफलप्रदः ॥ १३ ॥ एकनाडीस्थिता यत्र गुरुमंत्राश्च देवताः ॥ तत्र द्वेषं रुजं मृत्युं क्रमेण फलमादिशेत् ॥ १४ ॥ प्रभुः पण्यांगना मित्रं देशं ग्रामं पुरं गृहम् ॥ एकनाडीगता भव्या विरुद्धा वेधवर्जिताः ॥१५॥ क्रूरग्रहाक्रांतनाड्यां यस्य जन्मर्क्षसंभवः ॥ तस्य मृत्युर्न संदेहो यात्रायुद्धे रुगुद्भवे ॥ १६ ॥ द्व्यादिक्रूरव्यधो यस्य जन्मर्क्षे च त्रिनाडिके ॥ हानिर्विघ्नं भयं क्लेशो जायते वधबंधनम् ॥ १७ ॥ एवं सौम्यव्यधो यस्य जन्मऋक्षे प्रजायते ॥ जयो लाभं सुखं तस्य जायते नात्र संशयः ॥ १८ ॥ शुभाशुभग्रहैर्विद्धा यस्य जन्मर्क्षनाडिका ॥ तस्य मिश्रं फलं वाच्यं नाडीचक्रे स्वरज्ञकैः ॥ ॥१९॥ एकांशेन व्याधिमृत्युः स्वल्पं दुष्टं द्वितीयकम् ॥ एतच्चक्रं समालिख्य अश्विन्याद्यं त्रिपंक्तितः ॥ २० ॥

एवमिति ॥ ६ ॥ ७ ॥ ॥ ८ ॥ ९ ॥ १० ॥ हन्नाडीति ॥ ११ ॥ समासन्नेति ॥ १२ ॥
एकर्क्षमिति ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥

वेधो द्वादशनाडीभिः कर्तव्यः पन्नगाकृतिः ॥ आद्यांशेन चतुर्थांशं चतुर्थांशेन चादिमम् ॥ द्वितीयेन तृतीयं तु तृतीयेन द्वितीयकम् ॥ २१ ॥ एवं भांशव्यधो येषां जायते वरकन्ययोः ॥ तेषां मृत्युर्न संदेहः शेषांशाः स्वल्पदुष्टदाः ॥ २२ ॥ गुरुमंत्राश्च देवाश्च वेधांशस्था न शोभनाः ॥ अन्यांशकगता भव्या ज्ञातव्याः सर्वदा बुधैः ॥ २३ ॥ प्रभुः पण्यांगनामित्रं देशं ग्रामं पुरं गृहम् ॥

अंशवेधस्थितं भव्यं विरुद्धं वेधवर्जितम् ॥ २४ ॥ एवं जानाति यश्चक्रं चक्रराजं त्रिनाडिकम् ॥ तस्य पाणितले ज्ञानं सर्वदैव प्रतिष्ठितम् ॥ २५ ॥ इति द्वादशनाडीचक्रम् ॥

वेध इति ॥ २१ ॥ एवमिति ॥ २२ ॥ गुरुमंत्राश्चेति ॥ २३ ॥ प्रभुरिति ॥ २४ ॥ एवं जानातीति ॥ २५ ॥ इति द्वादशनाडीचक्रम् ॥

अथ अहिवलयचक्रम् ॥

अहिवलयच० ।

| रे २७ | अ १ | भ २ | कृ ३ | म १० | पू ११ | उ १२ |
|---|---|---|---|---|---|---|
| उ २६ | पू २५ | श २४ | रो ४ | श्ले ९ | पु ८ | ह १३ |
| अभि | श्र २२ | ध २३ | मृ ५ | आ ६ | पु ७ | चि १४ |
| उ २१ | पू २० | मू १९ | ज्य १८ | अ १७ | वि १६ | स्वा १५ |

अहिचक्रं प्रवक्ष्यामि यथा सर्वज्ञभाषितम् ॥ द्रव्यं शल्यं तथा शून्यं येन जानंति साधकाः ॥१॥ वितस्तिद्वितयं हस्तो राजहस्तश्च तद्द्वयम् ॥ दशहस्तैश्च दंडः स्यात्त्रिशद्दंडो निवर्तनम् ॥ २॥ निधिर्निवर्तनैकस्थः संभ्रांतो यत्र भूतले ॥ तत्र चक्रमिदं स्थाप्यं स्थानद्वारमुखस्थितम् ॥ ३ ॥ ऊर्ध्वरेखाष्टकं लेख्यं तिर्यक् पंच तथैव च ॥ अहिचक्रं भवत्येवमष्टाविंशतिकोष्ठकम् ॥ ४ ॥ तत्र पौष्याश्वियाम्यर्क्षं कृत्तिकापितृभाग्यकम् ॥ उत्तराफाल्गुनी लेख्यं पूर्वपंक्त्यां भसप्तकम् ॥ ५॥ अहिर्बुध्न्याजपादर्क्षं शतभं ब्राह्मसार्पभम् ॥ पुष्यं हस्तं समालेख्यं द्वितीयां पंक्तिमास्थितम् ॥ ६ ॥ विधिर्विष्णुर्धनिष्ठाख्यं सौम्यरौद्रपुनर्वसू ॥ चित्राभं च तृतीयायां पंक्तौ धिष्ण्यस्य सप्तकम् ॥ ७ ॥ विश्वर्क्षं तोयभं मूलं ज्येष्ठा मैत्रविशाखिके ॥ स्वातीं पंक्त्यां चतुर्थ्यां च कृत्वा चक्रं विलोकयेत् ॥ ८ ॥ एवं प्रजायते चक्रे प्रस्तारः पन्नगाकृतिः ॥ द्वारशाखे मघायाम्ये द्वारस्था कृत्तिका मता ॥ ९ ॥ अश्वीशपूर्वाषाढादित्रिकपंच चतुष्टयम् ॥ रेवती पूर्वाभाद्रेंदोर्भानि शेषाणि भास्वतः ॥१०॥ उदयादि

गता नाड्यो भग्नाः षष्ट्याप्तशेषके ॥ दिनेंदुभुक्तियुक्तोऽसौ भवे-त्तत्कालचंद्रमाः ॥ ११ ॥

अथ अहिवलचक्रम् ॥ अहिचक्रमिति ॥ १ ॥ २ ॥ निधिरिति ॥ ३ ॥ ऊर्ध्वरेखेति ॥ तत्रेति ॥ ५ ॥ अहिर्बुन्ध्येति ॥ ६ ॥ विधिरिति ॥ ७ ॥ विश्वर्क्षमिति ॥ ८ ॥ एवमिति ॥ अश्वीशेति ॥ १० ॥ तत्कालचन्द्रमाह । उदयादीति ॥ ११ ॥

षष्टिघ्नं तं निशानाथं शरवेदाप्तकं पुनः ॥ युगैः शेषं भवेद्यत्तत्मा-गादिचक्रवक्रगम् ॥ १२ ॥ चंद्रवत्साधयेत्सूर्यमृक्षस्थं चेष्टका-लिकम् ॥ पश्चाद्विलोकयेत्तौ च स्वर्क्षे वा चान्यभे स्थितौ ॥ १३ ॥ चंद्रऋक्षे यदार्केंदू तत्रास्ति निश्चितं निधिः ॥ भानुऋक्षे स्थितौ तौ चेत्तदा शल्यं च नान्यथा ॥ १४ ॥ स्वस्वभे द्वितयं ज्ञेयं नास्ति किंचिद्विपर्यये ॥ नवांशकानुमानेन भूमानं तस्य कल्प-येत् ॥ स्थितं न लभते द्रव्यं चंद्रे क्रूरग्रहान्विते ॥१५॥ पुष्टे चंद्रे भवेन्मुद्रा क्षीणे चंद्रेऽल्पको निधिः ॥ ग्रहदृष्टिवशात्सोपि विज्ञेयो नवधा बुधैः ॥ १६ ॥ हेम तारं च ताम्रारं रत्नं कांस्यायसं त्रपु ॥ नागं चंद्रे विजानीयाद्भास्करादिग्रहेक्षिते ॥ १७ ॥ मिश्रैर्मिश्रं भवेद्द्रव्यं शून्यं दृष्टिविपर्यये ॥ सर्वग्रहेक्षिते चंद्रे निर्दिष्टोसौ महानिधिः ॥ १८ ॥ शुभक्षेत्रगते चंद्रे लाभः स्यान्नात्र संशयः ॥ पापक्षेत्रे न लाभो हि विज्ञेयः स्वरपारगैः ॥ १९ ॥ हेम तारं च ताम्रं च पाषाणं मृन्मयायसम् ॥ सूर्यादिगृहगे चंद्रे द्रव्यभांडं प्रजायते ॥ २० ॥ भुक्तराश्यंशमानेन भूमानं कामिकैः करैः ॥ नीचे द्विघ्नं परं नीचे जलस्थोऽसौ भवेन्निधिः ॥ २१ ॥ स्वोच्चस्थे भूर्ध्वगं द्रव्यं नवांशकक्रमेण च ॥ परमोच्चे परे तुंगे भित्तिस्थमृक्षसंक्रमे ॥ २२ ॥ चद्रांशभुक्तमानेन द्रव्यसंख्या विधीयते ॥ तस्या दशगुणा वृद्धिः षड्वर्गेंदुबलक्रमात् ॥ २३ ॥ अधिष्ठितं भवेद्द्रव्यं यत्र चन्द्रो ग्रहान्वितः ॥ तदधिष्ठापको ज्ञेयो

भास्करादिग्रहैः क्रमात् ॥२४॥ ग्रहो मुखे ग्रहश्चैव क्षेत्रपालं च मातृकाः ॥ दीपेशं भीषणं रुद्रं यक्षं नागं विदुः क्रमात् ॥ २५ ॥ ग्रहे होमः प्रकर्तव्यो मुखे नारायणीबलिः ॥ क्षेत्रपाले सुरामांसं मातृकायां महाबलिः ॥२६॥ दीपेशे दीपजा पूजा भीषणे भीषणार्चनम् ॥ रुद्रे च रुद्रजो जाप्यो यक्षे यक्षादिशान्तयः ॥ २७ ॥ नागे नागग्रहाः पूज्या गणनाथेन संयुक्ताः ॥ लक्ष्मीधरादितत्त्वानि सर्वकार्येषु पूजयेत् ॥ २८ ॥ एवं कृते विधानेपि निधिसाध्योपि सिध्यति ॥ निधिप्राप्ता नरा लोके वंदनीया न संशयः ॥२९॥ पद्मासने चन्द्रातपेन ऐं क्लीं हूँ वदवद वाग्वादिनी स्वाहा इति मन्त्रं षण्मासपर्यंतं त्रिसन्ध्यायां जपेत् निधिप्राप्तिर्भवति ॥ ३० ॥ इति ब्रह्मयामलीयस्वरोदये अहिवलचक्रं समाप्तम् ॥

षष्टिघ्नमिति ॥ १२ ॥ चन्द्रवत्साधयेदर्कमिति ॥ १३ ॥ चन्द्रऋक्ष इति ॥ १४ ॥ स्वस्वभेति । अत्र चन्द्रभे निधिः सूर्यभे शल्यमित्यर्थः । उदयादिगता नाड्य इत्यत्र एवं वेदितव्यम् । दिनर्क्षस्थितश्चंद्रस्तदारभ्य सप्तविंशतिनक्षत्राणि भुनक्ति तेन उदयादिगतदंडाद्दिनर्क्षभुक्तघटिकास्वेवांतर्भूता भवंति । तेन किं यदुक्तं द्वादशारचक्रे । इष्टा नाड्यो हता धिष्ण्यैरित्यस्यार्थेन तत्कालचन्द्रः कार्यः । इष्टा नाड्यो भुक्तनक्षत्रनाड्यः । यत्तूक्तं चक्रमिदं स्थानद्वारमुखस्थितं कृत्वा यत्र कोष्ठर्क्षस्थितौ चन्द्रप्रसूर्यौ तत्र निधिः शल्यं वा द्वितयं वा ज्ञेयम् ॥ तत्रस्थानद्वारज्ञानोपायो गुरुरेव । यत्र स्थानद्वारज्ञानं नोक्तं तत्र गुरुगम्योयम् । अहिवलयचक्रमिदम् । अहिः शेषनागः स तु भाद्राद्यैस्त्रिभिर्मासैः पूर्वादिशिरःकृत्वा वामपार्श्वेन शेते तत्र यत्र तच्छिरः तत्र निधिस्थानस्य द्वारं तथा चक्रमिदं स्थाप्यम् । यथा द्वारिस्था कृत्तिका पतति । गृहे तु गृहद्वारे स्थापयेत् । मुख्यः पक्षोयम् । अहिवलयनाडिवलयमिति नाम । अथान्यः पक्षः चन्द्राधिष्ठितं तत्कालनक्षत्रं यद्दिग्द्वारभे भवति कृत्तिकादिसप्तसप्तव्यवस्थया तद्दिग्द्वारं निधिस्थानम् अथवा प्रश्नकर्ता निधिनाथो यत्र दिशि तत्स्थाने प्रविशति तद्द्वारं निधिस्थानस्य इदमेव कृतम् । पक्षत्रयादपि निधिं साधयेत् । अथवा यस्य यो गुरुर्भवति बीजं वदति तत्प्रमाणम् अहिचक्रस्यार्थोयम् ॥ १५ ॥ पुष्टे चन्द्रेति ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ ॥ २५ ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ इति नरपतिजयचर्याटीकायां जयलक्ष्म्याम् अहिवलयचक्रम् ॥

# अथ अहिवलयचक्रभाषा ।

जिस मकानमें रक्खी हुई दौलत भूल गई हो उसमें निम्न लिखित सर्पाकार चक्र बना माल्रम होती है । जो लोग इस चक्रको जानते हैं वे देवसाधक हैं द्रव्य हड्डी कोयला शून्य स्थानको बतलाते हैं ।

इस चक्रमें २८ घर होते हैं इसीमें अट्ठाइसों नक्षत्र कृत्तिकाके क्रमसे लिखे जावेंगे।

इसके पश्चात् तत्काल चन्द्रमाका विचार करना चाहिये जिस नक्षत्रपर सूर्य्य चन्द्रमा द्रव्य, हड्डी, कोयला तथा शून्यस्थानका विचार करै ।

कुल २८ नक्षत्रोंमेंसे १४ सूर्य्य और १४ चन्द्रमाके नक्षत्र हैं ।

## चन्द्रमाके नक्षत्र ।

अश्विनी १ भरणी २ कृत्तिका ३ आर्द्रा ४ पुनर्वसु ५ पुष्य ६ आश्लेषा ७ ८ रेवती ९ पूर्वभाद्रपद १० पूर्वाषाढ ११ उत्तराषाढ १२ श्रवण १३ धनिष्ठा १४ जो शेष हैं वही सूर्य्यके नक्षत्र हैं ।

## शून्य स्थान ।

चन्द्रमा सूर्यके नक्षत्रमें हो और सूर्य चन्द्रमाके नक्षत्रमें हो तो न हड्डी न कोयला द्रव्य, शून्य स्थान है ।

## द्रव्यस्थान ।

यदि रक्खा हुआ द्रव्य हो और चन्द्रमा क्रूर ग्रहके संगमें हो तो रक्खा हुआ द्रव्य न मिलै यदि चन्द्रमा बलवान् होके अपने नक्षत्रमें हो तो द्रव्य अवश्य है ।

## शल्यस्थान ।

यदि चन्द्रमा सूर्य्यके साथ हो तो हड्डी कोयला जानना चाहिये ।

## द्रव्य कितनी दूरपर है ।

चन्द्रमाका नवांश विचार करके भूमिके नीचे माल्रम करना चाहिये कि कि दूरपर है ।

## धातुका ज्ञान ।

तत्कालमें चन्द्रमा जितने अंश आवै उसीसे धातुका ज्ञान करना चाहिये ।

सोना १ तार २ तांबा ३ रिक्ता ४ रत्न ५ लोहा ६ नाग ७ ।

## तत्काल चन्द्रमा बनानेकी विधि ।

प्रातःकालसे जितनी घटी व्यतीत हुई हों २८ से गुणाकरै और ६० से भाग ले जो रहै वह दिनके चन्द्रमा बीते हुयेमें जोडदे वही तत्कालचन्द्रमा हो जायगा ।

## तत्काल सूर्य्य ।

चन्द्रमाकी भांति सूर्य्यको भी तत्काल बनाना चाहिये । इसी तत्कालको इष्ट समझना चाहिये ।

### द्रव्यका ज्ञान।

यदि चन्द्रमाके नक्षत्रमें सूर्य्य और चन्द्रमा स्थितहों तो अवश्य द्रव्यको जानना चाहिये।

### शल्यका ज्ञान।

यदि सूर्य्यके नक्षत्रमें चन्द्रमा और सूर्य स्थित हों तो अवश्य कोयला या हड्डी है।

### द्रव्य कितना है।

यदि पूर्ण चन्द्रमा हो तो विशेष द्रव्य, यदि क्षीण हो तो कम द्रव्य कहना चाहिये।

### धातु ज्ञान।

जो ग्रह चन्द्रमाको बलवान् दृष्टिसे देखता होय तो धातु कहना चाहिये।

अब जानना चाहिये कि द्रव्य जमीनमें है या बरतनमें है यदि बरतन है तो किस धातुका है।

### बरतनका ज्ञान।

चन्द्रमाके साथ सूर्य्य इत्यादि जो ग्रह पडे हों उसी धातुका बरतन कहना उचित है।

### द्रव्य मिलैगा या नहीं।

यदि चन्द्रमा अच्छे ग्रहके घरमें हो पूर्णबली हो तो द्रव्य मिलनेमें कोई सन्देह नहीं है यदि पापग्रहके क्षेत्रमें हो क्षीण बली हो तो रक्खा हुआ द्रव्य भी न मिलै।

### द्रव्य कहां है।

अब यह जानना चाहिये कि द्रव्य जमीनमें है या दीवारमें या पानीमें है या किसी कोनेमें है।

इसके जाननेकी यह रीति है कि जिस धातुका ज्ञान हो उसी ग्रहका नवांश अपने उच्चका हो अपनी जगह हो अपने नवांशमें हो तो समझलेना चाहिये कि दीवारमें है यदि नीचका हो तो जमीनमें नीचे है यदि बहुत नीच हो तो पानीमें कहना चाहिये।

### द्रव्य कितना है।

यदि चन्द्रमा अपने षड्वर्गमें बलवान् हो जितना अंश गुजरा हो उसका दशगुणा द्रव्य की संख्या जानना चाहिये।

अब विचार करना चाहिये कि द्रव्य जीवात्मक है या शून्यात्मक तथा परात्मकमें क्या है।

### जीवात्मकका विचार।

सूर्य्य यदि पापग्रहसे संयुक्त हो तो जीवात्मक द्रव्य है।

### शून्यात्मक।

यदि सूर्य्य उच्चका हो तो द्रव्य शून्यात्मक है अर्थात् अपनी है।

### परात्मक ।

यदि सूर्य्य नीचका हो तो द्रव्य परात्मक जानना चाहिये ।

### जीवात्मक परात्मककी शान्ति ।

यदि द्रव्य जीवात्मक हो तो विष्णु, गणेश, ग्रह, क्षेत्रपाल, मातृका, भैरव, महादेव, की पूजा करनी चाहिये और घरमें हवन करना चाहिये नारायणी बलिसे जीवकी स्थिति क्षेत्रपालके वास्ते मदिरा मांससे पूजन करै, रात्रिमें ग्रहबलि करै गणेश भैरवकी पूजा गणेश, लक्ष्मीका संयुक्त पूजन करै महादेवका जप करै तब शांति होय ।

### पूजन स्थान ।

जिस स्थानपर द्रव्य भूला हो उसी जगह यह सब करै उसी जगह सर्पाकार चक्र कर द्रव्य शल्य, जानै ।

इस विधानसे जो लोग करते हैं उनको द्रव्य, हड्डी, कोयला, शून्य स्थान अवश्य होता है ।

### चौबोला ।

राम शरणको पुत्र नाम जगनाथ हमारो ।
वास फरीदावाद जौनपुर जिला विचारो ॥
मूल ग्रन्थको पाइ अनूपम भाषा कीन्ह्यों ।
खेमराज वर सेठ बम्बई आज्ञा दीन्ह्यों ॥

### दोहा ।

कार्तिक शुक्ला पूरणा, शुक्रवार सुख कन्द ।
सैम्वतहै अनुवादको, रस सर ग्रह अरु चन्द ॥

इति अहिवलयचक्रभाषा समाप्ता ।

## अथ लांगलचक्रम् ॥




लांगलं दंडिका यूकं यो[क्त्र]द्वयसमन्वितम् ॥ दंडिक[ा] लिखेद्भानि दिनेशाक्रां[त]दितः ॥ १ ॥ दंडिकाहलयूकानां द्विद्विस्थाने त्रिकं त्रिकम् योक्त्रयोः पंचके तत्र गणना चक्रलांगले ॥ २ ॥ दंडिस्थे तु [...] हानिर्यूकस्थे स्वामिनो भयय ॥ लक्ष्मीर्लांगलयोक्त्रस्थे क्षेत्र[...] भदिनर्क्षके ॥ ३ ॥

अथ लांगलचक्रम् । लांगलमिति यूकं युगकाष्ठं योक्त्रं वृषावबोधकं काष्ठम् ॥ १ ॥ [...]केति ॥ २ ॥ ३ ॥

द्वितीयलांगलचक्रम् ॥



अथ द्वितीयलांगलचक्रम् ॥ त्रिकं त्रिकं त्रिकं पंच त्रिकं पंच त्रिकं त्रिकम् ॥ सूर्यादिदिननक्षत्रमशुभं च शुभं क्रमात् ॥ १ ॥ अन्यच्च ॥ रामरामगुणाः पंच रामपंचगुणा गुणाः ॥ विज्ञेयं लांगल चक्र अशुभं शुभमुच्यते ॥ २ ॥ इति लांगलचक्राणि ॥

अथ द्वितीयलांगलम् । त्रिकमिति ॥ १ । २ ॥ इति लांगलचक्राणि ।

सूर्यभादुरगः स्थाप्यश्विनाद्येकांतरः क्रमात् ॥ मुखे त्रीणि गले त्रीणि भानि द्वादश चोदरे ॥१॥ पुच्छे तुर्यं बहिः पंच दिनभाच्च फलं वदेत् ॥ वदने कुकले विंग्राद्गलकेंगारकस्तथा ॥ २ ॥ उदरे धान्यवृद्धिश्च पुच्छे धान्यक्षयो मतः ॥ इति रोगभयं बाह्ये चक्रे बीजोप्तिसंज्ञके ॥ ३ ॥ इति बीजोप्तिचक्रम् ॥

बीजोप्तिचक्रम् सूर्यभादिति ॥ १ ॥ २ ॥ ३ ॥ इति बीजोप्तिचक्रम् ।

बीजोप्तिफणिचक्रम् ॥




अथान्यप्रकारे फणिचक्रम् ॥ बीजोप्तिचक्रम् ॥ ग्रंथान्तरेपि ॥ राहुभादष्टमं यावत्सूर्यभूपनखानि च ॥ बीजोप्तिं वर्जयेत्तासां पुच्छस्यापि चतुष्टयम् ॥ १ ॥ मूर्ध्नि त्रीणि गले त्रयं च जठरे धिष्ण्यानि च द्वादश स्यात्पुच्छे च चतुष्टयं बहिरथो भानां स्थितं पंचकम् ॥ सिक्तं कज्जलमन्नवृद्धिमधिकं निस्तंडुलानि क्रमात्स्यादीतिप्रभवं भयं च फणितो बीजोप्तिकालेर्कभात् ॥ २ ॥

अन्यग्रंथेपि ॥ राहुस्थिते तु नक्षत्रं गण्यते च विलागमैः ॥ राहु-
क्रांतिं विजानीयात्सर्वबीजानि वापयेत् ॥ ३ ॥ इति बीजो-
प्तिफणिचक्रम् ॥

ग्रंथांतरे । राहुभादिति ॥ १ ॥ २ ॥ ३ इति बीजोप्तिफणिचक्रम् ॥

वृषभचक्रम् ।



वृषचक्रं वृषाकारं सर्वा-
वयवसंयुतम् ॥ लिखि-
त्वा विन्यसेद्भानि वृष-
नामर्क्षपूर्वकम् ॥ १ ॥
मुखाक्षिकर्णशीर्षेषु शृं-
स्कंधे द्विकं द्विकम् ।
त्रीणि पृष्ठे त्रिकं पुच्छे
द्वे द्वे पादोदरे न्यसे-
॥ २ ॥ हलप्रवाहबीजोप्तिप्रारंभादि दिनर्क्षके ॥ यत्रांसे संस्थित-
श्चंद्रस्तस्माद्वक्ष्ये शुभम् ॥ ३ ॥ हानिर्वक्त्रगते सुखानि नय-
कर्णे तु भिक्षाटनं शीर्षे स्याद्धृतिरत्र[1] शृंगयुगुले स्कंधस्थि-
शोभनम् ॥ पृष्ठे राजभयं च पुच्छभगते पादे भ्रमं हृत्सुखं चै-
चन्द्रभजं फलं प्रकटितं चक्रे वृषाख्ये नृणाम् ॥ ४ ॥ अन्य-
प्रकारेण वृषभचक्रं वास्तुप्रकरणे कथितम् ॥ वृषवास्तुं प्रवक्ष्यामि
यत्रादावुत्तमं स्मृतम् ॥ यस्मिन्धिष्ण्ये स्थिते चंद्रे तत्रादौ त्रीणि
चास्यके ॥ ५ ॥ क्रमाच्चत्वारि धिष्ण्यानि वृषस्य पूर्वपादयोः ।
चत्वारि वामपादे च दक्षिणे च चतुष्टयम् ॥ ६ ॥ ऋक्षाणां
त्रयं पुच्छे चतुष्के पश्चिमांघ्रयोः ॥ शिरसि त्रीणि पृष्ठे
विन्यसेत्त्रीणि पूर्ववत् ॥७॥ मुखे च स्वामिनो मृत्युरुद्वासं पर्वपा-

१ शीर्षे स्यान्मृति इति पा० ।

दयोः ॥ वामपादे दरिद्रं स्याद्दक्षिणे च धनागमः ॥८॥ रोगव्याधिभयं पुच्छे स्थिरः पश्चिमपादयोः ॥ मूर्ध्नि पृष्ठे श्रियं विंद्यात् फलं वृषभवास्तुके ॥९॥ देवागारग्रहस्तंभे प्रतिष्ठादौ विधीयते ॥ अन्यकार्ये विधातव्यं संप्रोक्तं पूर्वसूरिभिः ॥ १० ॥ इति वृषभचक्रम् ॥

बीजोप्तिवृषचक्रम् । वृषचक्रमिति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ इति वृषभचक्रम् ॥

॥ कलशवृषभच० ॥




मुखैकं दिक्षु चत्वारि गर्भे चत्वारि चैव च ॥ कंठे त्रीणि गुदे त्रीणि रव्यादि स्थापयेत् क्रमात् ॥ १ ॥ मुखैकं स्वामिनो घातं पूर्वे उद्वासनं भवेत् ॥ दक्षिणे चार्थलाभश्च पश्चिमे संततिर्भवेत् ॥ २ ॥ उत्तरे कलहं विंद्याद्गर्भे गर्भो विनश्यति ॥ कंठे च श्रियमाप्नोति गुदे रोगे मृतिर्भवेत् ॥ ३ ॥

इति कलशवृषभचक्रम् ॥ वृषभवास्तुचक्रञ्च ॥

अथ कलशवृषभचक्रम् । मुखैकमिति ॥ १ ॥ २ ॥ ३ ॥ इति कलशवृषभचक्रम् ।

## अथ सप्तनाडीचक्रम् ।

| कृ. | वि | ऽनु | भ | शनि | चंडनाडी |
|---|---|---|---|---|---|
| रो | स्वा | ज्ये | अ | सूर्य | वातनाडी |
| मृ | चि | मू | रे | भौम | दहननाडी |
| आ | ह | पू | उ | बृह. | सौम्यनाडी |
| पु | उ | उ | पू | शुक्र | नीरनाडी |
| पु | पू | अ | श | बुध | जलनाडी |
| श्ले | म | श्र | ध | चन्द्र | अमृतनाडी |

अथ सप्तनाडीचक्रम् ॥ अथातः संप्रवक्ष्यामि यच्चक्रं सप्तनाडिकम् ॥ यस्य विज्ञानमात्रेण वृष्टिं जानंति साधकाः ॥ १ ॥ कृत्तिकादि लिखेद्धानि साभिजितिक्रमेण च ॥ सप्तनाडी व्यधस्तत्र कर्तव्यः पन्नगाकृतिः ॥ २ ॥ ताराचतुष्कवेधेन नाडिकैका प्रजायते ॥ तेषां नामान्यहं वक्ष्ये तथा चैव फलानि च ॥ ३ ॥ कृत्तिका

च विशाखा च मैत्राख्यं भरणी तथा ॥ उर्ध्वाधा शनि ना
स्याच्चंद्रनाड्यभिधीयते ॥ ४ ॥ रोहिणी स्वातिज्येष्ठाश्विद्वितीय
नाडिका मता ॥ आदित्यप्रभवा नाडी वायुनाडी तथैव च ॥ ५ ॥
सौम्यं चित्रा तथा मूलं पौष्णमृक्षं चतुर्थकम् ॥ तृतीयांगारक
नाडी दहनाख्या तथैव च ॥६॥ रौद्रं हस्तं तथा पूर्वाषाढा भा
तथोत्तरा ॥ चतुर्थी जीवनाडी स्यात्सौम्यनाडी प्रकीर्तिता ॥ ७ ॥
पुनर्वसूत्तराफल्गुन्युत्तराषाढतारका: ॥ पूर्वाभाद्रा च शुक्राख्य
पंचमी नीरनाडिका ॥ ८ ॥ पुष्यर्क्ष फल्गुनीपूर्वा अभिजिच्छ
तारका ॥ षष्ठो नाडी च विज्ञेया बुधस्य जलनाडिका ॥ ९ ॥
आश्लेषार्क्षं मघाकर्णधनिष्ठा च तथैव च ॥ अमृताख्या हि विज्ञे
सप्तमी चंद्रनाडिका ॥ १० ॥ मध्यमार्गे स्थिता सौम्या ना
तस्याग्रपृष्ठतः ॥ सौम्ययाम्य गतं ज्ञेयं नाडिकानां त्रिकं त्रिक
॥ ११ ॥ क्रूरा याम्यगता नाड्यः सौम्याः सौम्यदिगाश्रिताः
मध्यनाडी च मध्यस्था ग्रहरूपफलप्रदा ॥ १२ ॥ एकना
गताब्दाद्या ग्रहाः क्रूरा शुभा यदि ॥ ततो नाडीफलं वाच्यं
वा यदि वाशुभम् ॥१३॥ग्रहाः कुर्युर्महावातं गताश्चंडाख्यनाडिक
वायुनाडी गता वायुं दहन्यामतिदाहकाः ॥ १४ ॥ सौम्यना
गता मध्या नीरस्था मेघवाहकाः ॥ जलायां वृष्टिदश्चंद्रो नाडि
श्चातिवृष्टिदाः ॥ १५ ॥

अथ सप्तनाडीचक्रम् ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥
मध्यमार्गेति ॥ सप्तनाडीचक्रव्याजेन ग्रहाणां सप्तमार्गाः सौम्ययाम्याः
मध्ये मध्यस्था जीवनाडी सौम्या तस्याग्रे त्रिनाडीपंथानः सौम्याः उत्तरमार्ग
नाडीपृष्ठे याम्यमार्गस्त्रिनाडिकः ॥११॥ तत्र स्थानं ग्रहाणां फलमाह । क्रूरायाम
॥१२॥ १३॥ प्रथमतो दक्षिणमार्गगतानां ग्रहाणां फलमाह ॥ ग्रहा इति चंडाख्य

शुभाशु
प्राकारा
मात्रम्
सस्यानि
शुभा
शुभाशु
शुभाशु
योगे स
डेस्थः
डेस्थश्च
डीस्थो
बुधो ज
पुनः स
अधुना
नाडीति
स्थितः
केवलैः
मेघदु

शुभाशुभा द्वित्र्याद्या महावातं कुर्युः उत्पातरूपं वायुं कुर्युः । उत्थितांतकाः पर्वताग्रवृक्षप्राकारादुत्थितानामुन्मूलनकरा वाता भवंति वायुनाडीगताः रविनाडीगता ग्रहा वायुमात्रम् । द्व्यादिभिः प्रचण्डो वायुः । दहननाडीगता वाता दाहं कुर्वंति खरतररविरश्मिभिः सस्यानि शुष्यंति दहना भौमनाडी ॥ १४ ॥ सौम्यनाडीस्थिता ग्रहा मध्यफलदाः शुभा नातिशुभं पापा नातिपापं पापां नातिवायुं कुर्वंति नाति दाहम् । नीरनाडीगताः शुभाशुभा मेघवाहका भवंति मेघावृतं व्योम भवति दुर्दिनमित्यर्थः । जलनाडीगताः शुभाशुभं जलं प्रयच्छंति । अमृताख्यानाडीगता अतिजलम् । सप्तनाडीफलानि चन्द्रयोगे सति बोद्धव्यानि ॥ १५ ॥

**एकोप्येतत्फलं दत्ते स्वनाडीसंस्थितो ग्रहः ॥ शुभूतः सर्वनाडीस्थो दत्ते नाड्युद्भवंफलम् ॥१६ ॥ प्रावृट्काले समायाते रौद्रऋक्षगते रवौ ॥ नाडीवेधसमायोगे जलयोगं वदाम्यहम् ॥१७॥ यत्र नाडीस्थितश्चंद्रस्तत्रस्थाः खेचरा यदि ॥ क्रूरसौम्यविमिश्राश्च तद्दिने वृष्टिरुत्तमा ॥ १८ ॥एकऋक्षसमायोगो जायते यदि खेचरैः ॥ तत्र काले महावृष्टिर्यावत्तस्यांशके शशी ॥ १९ ॥ केवलैः सौम्यपापैर्वा ग्रहैर्विद्धो यदा शशी ॥ तदातितुच्छं पानीयं दुर्दिनं तु भवेद्ध्रुवम् ॥ २० ॥ यस्य ग्रहस्य नाडीस्थश्चंद्रमास्तद्ग्रहेण चेत् ॥ दृष्टो युक्तः करोत्यंभोयदि क्षीणो न जायते ॥ २१ ॥**

एकोपीति । एकोपि स्वस्वनाडीगतः स्वनाडीसमफलं करोति । यथा शनिः स्वनाडेस्थः कृत्तिका च विशाखा च मैत्राख्यं भरणी तथेत्यत्रादिस्वनाडीस्थचंडाख्यनाडेस्थश्चण्डं प्रचण्डं वायुं करोति । एवं सूर्यः स्वनाडीस्थो वायुं करोति । भौमः स्वनाडीस्थो दाहं करोति । जीवः स्वनाडीस्थो मध्यमः । नीरनाडीगतो शुक्रो नीरं करोति । बुधो जलनाडीस्थो जलम् । चन्द्रमा अमृतनाडीगतोमृतं जलं प्रयच्छति । एकोपि भौमः पुनः सर्वनाडीगतो सर्वफलं चण्डाख्यादि करोति । एतावदर्थाः सर्वदैव चिंत्याः ॥ १६ ॥ अधुना आर्द्रादिगते रवौ सप्तनाडीगते जलयोगान्वक्ष्ये । प्रावृट्कालेति ॥ १७ ॥ यत्र नाडीति । समचतुःकोष्ठस्थः नक्षत्राणां वेधः तेन यत्र कुत्रचित् चतुर्णां मध्ये ग्रहःस्थितः ग्रहेण चन्द्रो विध्यते ॥ १८ ॥ एकऋक्षेति ॥ १९ ॥ केवलैरिति । सौम्यैर्वा केवलैः पापैर्वा केवलैर्यदि शशी विध्यते तदा तद्दिने स्वल्पं तुच्छं पानीयं पतति परं मेघदुर्दिनं भवति ॥ २० ॥ २१ ॥

**पीयूषनाडिगश्चंद्रस्तत्र खेटाः शुभाशुभाः ॥ द्वित्रिचतुःपंच-**

१ त्रिचतुः इत्यपि पा० ।

पानीयं दिनान्येकत्रिसप्तकम् ॥ २२ ॥ एवं जलाख्यनाडिस्थे चंद्रे मिश्रग्रहान्विते ॥ दिनार्धं दिवसं पंचदिनानि जायते जलम् ॥ २३ ॥ नीरनाडिगते चंद्रे तत्रस्थैः पूर्ववद्ग्रहैः ॥ यामं दिनार्धं त्रीणि दिनानि जायते जलम् ॥ २४ ॥ अमृतादित्रये यत्र भवंति सर्वखेचराः ॥ तत्र वृष्टिः क्रमाज्ज्ञेया धृत्यर्करसवासरैः ॥ २५ ॥ सौम्यनाडीगताः सर्वे वृष्टिदास्ते दिनत्रयम् ॥ शेषनाड्यां महावातदुष्टवृष्टिप्रदा ग्रहाः ॥ २६ ॥ निजला जलदा नाडी भवेद्योगे शुभाधिके ॥ क्रूराधिकसमायोगे जलदाप्यंबुदाहकः ॥ २७ ॥ याम्यनाडीस्थिताः क्रूरा अनावृष्टिप्रसूचकाः ॥ शुभयुक्ता जलांशस्थास्तेऽतिवृष्टिप्रदा ग्रहाः ॥२८॥ एकनाडीसमारूढौ चंद्रमाधरणीसुतौ ॥ यदि तत्र भवेज्जीवस्तदार्णविता मही ॥ २९ ॥ बुधशुक्रौ यदैकत्र गुरुणा च समन्वितौ ॥ चंद्रयोगे तदा काले जायते वृष्टिरुत्तमा ॥ ३० ॥ जलयोगे समायांतौ तदा चंद्रसितौ ग्रहौ ॥ क्रूरैर्दृष्टौ युतौ वापि तदा मेघोल्पवृष्टिदः ॥ ३१ ॥ उदयास्तमये मार्गे वक्रयुक्ते च संक्रमे ॥ जलनाडीगताः खेटा महावृष्टिप्रदायकाः ॥ ३२ ॥ व्रजति यदि कुजः पद्ममार्गे घट इव भिन्नतले जलं ददाति ॥ यदि भवति च भास्कराग्रगामी प्रलयघनानपि शोषितुं समर्थः ॥ ३३ ॥ इति श्रीयामलीयस्वरोदये सप्तनाडीचक्रम् ॥

पीयूषेति । प्रावृषि काले अमृताख्यनाडीगतश्चन्द्रः आश्लेषामघाश्रवणधनिष्ठा पुनस्तत्रैव नाड्यां शुभाशुभमिश्रिता ग्रहा भवंति तदा पानीयं भवति । कतिदिनानि पानीयं भवति तत्रायं विधिः । द्विचतुः पंचपानीयं शुभाशुभाभ्यां पीयूषनाडीयुक्तो वेधितः द्वादशारचक्रे दृष्टश्च तदा दिनद्वयेन पानीयं भवति । तत्र चन्द्रः पापद्वयशुभद्वयैः एवं चतुर्भिर्ग्रहैर्युक्तो वेधितश्च पीयूषनाडीगतस्तदा चतुर्दिनानि पानीयम् । यदा पंचभिः शुभपापैस्तदा पंचदिनानि व्याप्य पानीयम् । अथैकनक्षत्रे एकदिनवर्षणं युक्तमेतत् । द्विचतुःपंचपानीयमिति कथं संपद्यते । तत्रोच्यते । काले अयं वर्षणयोगः यदा एवंविधो योगश्चन्द्राद्भवति द्वि २ चतुः ४ पंचभि ५ स्तुल्यं द्विदिनं चतुर्दिनं पंचदिनानि पानीयमिति योग्यम् ॥ २२ ॥ योगांतरं

एवमिति । अत्रापि ग्रहयोगः पूर्ववत् व्याख्यानं च ॥ २३ ॥ पुनर्योगांतरमाह । नीरनाडी-गतेति । कियत्कालं भवति तत्रस्थैः पूर्ववद्ग्रहैः यामं १ दिनार्द्धकं ३० त्रीणि दिनानि च जलं पतेत् । अत्रापि द्विचतुः ४ पंचभिः ५ ग्रहैः पूर्ववदुक्तदृष्टवेधितः यथासंख्यं यामैकं दिनार्धं ३० त्रीणि दिनानि पानीयपतनं भवेदिति ॥ २४ ॥ योगांतरमाह । अमृतादीति । अमृता-नाडीषु चेत्सर्वग्रहा भवन्ति तदा चन्द्रयोगदिनादारभ्याष्टादशदिनानि वर्षति ॥ जलाख्यासु चेद्ग्रहाः सर्वे तदा द्वादशदिनानि वृष्टिः । नीरनाडीषु सर्वे स्थितास्तदा षड्दिनानि व्याप्य वृष्टिर्भवति । परं चन्द्रयोगादारभ्य अत्राभ्यंतरे यदा तु नाड्यां चन्द्रयोगस्तदा बहुधारया जलं पतति ॥ २५ ॥ पुनर्योगांतरमाह ॥ सौम्यनाडीति ॥ २६ ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ॥ ३१ ॥ ३२ ॥ ३३ ॥ इति नरपतिजयचर्याटीकायां जयलक्ष्म्यां सप्तनाडीचक्रम् ॥

## ॥ समुद्रचक्रम् ॥

<table>
<tr><td>पर्वत १</td><td>संधि २</td><td>समुद्र २</td><td>तट २</td><td>पर्वत १</td></tr>
<tr><td colspan="2">तट २</td><td rowspan="2"></td><td colspan="2">संधि २</td></tr>
<tr><td colspan="2">समुद्र २</td><td colspan="2">समुद्र २</td></tr>
<tr><td colspan="2">संधि २</td><td rowspan="2">समुद्र २</td><td colspan="2">तट २</td></tr>
<tr><td>पर्वत १</td><td>तट २</td><td>संधि १</td><td>पर्वत १</td></tr>
</table>

अथ समुद्रचक्रम् ॥ कृत्तिकादि लिखेच्चक्रं मेषसंक्रांतिवासरः ॥ दिनऋक्षं भवेद्यत्र तत्र वृष्टिफलाफलम् ॥ १ ॥ अतिवृष्टिः समुद्रे च तटे वृष्टिस्तु शोभना ॥ संधिश्च खंडवृष्टिश्च अनावृष्टिर्न पर्वते ॥ २ ॥

इति समुद्रचक्रम् ॥ आर्द्रादिदशस्त्रीणां च विशाखात्री नपुंसके ॥ मूलाच्चतुर्दशे पुंसां नक्षत्रे फलमीदृशम् ॥ १ ॥ स्त्रीपुन्न वर्षते मेघा बहुवातस्त्रीनपुंसके ॥ स्त्रीयोगे बहुशीतं च पुंयोगे बहुदाहकम् ॥२॥ इती स्त्रीपुंयोगः ॥ ऋक्षप्रवेशे यदि भार्गवश्च चंद्रे त्रिकोणे यदि केंद्रगे वा ॥ जलालयस्थे भृगुजे क्षितौ युतौ संपूर्णमेघा जलदा भवंति ॥ १ ॥ मत्स्यः कुलीरे मकरे बहूदकं कुंभे वृषे चापजला-र्धमात्रम् ॥ अली च तौली जलसंज्ञमाहुः सिंहादिशेषा अजला भवंति ॥ २ ॥ कृत्तिकादित्रयं ऋक्षमारुद्रात्पंचभिः सह ॥ पूर्वाषाढाचतुष्कं च पूर्वाभाद्रपदांतिमे ॥ ३ ॥ इत्येषां चंद्रनक्षत्रं शेषं सूर्यस्य उच्यते ॥ सूर्ये सूर्ये भवेद्वायुश्चंद्रे चंद्रे न वर्षति ॥ ४ ॥ चंद्रसूर्यौ भवेद्योगस्तदा वर्षति माधवः॥ ५ ॥ इति चंद्रसूर्ययोगः ॥

अथ समुद्रचक्रम् ॥ कृत्तिकादीति ॥ १ ॥ २ ॥ इति समुद्रचक्रम् ॥ अथ स्त्रीपुंयोगः। आर्द्रादीति ॥ १ ॥ २ ॥ इति स्त्रीपुंयोगः ॥ अथ चन्द्र सूर्ययोगः ॥ ऋक्षप्रवेशे ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ इति चन्द्रसूर्ययोगः ॥

स्वातीपयोत्तरा रौद्रे प्रजापत्युत्तरासु च ॥ यावत्तिष्ठति भूमीजस्तावदेव न वर्षति ॥ १ ॥ तदनुग्रहयोगः॥इंदौ शनौ गिरीसंस्थौ भानुर्वा भूमिनंदनः ॥ शिशोरिवायुर्वा वर्षं भूलोके भूतिदं भवेत् ॥ २ ॥ कनकं पुरतो गच्छेद्भानुभार्गवयोरपि ॥ तुषारवर्षः पर्जन्यो वर्षेदुः खंडमंडलम् ॥ ३ ॥ जलराशिस्थिते चंद्रे जामित्रे नवमे तथा ॥ अर्कसूनुश्च भौमश्च अतिवृष्टिं च मुंचति ॥ ४ ॥ कुजज्ञौ रविजश्चैव शुक्रस्याग्रे सदा यदि ॥ शुद्धोतिवायुर्दुर्भिक्षं जलनाशकरस्तथा ॥ ५ ॥ प्रवृष्टींदुसितः समराशिगः शुभवीक्षितः ॥ मंदत्रिकोणसप्तस्थो अथवा दृष्टिकृद्भवेत् ॥ भृगोः सुते प्रवृष्टिश्च शीतरश्मीतरस्थितः ॥ ६ ॥ सौम्ये विशेषेण पतंगपुत्राद्यदि त्रिकोणे यदि केंद्रगे वा ॥ जलालयस्थे भृगुजेक्षिते वा मेघाश्च संपूर्णजला भवंति ॥७॥ गुरौ सिते च जामित्रे सितादर्काद्गुरावपि ॥ जामित्रेर्कौ ग्रहाः सर्वे अनावृष्टिर्भवेत्तदा ॥ ८ ॥ अत्र च--वृष्टिः शीतकरो भृगुपुत्रात्समराशिगतः शुभदृष्टः ॥ सूर्यसुतान्नवपंचमगो वा सप्तमगश्च जलागमनाय ॥ ९ ॥ पूर्वे स्वातीत्रये भानौ पश्चिमे पितृपंचकम् ॥ अनावृष्टिर्विजानीयाद्विपरीते प्रवर्षणम् ॥ १० ॥ पुरो गीरमनावृष्टिः पुरा शुक्रप्रवर्षणम् पुरो देवगुरौ वह्निः पुरा सौम्योथवानिलः ॥ ११ ॥ ज्येष्ठमासि सिते पक्षे रौद्रादि दशतारकाः ॥ सजला निर्जला ज्ञेया निर्जला सजला भवेत् ॥१२॥ इति ज्येष्ठमासे प्रतिपदाफलम् ॥ ॥

ज्येष्ठप्रतिपदाफलम् ॥ स्वातीति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ इति ज्येष्ठप्रतिपदाफलम् ॥

अदित्ये बहुवातं च भूमिजे शत्रुपीडनम् ॥ बुधे चैव तु दुर्भिक्षं शनिवारे महद्भयम् ॥ १ ॥ सोमे शुक्रे गुरौ वापि सुभिक्षं जायते ध्रुवम् ॥ उदयं भार्गवे चैत्रे वह्निराजव्यवस्थिते ॥ २ ॥ वैशाखे च भवेन्नाशो सर्वनाशं चतुष्पदम् ॥ ज्येष्ठे च सजला पृथ्वी आषाढे जलशोषके ॥ ३ ॥ श्रावणे कम्पिता भूमौ धनधान्यं नभस्यके ॥ आश्विने कार्तिके मार्गे सहितं च प्रवर्तते ॥ ४ ॥ पौषे चैव तथा माघे राष्ट्रभंगं विनिर्दिशेत् ॥ फाल्गुने अल्पवृष्टिश्च उदयास्तंभृगोः फलम् ॥ ५ ॥ उदयास्तफलानि ॥

उदयास्तफलम् ॥ आदित्येति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ उदयास्तफलानि शुक्रद्वाराणि॥

भरण्याष्टम्यऋक्षाणि मेघद्वारं प्रकीर्तितम् ॥ प्रभूतं वर्षते मेघः सुभिक्षं जायते ध्रुवम् ॥ १ ॥ मघादि पञ्च ऋक्षाणि वायुद्वारं प्रकीर्तितम् ॥ उन्नता चैव मेघाश्च न वर्षन्ति कदाचन ॥ २ ॥ स्वात्यादित्रीणि ऋक्षाणि धर्मद्वारं प्रकीर्तितम् ॥ सुभिक्षं क्षेममारोग्यं बहुवृष्टिश्च जायते ॥ ३ ॥ ज्येष्ठादि पञ्चऋक्षाणि रेतद्वारं प्रकीर्तितम् . उन्नता अल्पमेघाश्च अल्पसौम्यश्च जायते ॥ ४ ॥ धनिष्ठादिषडृक्षाणि हेमद्वारं प्रकीर्तितम् ॥ सुभिक्षं जायते सर्वे मेघा वर्षति तु ध्रुवम् ॥ ५ ॥ इति स्वरोदये शुक्रद्वाराणि ॥

भरणीति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ इति शुक्रद्वाराणि ॥

अतिवातं च निर्वातमत्युष्णं शीतशीतलम्॥ अत्यभ्रं च निरभ्रं च षड्विधं मेघलक्षणम् ॥ १ ॥ यावत् काकोदरा मेघा यावत्सूर्यः शशीसमः ॥ यावन्नैर्ऋतिको वायुस्तावद्देवो न वर्षति ॥ २ ॥ चित्रा स्वातिविशाखासु श्रवणेति जलं तथा ॥ तदा तुल्यादिकं कृत्वा नदीतीरे उपासनात् ॥ ३ ॥ श्रवणे स्वातिपञ्चम्यामस्तं याति दिवाकरः ॥ अवृष्टिर्यदि पर्जन्यो जलसादपि सर्वथा ॥ ४ ॥उदयं सोमजो याति चास्तं याति भृगोः सतः ॥ श्रावणे चैत्रमासे तु

तत्र पातं च दुर्लभम् ॥ ५ ॥ उत्तरा पूर्वसस्या च परसस्या च रेवती ॥ अश्विनी सर्वसस्या च यदि वर्षति कृत्तिका ॥ ६ ॥ रेवती तोयनाशाय धान्यनाशाय चाश्विनी ॥ भरणी सर्वनाशाय यदि वर्षति कृत्तिका ॥ ७ ॥ स्वाती ज्येष्ठा मघार्द्रा च रोहिण्युत्तरमेवच ॥ भूमिजस्तत्र चायाति ह्यनावृष्टिकरः स्मृतः ॥ ८ ॥ इति वृष्टिलक्षणम् ॥

वृष्टिलक्षणम् ॥ अति वातमिति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ इति वृष्टिलक्षणम् ॥

## अथ कालदंष्ट्राचक्रम् ॥




अथ कालदंष्ट्राचक्रम् ॥ नवोर्ध्वगानि धिष्ण्यानि नवातिर्यग्गतानि च॥ अधोगतानि धिष्ण्यानि नव चैवं विनिर्दिशेत् ॥ १ ॥ चतुर्नाडीगतो वेधो मध्ये ऋक्षत्रयोज्झितः ॥ सर्पाकारस्य चक्रस्य कालचक्रं प्रजायते ॥ २ ॥ त्रीणि मध्यगतर्क्षाणि तानि कालमुखानि तु ॥ कोणस्थिते च द्वे धिष्ण्ये ते च दंष्ट्राद्वयं मतम् ॥ ३ ॥ दिनर्क्षमादितः कृत्वा नामर्क्षं यत्र संस्थितम् ॥ मुखदंष्ट्रागते मृत्युः शुभमन्यत्र संस्थिते ॥४॥ ज्वरिते नष्टदष्टे च विवाहे विग्रहे रणे ॥ कालदंष्ट्रास्यगे मृत्युर्वामर्क्षे तु महद्भयम् ॥ ५ ॥ इति कालदंष्ट्राचक्रम् ॥

---

१ कालदंष्ट्रास्यगं नाम यस्य तस्य महद्भयम् । इत्यपि पाठः ॥

अथ कालदंष्ट्राचक्रम् ॥ नवोर्ध्वगानीति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ इति कालादंष्ट्राचक्रम् ।

## सूर्यफणिचक्रम् ।




अथ सूर्यफणिचक्रम् ॥ सप्तविंशति भान्यत्र पंक्तियुक्ता क्रमेण च ॥ त्र्यंतरे त्र्यंतरे वेधः फणिचक्रं त्रिनाडिकम् ॥१॥ यत्र ऋक्षे स्थितो भानुस्तदादौ गणयेद्बुधः ॥ नाम ऋक्षं स्थितं यत्र ज्ञेयं तत्र शुभाशुभम् ॥२॥ कुर्यान्मृत्युं च रोगं च नाडीवेधगतं नृणाम्॥ वर्जयेत्सर्वकार्येषु युद्धकाले विशेषतः ॥ ३ ॥ निर्वेधऋक्षमध्यस्थं यस्य नाम प्रजायते ॥ सिध्यंति सर्वकार्याणि संग्रामे विजयी भवेत् ॥४॥ इति यामले स्वरोदये सूर्यफणिचक्रम् ॥

सूर्यफणिचक्रम् । सप्तविंशतीति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ इति सूर्यफणिचक्रम् ॥

## अथ चन्द्रफणिचक्रम् ।




चन्द्रफणिचक्रम् ॥ सूर्ये फणीश्वरे चक्रे यदुक्तं च शुभाशुभम् ॥ चन्द्रादौ तत्फलं सर्वं ज्ञेयं चंद्रफणीश्वरे॥ १ ॥ यदींदुर्जन्मनक्षत्रमेकनाड्यां स्थितं भवेत् ॥ तदासौ जायते मृत्युः कालज्ञानेन भाषितम् ॥ २ ॥ इति चद्रफणीश्वरचक्रम् ॥

चंद्रफणिचक्रम् । सूर्येति ॥ १ ॥ २ ॥ इति चंद्रफणिचक्रम् ॥

---

१ हत सैन्यविनायक इत्यपि पा०

## ॥ कविचक्रम् ॥



हीनसैन्यः सदा स्थायी यायी सैन्याधिकः सदा॥ अबलस्य बलोपायं वक्ष्येहं कविसंगरे ॥१॥ प्रयाणे चोत्प्रयाणे च निशीथे मृगयां गते ॥ शोकार्ते व्यसने प्राप्ते हीने सैन्ये विनायके ॥ २ ॥ अष्टधा कविकालस्तु कथितो दुर्बले नृपे ॥ इह युद्धं प्रकुर्वीत जयतीह न संशयः ॥ ३ ॥ कविः शिखी पिंगलिका कपोत्यर्कात्प्रवेशने ॥ युद्धार्णवात्तु निर्य्याणे उल्लेकी धकरी बकी ॥ ४ ॥ कवियुद्धे यत्र धिष्ण्ये तदग्रर्क्षे त्रिपावकः ॥ तदा भवेन्मार्गगमो मार्ग्गरोधस्तु पृष्ठके ॥ ५ ॥ जीववारेऽर्कभे शिख्यां समयुद्धम्प्रजायते ॥ स्वात्यां चार्केह्नि पिंगल्यां यायिनो वह्निजं भयम् ॥ ६ ॥ पुनर्वसौ भौमदिने कपोत्यां यायिनो मृतिः ॥ युद्धार्णवायां मन्देह्नि वह्निभे म्रियते गमी ॥ ७ ॥ वैश्वे चन्द्रेह्नि चोल्लेख्यां हयं त्यक्त्वा व्रजेद्गमी ॥ धकट्यां वारुणे ज्ञेह्नि यायिनस्सैन्ययोर्मृतिः ॥ ८ ॥ बक्यां पुष्ये भृगुदिने यायी बन्धमवाप्नुयात् ॥ सदोषामपि निर्दोषामुल्लेखीं वर्ज्जयेत्कवौ ॥ ९ ॥ उदयास्तौ स्वरौ येषां जन्मस्थः सप्तमो विधुः ॥ तद्दिने ते भटाः सर्व्वे वर्ज्जनीयाः कवौ रणे ॥ १० ॥ जन्मस्थः सप्तमश्चन्द्रः पञ्चमो नवमोपिवा ॥ पुरस्य पुरनाथस्य तत्काले भंगमादिशेत् ॥ ११ ॥ चतुरस्रं त्रिनाडीकं कविचक्रं लिखेद्भुवि ॥ प्रवेशनिर्गमे भानि स्थानधिष्ण्यादि विन्यसेत् ॥ १२ ॥ यदि नामोज्झिते स्थाने शत्रुसैन्यं व्यवस्थितम् ॥ तत्र चक्रं समालेख्यं सेनाध्यक्षर्क्षपूर्वकम् ॥ १३ ॥ त्रीणित्रीणि प्रवेशे च ईशादौ

विदिशि क्रमात् ॥ निर्गमे चतुष्कं च पूर्वाशादिक्रमेण च ॥१४॥ ईशादौ बाह्यतो मध्यं मध्याद्बाह्यं तु पूर्वतः ॥ प्रवेशो बाह्यतः कोणे मध्याद्दिक्षु विपर्ययः ॥ १५ ॥ सौम्याः क्रूरग्रहास्तत्र प्रवेशे निर्गमे तथा ॥ वक्रातिचारगत्या च ज्ञात्वा कविरणं कुरु ॥१६॥ जीवपक्षे स्थिते चन्द्रे अकुलर्क्षे प्रवेशके ॥ यानं कविरणे प्रोक्तं ज्ञात्वा प्रावेशनिर्गमौ ॥१७॥ उदितास्तस्वरो येषां जन्मऋक्षेंदुसंभवः ॥ तद्दिने ते भटाः सर्वे वर्जनीयाः कवौ रणे ॥१८॥ क्रूरे शीघ्रे प्रवेशर्क्ष यत्र तत्र विशेद्रणम् ॥ वक्रस्ते निर्गमे सौम्ये तद्दिशानिर्गमं कुरु ॥१९॥ प्रवेशर्क्षे प्रवेशं च निर्गमे निर्गमस्तथा ॥ भूबलं पृष्ठतः कृत्वा प्रोक्तः कविरणे जयः ॥ २० ॥ इति कविचक्रम् ॥

अथ कविचक्रम् । हीनसैन्य इति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ सौम्या इति ॥ सौम्या वक्राः प्रवेशे क्रूरातिचारगाः निर्गमे इत्यर्थः ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ प्रवेशर्क्ष इति ॥ वामे वक्रिणि पापे वा पृष्ठे वापि जयो रणे । क्रूरे पृष्ठे जयो युद्ध इत्यादि वक्ष्यमाणभूबलम् ॥ १२ ॥ १३ ॥ १४—२० ॥ इति कविचक्रम् ।

## ॥ खलकोटचक्रम् ॥



अथ खलचक्रम् ॥ चतुरस्रं चतुर्द्वारं खलचक्रे लिखेद्बुधः॥ नंदादितिक्षयो न्यस्य पूर्वद्वारक्रमेण च ॥१॥ पूर्वाशादिचतुष्केषु सप्तसप्तक्रमेण च॥ कृत्तिकादि लिखेन्मध्ये खले भान्यष्टविंशतिः॥२॥ शनिचंद्रौ कुजः सौम्यो भानुशुक्रौ गुरुस्तमः॥ मध्ये बहिर्गता ज्ञेया अपसव्यदिशां क्रमात् ॥३॥ यद्दिने यद्दिशि स्युस्ते तिथिधिष्ण्यदिनाधिपः ॥ प्रवेशः खलकद्वारे कर्तव्यस्तद्दिशां सदा ॥ ४ ॥ खलकाभ्यन्तरे कालः शनिसूर्येज्यमंगलैः ॥ बुध शुक्रेंदुभिर्बाह्ये स्थायी यायी क्रमाज्जयी ॥ ५ ॥ खलके मध्यनक्षत्रे यो ग्रहो यत्र संस्थितः ॥ तत्र स्थानगते चन्द्रे फलं वक्ष्ये शुभाशुभम्॥६॥ सूर्यस्थानगतः शूरो म्रियते चन्द्रमिश्रिते ॥ भौमस्थाने महाक्रोधी बुधस्थाने महद्भयम् ॥ ७ ॥ गुरुस्थान मतिस्थैर्यं भंगमायाति भार्गवे ॥ शनिस्थाने क्षतं युद्धं राहुस्थे मरणं ध्रुवम् ॥८॥ वक्रस्थाने भवेद्भंगः शीघ्रस्थाने च धावति ॥ समाचारगते स्थायी क्षीणेन्दाववगूहति ॥ ९ ॥ क्रूरे पृष्ठे जयो युद्धे सौम्ये पृष्ठे पराजयः ॥ क्रूरे च सन्मुखे मृत्युर्जयः सौम्येग्रसंस्थिते ॥ १० ॥ योधयोः पृष्ठगाः क्रूरा उभयोर्मृत्युकारकाः ॥ सौम्याः सन्धिप्रदा युद्धे मिश्रामिश्रफलप्रदाः ॥ ११ ॥ दिननक्षत्रमारभ्य त्रिभिः सुप्तो द्विशेषके ॥ शून्यैकशेषे ग्राह्यस्तु जागर्तीति विनिश्चितम् ॥ ॥१२॥ इति श्रीब्रह्मयामले स्वरोदये षडंगेन नरपतिजयचर्यायां खलचक्रं समाप्तम् ॥

अथ खलचक्रम् ॥ चतुरस्रमिति ॥ १ ॥ २ ॥ ३ ॥ यद्दिन इति ॥ मतांतरे सूर्यनक्षत्रात् पसव्येन नक्षत्रन्यासः खले कपोतन्यायेन भटानां रणे प्रवेशः खलशब्दार्थोऽत्र ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ अवगूहति आवृणोति ॥ ९ ॥ १० ॥ ११ ॥ १२ इति नरपतिजयचर्याटीकायां जयलक्ष्म्यां खलचक्रं समाप्तम् ॥

अथ समचतुरस्रादिकोटचक्राणि ॥ अथातः संप्रवक्ष्यामि कोटयुद्धस्य निर्णयम् ॥ स्तोकारिः कुरुते यत्र भूरिसन्यपराभवम् ॥ १ ॥ यस्याश्रयबलादेव राज्यं कुर्वंति भूतले ॥ विग्रहं चतुराशासु सीमास्थैः शत्रुभिः सह॥२॥

॥ समचतुरस्रकोटचक्रम् ॥



विषमं दुर्गमं घोरं चक्रं भीरुभयावहम् ॥ कपिशीर्षैस्तु शोभाढ्यं रौद्राट्टालकमंडितम् ॥ ३ ॥ प्रतोली यस्य काला स्यात्परिखा कालरूपिणी ॥ रणतूर्यकृताटोपं डिंकुलीयंत्रयंत्रितम् ॥ ४ ॥ मुशलैर्मुद्गरैः पाशैः कुंतखड्गैर्धनुःशरैः ॥ संयुतैः सुभटैः शूरैरिति दुर्गं समादिशेत् ॥५॥ दुर्गस्थो दुर्गमः शत्रुरसाध्यो येन सिध्यति॥ कोटचक्रं प्रवक्ष्यामि विशेषादष्टधा पुनः ॥ ६ ॥ प्रथमं मृन्मयं कोटं जलकोटं द्वितीयकम् ॥ तृतीयं ग्रामकोटं च चतुर्थं गिरिगह्वरम् ॥७॥ पंचमं गिरिकोटं च षष्ठं कोटं च डामरम् ॥ सप्तमं वक्रभूमिस्थं विषमाख्यं तथाष्टमम् ॥ ८ ॥ मृन्मये साधयेत् खंडिं जलस्थे बंधमोक्षणम् ॥ ग्रामदुर्गेऽग्निदाहं च प्रवेशं गह्वरे तथा ॥ ९ ॥ पर्वते स्थानभेदं च भूबलं भूपडामरे ॥ वक्राख्ये कवियोगं च विषमे स्थायियायिनाम् ॥१०॥ अति दुर्गं कालकर्णं चक्रावर्तं च टिंपुरम् ॥ तलावर्तं च पद्माख्यं यक्षभेदं शमाख्यकम् ॥११॥ एतन्नामाष्टकं ज्ञेयं वर्गाष्टकक्रमेण च ॥ यस्य वर्गस्य यो भक्ष्यः सवर्गस्तस्य भंगदः ॥ १२ ॥

अथ समचतुरस्रादिकोटचक्राणि । अथात ॥ १ ॥ यस्याश्रयेति ॥ यस्य दुर्गमस्याश्र बलात् स्तोकारिः स्वल्पबलो राजा भूरिसैन्यपराभवं करोति । गजरथतुरगपदातिसमृद्धवाहि पतिरपि पराभवं प्राप्नोति ॥ चतुर्दिक्षु सीमास्थै राजभिः सह यस्याश्रयबलाद्युद्धं करोति क कोटस्य ग्रहणोपायं वक्ष्ये इति पर्यवसन्नार्थः ॥ २ ॥ विषममिति ॥ दुर्गं किं विशिष्टे विष अधिरोहावरोहाभ्यामशक्यम् अत्युच्चत्वात् । अथवा विषमम् अतिकुटिलम् । दुर्गमं कु खदिरवनाकीर्णं कुत्रापि परिखा कालरूपिणी यत्र परिखायां नक्रादिजंतवो भीषणाका कोटिशः । यत्र कोटविवरे बिलेशयाः विषमफणिफणाफूत्कारैर्भीषयंति । एवं दुर्गमम् । दुर्गोपरि वानरशरीराणि बहुशः छलिपतानि तैः शोभितम् । क्वचित्पर्वश्रृंगाग्रामिवाष्टक कुलम् ॥ ३ ॥ प्रतोलीति । यस्य दुर्गस्य प्रतोलीजलनिर्गममार्गः काल इवाभाति । परिखा कालरूपिणी पर्वतान् करशांतपतितजलकृतमार्गं इव कालरूपणी परिखा । करणाय कृतमाटोपं यत्र ॥ यस्योपरि चतुर्दिक्षु कोटिशः शरप्रक्षेपमार्गालंकृतकिरीटा षाणनिर्मितरणकरणमंडनमंडलानि शोभंते । यदंतर्धानगता योद्धारो भटा युध्यन्ति शोभितम् । पुनर्ढिंकुलीयंत्रयंत्रितं कोटिशः प्रक्षेपणीयपाषाणगोलकप्रक्षेपणयंत्रैर्यंत्रितं सहित ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ अष्टानामेषां साधनोपायमाह मृन्मये साधयेत्खंडिभि ॥ ९ ॥ १० ॥ अष्टानां वर्गक्रमेण नामान्याह । अतिदुर्गमिति । अतिदुर्गमित्यनेन अवर्ग नाम दुर्गवर्णप्रथमम् । कालकर्णमित्यनेन कवर्गाक्षरं नाम दुर्गे द्वितीयम् । चक्रावर्त चवर्गाक्षरं नाम तृतीयम् । टिंपुरमिति टवर्गाक्षरं नाम चतुर्थम् । तलावर्तमिति तवर्गाक्षरं पंचमम् । पद्माख्यमिति पवर्गाक्षरं नाम दुर्गं षष्ठम् । यक्षभेदमिति यवर्गाक्षरं नाम सप्तमम् । शमाख्यमिति शवर्गाक्षरं नाम दुर्गमष्टममिति ॥ ११ ॥ १२ ॥

अ गरुडः क मार्जारश्च सिंहः ट च शुनीसुतः ॥ त सर्पश्च प आखुश्च य मृगः श अजात्मजः ॥ १३ ॥ तार्क्ष्यस्य भक्ष्यो भुजगो बिडालस्य च मूषकः ॥ सिंहस्य भक्ष्यो हरिणः शुनो भक्ष्य अजात्मजः ॥ १४ ॥ दुर्गवर्गस्य ये भक्ष्या वर्गास्तन्नामजा नराः ॥ तद्दुर्गे ते रणे त्याज्या न कर्तव्या गढाधिपाः ॥ १५ ॥ स्ववर्गात्पंचमे स्थाने खंडिभंगश्च जायते ॥ अवर्गाद्यष्टकं ज्ञेयं पूर्वाद्यष्टदिशि क्रमात् ॥ १६ ॥ कोटचक्रं लिखेच्चादौ चतुरस्रं त्रिनाडिकम् ॥ कृत्तिकादीनि धिष्ण्यानि साभिजिन्ति न्यसेद्बुधः ॥ १७ ॥ बहिः कोटे च मध्ये च दुर्गमध्ये बहिः पुनः ॥ प्रवेशो निर्गमस्तत्र ज्ञातव्यः स्वरवेदिभिः ॥ १८ ॥

अथ वर्गाधिपमाह। अगरुड इति। दुर्गस्य यो वर्गः तद्वर्गनाथस्य यो भक्ष्यः तद्वर्णाक्षरनामनराः शूरा अपि दुर्गग्रहणाय सेनापतयो न कार्याः। गढाधिपा अपि न ते कार्याः। यथा कोटस्य नाम अमरगिरिदुर्गममगिरिदुर्गस्य वर्गो अवर्गः अवर्गस्याधिपो गरुडः गरुडस्य भक्ष्यं सर्पः तस्य वर्गस्तवर्गः तवर्गाक्षरनामानो भटाः अमरगिरिदुर्गग्रहणाय सेनापतयो न कार्यास्तदा अग्रेसरा अपि न कार्याः ते दुर्गे विलयं यांति। तथा अमरगिरौ तवर्गाक्षरनामानस्ते अजसिंहनरसिंहदानवार्याद्यप्रभृतयो गढरक्षका न कार्याः यतो दुर्गमेव तान भक्षयिष्मति। एवं पुनः देवगिरौ, दुर्गगढाधिपाः अवर्गाक्षरनामनः अमरसिंह ईश्वरसिंह उद्दियानसिंहप्रभृतयो गढाधिपा न कार्याः स्वस्ववर्गाक्षरनामानः स्वस्वदुर्गे हिता एव। एवं सर्वे वर्गा दुर्गे ज्ञेयाः ॥ १३ ॥ १४ ॥ १५ ॥ अथ दुर्गखंडिमाह। स्ववर्गादिति। दुर्गवर्गस्य या दिक् अवर्गः पूर्वदिशि इत्यादि क्रमेण स्ववर्गदिक्तः पंचमायां दिशि दुर्गखंडिर्भंगश्च। एतावता किं यथा देवगिरिदुर्गस्य तवर्गः तत्र दुर्गं तवर्गं तत्र दवर्गस्तवर्गः पश्चिमायां स्थितः पश्चिमतः पंचमी दिक् प्राची देवगिरौ दुर्गे दुर्गग्रहणाय प्राच्यां यत्नं कुर्यात् कोटग्रहणाय प्रापणिकोयम् ॥ १६ ॥ अधुना विस्तारमाह। कोटचक्रमिति। चतुरस्रं त्रिनाडिकमिति लिखनपरंपरायातं बोद्धव्यम्। आदौ कृत्तिकादिलिखनं पूर्वागमोक्तम्। यतो भूवलमेव दुर्गकोटाधिप ईश्वरः तेन अइउएकृत्तिका ईश्वरनामनक्षत्रादेव न्यास आदियामले। अधुना धरावलये स्वल्पवीर्या राजानः प्रति ग्रामादिषु दुर्गरचना कृता अन्यथा ये किंचिद्बलाधिकास्ते स्वल्पबलिन उन्मूलयंत्येव स्वल्पबलोपि स्ववर्गेणाधिकबलिभिः सह वैरमारभते अतः प्रति दुग भिन्ना रचना। तत्र दुर्गनक्षत्रन्यासे अयमेव विधिः। बाह्यरेखायामीशानकोणे कृत्तिका लेख्या। ततो मध्यरेखायामीशानकोणे रोहिणी लेख्या। ततोभ्यंतररेखायामीशानकोणे मृगशिरः एवं कृते बहिः कोटे च मध्ये चेति लिखनार्थः। अथ मध्यमे कोटे बहिर्बहिरिति। आर्द्रा प्राचीमध्ये लेख्या। पुनर्वसुस्तदुपरि बाह्यरेखायां दुर्गे लेख्या। पुष्यश्च बहिर्बाह्यरेखायां लेख्यः। आश्लेषा च प्राचीबहिर्बाह्ये लेख्या। एवं कृते कृत्तिकादिसप्तनक्षत्राणि बहिः कोटे च मध्ये च बहिः कोटे बहिर्बहिरिति लिखने क्रमो दर्शितः। एवमाग्नेयकोणात् बहिः कोटे च मध्ये च भानि लिखेत्। तथा नैर्ऋत्यकोणतो बहिःकोणे मध्ये चेति प्रवेशलिखनं मध्ये कोटे बहिर्बहिरिति निर्गमलिखनम्। एवं वायव्यकोणे ॥ १७ ॥ १८ ॥

बहिर्द्वादशभान्यत्र प्राकारे तारकाष्टकम् ॥ दुर्गमध्ये तथा चाष्टौ मध्ये स्तंभचतुष्टयम् ॥ १९ ॥ कृत्तिका पुष्यसार्पे च मघा स्वाती विशाखिके ॥ अनुराधाभिजित्कर्णो धनिष्ठाश्वियमाह्वयम् ॥ २० ॥ ब्राह्मं पुनर्वसुर्भाग्यं चित्रा ज्येष्ठोत्तरा तथा ॥ शतभं रेवती चैव

प्राकारे तारकाष्टकम् ॥ २१ ॥ मृगं रौद्रोत्तराहस्तं मूलमाशाढपूर्वकम् ॥ पूर्वोत्तरा तथा भाद्रा मध्ये ऋक्षाष्टकं त्विदम् ॥२२॥ पूर्वे रौद्रं यमे हस्तं पूर्वाषाढा च वारुणे ॥ उत्तरे उत्तरा भाद्रा एतत्स्तंभचतुष्टयम् ॥२३॥ कृत्तिकाद्यं मघाद्यं च मैत्राद्यं वासवादिकम् ॥ त्रीणि त्रीणि प्रवेशे च द्वादशान्यानि निर्गमे ॥२४॥ कृत्तिकादिरयं न्यासः सुबोधार्थं प्रदर्शितः ॥ दुर्गभाद्गणना चात्र ग्रहैर्वाच्यं ततः फलम् ॥ २५ ॥ दुर्गनामस्थितं वर्णं यद्वर्गोदीरितं स्फुटम् ॥ तदीशादि लिखेच्चक्रं क्रमात्स्वरविचक्षणः ॥ २६ ॥

तत्र त्रिनाड्यां लिखितनक्षत्रं सुबोधार्थं वदति । बहिर्द्वादश भान्यत्रेति । बाह्यरेखायां द्वा नक्षत्राणि मध्यरेखायां दुर्गमध्ये अष्टौ नक्षत्राणि मध्यरेखायां दुर्गमध्ये अष्टौ भानि तत्र मध्यरेखायां चाष्टनक्षत्रं मध्ये चत्वारि स्तंभसंज्ञकानि ॥ १९ ॥ चतुर्दिक्षु चत्वारि धिष्ण्य न्यस्तानां नक्षत्राणां पृथङ् नाडीषु नामान्याह । कृत्तिका पुष्येति ॥ २० ॥ २१ ॥ २ ॥ २३ ॥ २४ ॥ २५ ॥ २६ ॥

चतुरस्रं चतुर्दीर्घं त्रिकोणं वृत्तदीर्घकम् ॥ अर्धचंद्रं तथा ज्ञेयं गोस्तनं धनुराकृतिः ॥ २७ ॥ चतुरस्रे यथान्यासो भूमिभागक्रमेण च ॥ प्रवेशनिर्गमस्तंभास्तथावृत्तादि सप्तके ॥२८॥ दुर्गभित्तिविभागेन दातव्यं धिष्ण्यमंडलम् ॥

॥ दीर्घचतुरस्रकोटचक्रम् ॥




तत्रस्थैः खेचरैः सर्वैः फलं वाच्यं यथोदितम् ॥ २९ ॥ बाह्यभे मध्यभे चैव यत्रस्थाः क्रूरखेचराः ॥ तत्र स्थाने कृते यत्ने भिंदेद्दुर्गं ससैन्यकम् ॥ ३० ॥

अथ दुर्गाकारमाह । चतुरस्रमिति ॥ २७ ॥ एष्वष्टदुर्गेषु नक्षत्रन्यासमाह । चतुरस्रे चतुरस्रदुर्गे यथोक्त एव न्यासः । वृत्तादिसप्तके कथं न्यासः कार्यः न प्रवेशः न वा नि ज्ञायते यत्रतत्र न्यासः क्रियते । तत्रायं विधिः । भूमिभागक्रमेण वृत्तादीनां दुर्गाणां न्यासःकार्यःयता रणादिभूमावेव तिष्ठति वृत्तादीनि यत्र यत्र दृश्यंते तत्र तत्र तस्याकृति रादिशि लिखेत् तद्बाह्ये चतूरेखा भूमिःकार्या यथोक्तकोटस्यैव । चतुरस्रभूमिकोटेतन्मा

क्षत्रन्यस्ते तेष्वेव तत्र नक्षत्राणि ज्ञेयानि । ग्रहाश्च तत्र तत्र तद्ग्रहणाय चतुरस्रोक्तेनैव यत्नं कुर्यात् ॥ २८ ॥ एवं कृते दुर्गे विभागः। दुर्गभित्तिविभागेनेति । यत्र पाषाणादिकोटः तदधोभित्तौ बाह्यरेखामध्ये मध्यरेखां तदुपरि मध्य एवं भित्तिविभागः । भित्तिशब्देन पाषाणादिरचित कोट इत्युच्यते । जलदुर्गवनदुर्गपरिखादुर्ग इत्यादिदुर्गाणां चतुरस्रभूमिभागरेखायामेव न्यासः न तस्य ग्रहणं रक्षा च । अधुना ग्रहयोगेन दुर्गग्रहणं रक्षा च गढाधिपगढावरोधकानां शुभाशुभमाह । तत्रस्थैरिति । यस्यां दिशि क्रूरा दुर्गे तिष्ठंति बाह्ये मध्ये तत्र तस्यां दिशि कोटग्रहणाय यत्नं कुर्यात् । दुर्गं भज्यते दुर्गाधिपोपि ॥ २९ ॥ ३० ॥

॥ वर्तुलकोटचक्रम् ॥



बुधशुक्रेंदुजीवाश्च सदासौम्य ग्रहा मताः ॥ शन्यर्कराहुमाहेयाः केतुः क्रूरग्रहा मताः ॥ ३१ ॥ त्रिःप्रकारो ग्रहे चारो वक्रः शीघ्रः समोमतः ॥ उच्चनीचसमास्ते च त्रिधा चक्रे भ्रमंति च ॥ ३२ ॥ ऊर्ध्वं चाधः समस्तिर्यक् दृष्टिभेदश्चतुर्विधः ॥ स्वकं मित्रं समः शत्रुः स्थानभेदश्चतुर्विधः ॥ ३३ ॥ ईज्यो भौमो भृगुर्यत्र बुधः पूर्वादिदिक्स्थितः ॥ कुर्याद्भंगं वाथ भंक्ता क्रूरश्चंद्रसमन्वितः ॥ ३४ ॥ सूर्यमुक्ता उदीगंते शीघ्रगाश्च द्वितीयगे ॥ समास्तृतीयगे ज्ञेया मंदा भानौ चतुर्थगे ॥ ३५ ॥ वक्राः पंचमषष्ठेर्के त्वतिवक्राष्टसप्तमे ॥ नवमे दशमे भानौ जायते कुटिला गतिः ॥ ३६ ॥ शीघ्रगाश्च भवंत्येते द्वादशैकादशे तथा ॥ राहुकेतू सदा वक्रौ रवींदू शीघ्रगौ सदा ॥ ३७ ॥ शीघ्रोतिचारगतया च समश्च सममंदयोः ॥ वक्रातिवक्रकुटिलौ वक्रगतया ग्रहा मताः ॥ ३८ ॥

अथ प्राग्ग्रहाणां स्वभावबलं च उक्त्वा पश्चात् ग्रहफलं वदिष्यति बुधशुक्रेंदुजीवे इति ॥ ३१ ॥ त्रिःप्रकार इति । वक्री ग्रह उच्चे विमंडले भ्रमति शीघ्रग्रहो नीचे भ्रमति उच्चनीचांतराले समगतिर्भ्रमति । चक्रे नक्षत्रगोले ॥ ३२ ॥ ग्रहाणां चतुर्विधा दृष्टिः ऊर्ध्वमिति । कस्याप्यूर्ध्वदृष्टिः कस्याप्यधोदृष्टिः कस्यापि समा दृष्टिः कस्यापि तिर्यग्दृष्टिः एवं चतुर्विधा दृष्टिः । स्थानभेदोपि चतुर्विधः । स्वकमिति ॥ ३३ ॥ ३४ ॥ ३५ ॥ गतिरपि चतुर्विधा । वक्रा इति । एषां व्याख्यानं सर्वतोभद्रे कृतमस्ति । राहुकेत्विति । समगतिर्मंदगतिश्चोक्ता सा शीघ्रातिचारगतिभ्यां समः समैव तुल्या गतिः । या च पुनर्वक्रादि वक्रकौटिल्यादयो गतयः एताभिस्तिसृभिरपि वक्री ग्रह उच्यते । न ता वक्रगतितो भिन्नगतयः वक्रगत्या ॥ ३६ ॥ ३७ ॥ ३८ ॥

## ॥ त्रिकोणकोटचक्रम् ॥



क्रूरोतिक्रूरतां याति सौम्यो याति सुसौम्यताम् ॥ वक्रचारे समुत्पन्ने शीघ्रेप्येवं विपर्ययः ॥ ३९ ॥ मेषो वृषो मृगः कन्या कर्कमीनतुला नृयुक् ॥ आदित्यादिग्रहेषूच्चं नीचं यत्तस्य सप्तमम् ॥ ४० ॥ उच्चनीचाच्च यत्तुर्यं समस्थानं तदुच्यते ॥ उच्चस्थं

मध्यगं नीचं चक्रे चात्र व्यवस्थितम् ॥ ४१ ॥ ऊर्ध्वदृष्टी च भौमार्कौ केकरौ बुधभार्गवौ ॥ समदृष्टी च जीवेंदू शनिराहू त्वधोदृशौ ॥४२॥

क्रूरोतिक्रूरतामिति । तथा प्रोक्तं सर्वतोभद्रे । क्रूरा वक्रा महाक्रूराः सौम्या वक्रा महाशुभाः । वक्रचारे समासन्ने शीघ्रेप्येवं विपर्ययादिति वक्रचारफलम् । पापशुभानां विपर्ययः कोर्थः पापाः शीघ्राः शुभा भवंति शुभाः शीघ्रा अतिशुभा इति ॥ ३९ ॥ मेष इति । यथा मेषो रवेरुच्चं तस्मात्सप्तमं तुला तन्नीचं तयोरंतरेण तुर्यं कर्कमकरौ रवेः समस्थानम् एवं सर्वेषां स्वस्वोच्चनीचं समस्थानं ज्ञेयम् । अत्र चक्रे कोटचक्रे उच्चस्थं ज्ञेयं मध्यस्थं ज्ञेयं नीचस्थमिति ॥ ४० ॥ ४१ ॥ ४२ ॥

सुहृदोर्केंदुभौमेज्या एवं शुक्रज्ञभानुजाः ॥ अन्योन्यवैरिणो ह्येते राहोः सर्वे च शत्रवः ॥४३॥ स्वक्षेत्रस्थे बलं पूर्णं पादोनं मित्रभे ग्रहे ॥ अर्द्धं समगृहे ज्ञेयं पादं शत्रुगृहस्थिते ॥ ४४ ॥ क्रूरा गर्भे पुरं घ्नंति प्राकारे खंडिकारकाः ॥ बहिःस्था वेष्टके सैन्यमृत्युदा नात्र संशयः ॥ ४५ ॥ क्रूरा गर्भे शुभा बाह्ये गृह्यते निश्चितं पुरम् ॥ सौम्या मध्ये बहिः क्रूरा असाध्यं दुर्गमुच्यते ॥ ४६ ॥ क्रूरं चतुष्टयं मध्ये प्राकारे सौम्यखेचराः ॥ भेदाद्भंगो भवेत्तत्र विना युद्धेन गृह्यते ॥ ४७ ॥ प्राकारे संस्थिताः क्रूरा मध्ये सौम्यग्रहा यदि ॥ दुर्गभंगे समुत्पन्ने भंगमायाति वेष्टकः ॥ ४८ ॥ मध्यनाडीस्थिताः सौम्याः क्रूरा बहिरवस्थिताः ॥ सैन्यावर्तो बहिः शत्रोर्विना युद्धे न जायते ॥ ४९ ॥

मित्रामित्र आह । सुहृदोर्केति । अर्केन्दुभौमगुरूणां चतुर्णां रविचन्द्रभौमबृहस्पतयोन्योन्यं सुहृदः ॥ तथा शुक्रबुधशनयोपि स्वस्मिन्सुहृदः । एतेपि अन्योन्यं वैरिणः । रविचंद्रभौमगुरूणां चतुर्णां शुक्रबुधशनयो वैरिणः । शुक्रबुधशनीनां रव्यादयश्चत्वारो वैरणिः । रव्यादयः सर्वे राहोः शत्रवः ॥ ४३ ॥ बलमाह । स्वक्षेत्रस्थ इति ॥ ४४ ॥ क्रूराणां स्वभावमेवाह ॥ क्रूरा गर्भे पुरमिति यदि रविभौमशनिराहुकेतवो गर्भेषु पुरमध्ये भवंति तदा पुरं घ्नंति नगरं परचक्रं हस्तगतं करोति । प्राकारे सकलाः पापास्तदा कोटं घ्नंति बहिःस्थाश्चेत्पापाः तदा वेष्टकान् पुररोधकान् घ्नंति । क्रूराणामेवं स्वभावः । मध्ये कोटे वहिः सकलाः शुभा रक्षका एव ॥ ४५ ॥ पापशुभयोगेन गर्भकोटबाह्यगतेन दुर्गग्रहे नानाफलमाह । क्रूरा गर्भे इति । सुगमम् ॥ ४६ ॥ क्रूरं चतुष्टयमिति ।

प्राकारे कोटे [शुभग्रहा यदि स्युः क्रूरचतुष्टयं पुरमध्ये तदा दुर्गनाथस्य भेदो जा... पुरनाथस्य भेदो जायते पुरनाथस्य मंत्रिणो योद्धा ये अन्ये पुत्रमित्रादयः वेष्ट... धीशं मिलंति वेष्टकाद्धनं गृह्णन्ति तदा विना युद्धेन पुरं गृह्णाति पुररोधकः ॥ ४७॥ प्राकारे संस्थिता] इति । प्राकारे मध्यमानाडीसंज्ञके कोटेयदि क्रूराः सकलाः सदुर्ग... समुत्पन्ने सति वेष्टक एव भंगमायाति कोटग्रहयत्नं हित्वा ससैन्यो भंगमायाति पला... युद्धे हानिर्जायते ॥ ४८ ॥ मध्यनाडीस्थिता इति मध्यनाडी कोटाख्या तत्र शुभग्र... भवंति । पापग्रहा बाह्ये बाह्यनाडीगता भवंति यत्र कोटिग्रहणकाले तदा वि... युद्धेन बहिः शत्रोः-पुररोधकस्य सैन्ये व्याकुलता भवति सैन्यावर्तो जायते । अश्वा... पदातयश्च इतस्ततो धावन्ति कुत्रकुत्रेति व्यवहरन्त इतस्ततो धावन्ति । केपि प... भ्रमानाः केपि कमपि व्याकुलान् पृच्छन्ति । केपि अश्वान् भययुतान् कुर्वंति इत्या... सैन्यावर्तः ॥ ४९ ॥

प्राकारे पुरमध्ये च यदा क्रूरा अधिष्ठिताः ॥ सौम्या बाह्ये तदा दुर्गमयत्नेनापि सिध्यति ॥ ५० ॥ सौम्या मध्ये च कोटे च बाह्ये पापग्रहा यदि ॥ देवैर्ब्रह्मादिभिर्दुर्गं गृह्यते न कदाचन ॥ ५१ ॥ प्राकारे बाह्यगाः क्रूराः सौम्या मध्यगता यदि ॥ युद्धं प्राकारखं- डिश्च पुरभंगो न विद्यते ॥ ५२ ॥ स्तंभांतरगता यस्य ग्रहाः सौम्याः शुभान्विताः ॥ भवेयुस्तस्य कोटस्य न नाशो विद्यते क्वचित् ॥ ५३ ॥ यदि साक्षादहं तत्र युद्धे चात्मगणान्विताः ॥ तथापि न भयं विद्यादिति सत्यं वरानने ॥५४॥ स्तंभांतरगता यत्र रविराहुशनैश्चराः ॥ भूमिपुत्रश्च तस्याशु नाशः कोटस्य निश्चि- तम् ॥ ५५ ॥ मयैव रक्षिते तत्र युद्धे कोटेन संशयः ॥ तथापि न भवेत्सम्यक् ग्रहदोषाद्वरानने ॥ ५६ ॥ सौम्या बाह्ये तथा कोटे मध्येक्रूरग्रहाः स्थिताः ॥ स्वयं दुर्गं प्रयच्छंति वेष्टकायगढाधिपाः ॥ ५७ ॥ बाह्याभ्यंतरगाः क्रूराः प्राकारे शोभना ग्रहाः ॥ रिपुद्वयं क्षयं याति विना युद्धेन निश्चितम् ॥ ५८ ॥ प्राकारस्था ग्रहाः क्रूरा बहिर्मध्ये शुभाः स्थिताः ॥ समं युद्धं भवेत्तत्र खंडिपातो दिनेदिने ॥ ५९ ॥ सौम्याः क्रूरास्तथा चाष्टौ प्राकारे मध्यबा- ह्यगाः एकस्था यत्र कुर्वंति संग्रामं तत्र दारुणम् ॥ ६० ॥

**गजाश्वरथभूपालाः सामन्ता मण्डलेश्वराः ॥ भटामर्दं प्रकुर्वंति सैन्ययोरुभयोरपि ॥ ६१ ॥**

अथान्ययोगांतरमाह प्राकारे पुरमध्ये चेति। प्राकारे मध्यनाड्यां पुरमध्ये तृतीयनाड्यां यदा पापा भवंति। ग्रहद्वयं कोटे। ग्रहत्रितयं मध्ये सकलाः पापा बाह्ये बाह्यनाड्यां अस्मिन्योगे यदि रोधः परचक्रेण क्रियते तदा यत्नेन स्तोकप्रयासेन दुर्गं गृह्यते ॥ ५० ॥ अथान्ययोगांतरमाह। सौम्या मध्ये चेति। शुभग्रहा मध्ये पुरगर्भनाडीस्थाः कोटे च मध्यनाडीगताः शुभद्वयं कोटे पापा बाह्यगताः तदा देवा अपि कोटग्रहाय न समर्था भवंति ॥ ५१ ॥ अथ योगांतरमाह। प्राकारे बाह्यगा इति। पापद्वयं बाह्येऽन्ये पापग्रहाः कोटे शुभाः सकलाः पुरमध्ये अस्मिन्योगे युद्धं भवति। प्राकारखंडिश्च पुरभंगो न विद्यते न गृह्यत इत्यर्थः ॥ ५२ ॥ योगांतरमाह स्तंभांतरगता यस्येति। मध्ये स्तंभचतुष्टयमिति चतुर्दिक्षु चत्वारि नक्षत्राणि स्तंभसंज्ञानि तेषामेकतमस्थाः शुभाः प्रत्येकं व्यवस्थिताः। किंविशिष्टाः शुभान्विताः विशेषेण एकत्रावस्थिताः अथवा शुभान्विताः मित्रग्रहान्विताः मित्रदृष्टा उच्चस्वगृहस्थाः एतैः कारणैः शुभान्विताः कथिताः पापा बाह्यगा एको द्वौ च स्तंभर्क्षं वर्जयित्वा मध्ये स्थिता अपि पापाः तदा तस्य कोटस्य केनाप्युपायेन भेदो दंडः सामदानादिभिर्नाशो न भवति ॥ ५३ ॥ ५४ ॥ योगांतरमाह ॥ स्तंभांतरगता यत्रेति ॥ सुगमम् ॥ ५५ ॥ मयैवेति ॥ सुगमम् ॥ ५६ ॥ योगांतरमाह ॥ सौम्या बाह्येति। बाह्यनाड्यां कोटे मध्यनाड्यां यदि शुभाः यस्मिन्कोटे क्रूराः कोटमध्ये अन्तनार्ड्यां तदा स्वयमेव गढाधिपो वेष्टकाय कोटं ददाति ॥५७॥ योगांतरमाह। बाह्याभ्यंतरगा इति। बाह्यनाड्यां क्रूरद्वयम् अन्तर्नाड्यां च क्रूरद्वयं मध्यनाड्यां शुभाः तस्मिन् दुर्गे परचक्रं गढाधीशो रिपुद्वयं क्षयमायाति। अर्थात् प्रत्यहं युद्धं भवति। एवं यत्र भटाः म्रियंते एवं द्वयमपि बलं नष्टं भवति। न वेष्टकः कोटं ग्रहीतुं शक्तः न वा कोटाधिपस्तमतिक्रमितुं शक्तः समेनैव गच्छति। विशेषोत्र बाह्ये पापा वेष्टकान् घ्नंतीति प्रथमत उक्तम् अन्तर्नाड्यां पापा दुर्गपान घ्नंतीति। मध्ये शुभाः कोटं रक्षंति ॥ ५८ ॥ अस्य विपरीतमाह। प्राकारस्था इति। शुभद्वयं बहिः शुभद्वयं कोटमध्ये क्रूरग्रहा मध्यनाड्यां तत्र दुर्गे समयुद्धं भवति। दिने दिने दुर्गे खंडिः पतति अकस्मान्न गृह्यते। कालांतरेण क्रूर एको द्वौ वा अन्तः प्रविशति शुभो वा बाह्यमायाति तावत्समं युद्धं खंडिपातश्च तदुपरि गृह्यते ॥ ५९ ॥ योगांतरमाह। सौम्याः क्रूरा इति। शुभाशुभा अष्टौ ग्रहा एकत्र बाह्यदुर्गे वा गर्भनाड्यां वा यत्र कोटे भवंति तत्रदारुणं संग्रामं कुर्वंति तस्मिन्काले कोटग्रहणाय यत्नं न कुर्यात्। यतो भटानां क्षयः न दुर्गग्रहः ॥ ६० ॥ कीदृशः संग्रामः आहवः गजाश्वेति। एतावता यत्रायं कोटयोगो भवति तत्रावश्यमेव परचक्रागमः युद्धं च भवति ॥ ६१ ॥

चापकुन्तगदापाशखड्गहस्तैर्महाभटैः ॥ अभंगयोर्द्वयो राज्ञोः सैन्यावर्तः प्रजायते ॥ ६२ ॥ वाहिन्यो रक्तवाहिन्यो दुस्तराः प्रेतसंकुलाः ॥ वसासृक्पंकलिप्तांगाश्चांत्रमालावगुंठिताः ॥ ६३ ॥

॥ वृतदीर्घकोटचक्रम् ॥



गृध्रकाकशिवाश्येनडाकिनीप्रेतसंकुलाः॥ वेतालपालभूताद्याः पिशाचोरगराक्षसाः ॥ ६४ ॥ वेतालचञ्चला भूताः पिशाचाः स्वेच्छया वृताः ॥ ईदृशं च महायुद्धं तत्काले जायते ध्रुवम् ॥ न कश्चिद्विजयी युद्धे द्वयं याति यमालयम् ॥६५॥ समसंख्याः शुभाःक्रूरा बहिर्मध्ये यदा स्थिताः ॥ तदा संधिं विजानीयात्सैन्ययोरुभयोरपि ॥ ६६ ॥ क्रूरैर्भंगो जयः सौम्यैर्मिश्रैर्मिश्रफलं मतम् ॥ विचार्यकुरुते युद्धं कोटचक्रे स्वरोदयी ॥ ६७ ॥ प्रवेशधिष्ण्यगे चन्द्रे जीवपक्षार्क्षसंस्थिते ॥ निशीथे कवियुद्धं तु कर्तव्यं बाह्यसैन्यकैः ॥ ६८ ॥

पुनः कीदृशः संग्रामः । चापेति । राज्ञोर्द्वयोरभंगः कोर्थः द्वौ राजानौ घातं विना ति॰ एवं विशिष्टयो राज्ञोरभंगयोः सैन्यावर्तः परस्परं वलानि स्वराजरक्षां कुर्वंति । अभंगशब्देन ॰ न जायते तदाग्रिमश्लोकार्थो न घटते ॥६२॥ वाहिन्य इति । एतावता किं जातम् अष्टौ ॰ यत्र दुर्गे सैन्यकोटे वा कविरणे वा दृश्यंते । बाह्यरेखायामेकत्र मध्यरेखायामेकत्र गर्भरेखा॰ मेकत्र तस्मिन्काले पुरग्रहणाय यायी यत्नं नैव कुर्यात् । परचक्रम् स्वसैन्यं गृहीत्वा प॰ व्रजेत् । यत्र स्थाने अष्टौ ग्रहा एकत्र तत्र कविं न कुर्यात् । यायी स्थायी च द्वयं वि॰ याति ॥ ६३ ॥ ६४ ॥ ६५ ॥ अतः परं संधिमाह । समसंख्या इति । शुभद्वयं पाप॰ बाह्ये तदा उभयोः प्रीतिर्जायते ॥ ६६ ॥ विचार्येति । स्वरशास्त्रज्ञो यत्र तदादे॰ नृपः पापा दुर्गलाभयोगं प्राप्य कोटयुद्धं समारभेत् । कोटाधिपो वेष्टका॰ शभंगयोगान् ज्ञात्वा युद्धाय प्रसज्जेत । अन्यथा स्वपराजयं दुर्गभंगं ज्ञात्वा किंचिद्दानं दत्वा ॰

चक्रं विसर्जयेत्। यत उक्तम्। "सर्वनाशे समुत्पन्ने त्वर्द्धं त्यजति पंडितः"। अथवा "प्रक्षालनाद्धि पंकस्य दूरादस्पर्शनं वरमिति" ॥ ६७ ॥ उभयोः कवियुद्धसमयं योगं चाह। प्रवेशधिष्ण्यगेति। जीवपक्षनक्षत्रे चंद्रे दिननक्षत्रे तत्कालनक्षत्रे वा चंद्रे प्रवेशस्थे चतुर्दिक्स्थाननक्षत्रगे चंद्रे तस्यां विदिशि कोणदिशि वाह्यस्थसैन्यकैः निशि कविं कुर्यात्। यद्यप्युक्तमवलस्य वलोपायं वक्ष्येहं कविसंगरे। तथापि यायी राजा स्वजयाय कवियुद्धेनापि दुर्गं गृह्णीयात्। यतो दुर्गस्थो दुर्गमः शत्रुरिति। असाध्यः केनाप्युपायेन साधयेत् ॥ ६८ ॥

॥ धनुराकारकोटचक्रम् ॥




निर्गमर्क्षस्थिते चन्द्रे दुर्गाभ्यंतरगैर्नृपैः ॥ कर्त्तव्यं कवियुद्धं च रात्रौ सुप्त बहिर्जने॥६९॥प्रवेशनिर्गमावुक्तौ सैन्ययोरुभयोरपि। कवौ कोटे जयो युद्धे विपरीत पराजयः ॥ ७० ॥ गढाधीशाः स्मृताः सौम्या वेष्टाधीशास्तु पापकाः। क्षेत्रयुग्मे स्थिता ये ते ज्ञातव्याश्च प्रयत्नतः ॥७१॥ गढाधीशो भवेच्चन्द्रो वेष्टाधीशस्तु भास्करः ॥ चन्द्रसूर्यविभागेन ज्ञातव्यं च बलाबलम् ॥ ७२ ॥ अंशाधीशो भवेच्चंद्रस्ताराधीशश्च भास्करः ॥ चन्द्रसूर्यगतिं ज्ञात्वा पश्चादीशं च कारयेत् ॥ ७३ ॥ वेष्टाधीशो भवेन्मध्ये गढाधीशस्तु बाह्यतः ॥ स्वयं दुर्गं प्रयच्छंति वेष्टकाय गढाधिपाः ॥७४॥ भूबल पृष्ठतः कृत्वा पुरः कृत्वा विचक्षणान् ॥ घातपातदिशो हित्वा कवियुद्धं समारभेत् ॥ ७५॥ क्रूरो वक्री प्रवेशर्क्षे पुरमध्ये स्थितो यदा ॥ तदा कोटविनाशाय कोटस्थो बाह्यभूपतेः ॥ ७६ ॥

निर्गमर्क्षस्थित इति। यायी कोटग्रहणाय प्रवेशे प्रविशेत्। कवियुद्धे कोटाधिपश्च स्वजयाय निर्गममार्गेण निःसृत्य वेष्टकसैन्ये प्रवेशमार्गं प्रविश्य हन्यादिति कृतेरुभयोर्विजयः परंतु उभयोर्या-

यिस्थायिनोरिदं विशेषबलम् ॥ ६९ ॥ ७० ॥ ७१ ॥ ७२ ॥ ७३ ॥ ७४ ॥ ७५ ॥ अथान्यत् ॥ क्रूर इति ॥ कोटरेखायां कोणस्थः पापग्रहः बाह्यभूपतेर्नाशाय भवति । एवं ज्ञात्वा यथोचितं यायिस्थायिनौ कुरुतः ॥ ७६ ॥

गोस्तनाकारकोटचक्रम्



प्रवेशं बाह्यगे क्रूरे वक्रे स्वसैन्यविग्रहः ॥ दुर्भिक्षं मृत्युभंगौ च बहिः सैन्यस्य जायते ॥ ७७ ॥ निर्गमर्क्षे बहिःस्थे च क्रूरो वक्रं करोति चेत् ॥ प्राकारस्य भवेद्भंगः प्राकारस्थे पुरस्य च ॥७८॥ पुरभे निर्गमे वक्री कथंचित् क्रूरखेचरः ॥ दुर्गं मुक्त्वा तदा काले दुर्गस्थः प्रपलायते ॥ ७९ ॥ यथा क्रूरैस्तथा सौम्यैः फलं ग्राह्यं विपर्ययात् ॥ मिश्रैर्मिश्रं विजानीयात्कोटचक्रे न संशयः ॥८०॥ दुर्गग्रहे हिताः पापा वेष्टकानां पुरः स्थिताः ॥ शुभग्रहाश्च बाह्यस्थाः शीघ्रा वा वक्रिणोऽथवा ॥ ८१ ॥

प्रवेशमिति । चतुःकोणे बाह्यनाड्यां वक्री पापग्रहः कोपि चेद्भवति । तथा बाह्यस्थभूपतेः स्वसैन्यविग्रहः दुर्भिक्षं च भवति मृत्युर्वा युद्धे ॥ ७७ ॥ अथ गढाधिपस्य निर्गमर्क्षे इति । चतुर्दिक्षु वहिर्नाड्यां निर्गमनक्षत्रे कथंचिदेको ग्रहः क्रूरो वक्रं करोति वक्री भवति तदा दुर्गं भज्यते । निर्गमर्क्षे दुर्गस्थश्चेद्वक्री भवति तदा पुरस्य भंगः यायिना पुरं गृह्यते । अस्मिन्योगे यदापि केनापि गृह्यते पुरम् ॥ ७८ ॥ अथान्यत् । पुरभे निर्गमेति । पुरभे गर्भनाडिभे निर्गमदिशि कथंचित् क्रूरखेचरो वक्री स्यात् । तस्मिन्काले दुर्गस्थः पौरो राजा दुर्गं मुक्त्वा दुर्गं परित्यज्य पलायते । अन्यदापि परचक्रं विनापि अस्मिन्योगे केनापि कारणेन पौरो राजा पलायते । अर्थात् जायते अकस्मात्कारणेन दुर्गं मुक्त्वा पलायते ॥ ७९ ॥ ८० ॥ अथ दुर्गग्रहे इदमेव बीजं स्थायियायिनोः । दुर्गग्रहे ॥ इति ॥ ८१ ॥

## ॥ अर्धचंद्राकृतिकोटचक्रम् ॥




पुरमध्येहताः सौम्याः पापा बहिरवस्थिताः ॥ गढाधिपस्य जयदाः फलमार्गान्निसर्गतः ॥ ॥ ८२ ॥ उभयोर्विपरीतस्थाः पापाः सौम्याः पुरग्रहाः ॥ भंगो मत्युस्तदा काले वर्जयंति पुरग्रहम् ॥ ८३ ॥ पुरभंगप्रदान् योगान् ज्ञात्वा परपुरं व्रजेत् ॥ यायो स्थायी च तं कालं दानोपायैः समं नयेत् ॥ ८४ ॥ उच्चं नीचं समं स्थानं पुरावुक्तं पुनर्ग्रहे ॥ ऊर्ध्वदृष्टिरधोदृष्टिः समतिर्यग्दृशो पुनः ॥ ८५ ॥ दुर्गसैन्यं सदैवोच्चैः प्राकारे मध्यबाह्यकम् ॥ नीचस्थं वेष्टकं सैन्यं ज्ञातव्यं स्वरवेदिभिः ॥ ८६ ॥

अथ स्थायिनः । पुरमध्ये इति ॥ ८२ ॥ उभयोरिति । पापा हिता अभ्यंतरगायायिनां ते बहिःस्था मृत्युदा भवन्ति ये शुभा अभ्यंतरगा हिताः स्थायिनां ते बाह्यस्था अहिता इत्यर्थः ॥ ८३ ॥ पुरभंगप्रदानिति दंडं दत्त्वा पुरं रक्षेदित्यर्थः ॥ ८४ ॥ अथान्यत्फलं वक्तुं पूर्वरंगमाह । उच्चं नीचमिति ॥ ८५ ॥ दुर्गसैन्यमिति । उच्चदुर्गसैन्यं कोर्थःदुर्गमध्ये उच्चस्थानं यत्र कोटं कोटनाडी तत्कोटस्य समस्थानम् । यत्र वेष्टकास्तन्नीचम् । उच्चं समं नीचं त्रिधा स्थाने कोटेपि ॥ ८६ ॥

कोटं कोटाधिपं नीचे निघ्नंतौ भौमभास्करौ ॥ समेस्थौ च पुरं सर्वमुच्चस्थौ निष्फलौ च तौ ॥ ८७ ॥ प्राकारे वेष्टकान् घ्नंति उच्चस्थौ राहुसूर्यजौ ॥ प्राकारस्थौ बहिः सैन्यं नीचस्थौ तौ तु निष्फलौ ॥ ८८ ॥ समदृष्टया गुरुश्चंदः पश्यतः सर्वतः सदा ॥ तिर्यक्स्थौ बुधशुक्रौ च फलदौ नात्र संशयः ॥ ८९ ॥ ऊर्ध्वदृष्टिग्रहे कुर्याट्टिंकुलीयंत्रसाधनम् ॥ समे च साधयेत्खंडिं रंध्रपातमधो मुखे ॥ ९० ॥ दुर्गमध्ये गते सूर्ये जलाशोषः प्रजायते ॥ चंद्रे भंगः कुजे दाहो बुधे बुद्धिबला नराः ॥ ९१ ॥ वाक्पतौ दुर्गमध्यस्थे सुभिक्षं प्रचुरं जलम् ॥ चलचित्तनराः शुक्रे मृत्युरोगौ शनैश्चरे ॥ ९२ ॥ राहौ मध्यगते दुर्गे भेदभंगौ महद्भयम् ॥ केतौ मध्यगते तत्र विषदानं गढाधिपे ॥ ९३ ॥

कोटमिति । तुलायां रविः कर्के भौमः बाह्यनाड्यां स्थितौ यस्मिन्काले अयं यो[illegible] तदा दुर्गभंगं करोति कोटाधिपं हंति । समराशौ च पुरं सर्वम् । कर्कटगो रविः को[illegible] नाडीगतः तुलास्थो भौमः कोटनाडीगतः तदा पुरं सकलं निहन्युः । उच्चस्थौ नि[illegible]ष्फलौ च तौ । मेषमकरस्थौ रविभौमौ कोटें उच्चस्थौ कोटमध्ये गतौ निष्फलौ [illegible]स्तावूर्ध्वदृष्टी । दृष्टिफलमिदम् । यद्येवं न स्यात् राशिगतमुच्चवत् । कोटमुच्चो यदि च यस्य तदा पुरमध्ये गतौ रविभौमौ पुरनाशाय भवतः यतः पूर्वमुक्तं पुरम[illegible] गताः पापाः दुर्गनाशकाः ॥ ८७ ॥ प्राकारे इति ॥ तुलायां शनिः मिथुने राहुः [illegible] दुर्गे अंतर्नाडीगतौ भवतः तदा कोटं कोटवेष्टकं च द्वावपि नाशयतः कोटस्थौ भ[illegible] मकरकन्यागतौ च तदा समस्थानगतौ वेष्टकानेव नाशयतः न पुरं न कोटं च । अ[illegible] दृष्टितया नीचस्थौ निष्फलौ च ताविति । मेषधनुःस्थौ बाह्यनाडोगतौ च तदा[illegible] रक्षन्ति बाह्ये बाह्यस्थानं रक्षंति कोटस्थाः कोटं च रक्षंति । पुरस्थाः पुरं तेषां दृष्टि[illegible] दुर्गे अन्यकरणावस्ति ॥ ८८ ॥ तथाचोक्तम् । समदृष्टयेति ॥ ८९ ॥ अथ पृथग्दृ[illegible]भिर्दुर्गे कृत्यमाह । ऊर्ध्वदृष्टीति । यदि पुरमध्यगतौ रविभौमौ तदा पुरस्थेन टिंकु[illegible] यंत्रं कुर्यात् परचक्रोपरि पाषाणादिगोलत्यागाय । बाह्यगतौ तौ चेत् तदा वेष्टाधीशेनापि को[illegible] भंगाय टिंकुलीयंत्रं कुर्यात् । समे च साधयेत्खंडिमिति । समे समदृष्टिग्रहे समस्थे तदा को[illegible] खंडिकरणाय यत्नं कुर्यात् । समदृष्टिग्रहौ जीवेंदू दृष्ट्या खंडीकुरुतः परन्तु कोटं रक्षतः । सं[illegible] घातेपि सति परचक्रेण गृह्यते । रन्ध्रपातमधोमुखे । अधोदृष्टिग्रहे कोष्टस्थे रन्ध्रपातं कुर्यात् को[illegible]

तस्यां दिशि विवरखननेन कोटं गृह्णीयात् ॥ ९० ॥ अथ दुर्गस्थानां पृथग्ग्रहाणां बाह्यस्थानां च पृथक् फलमाह । दुर्गमध्ये इति ॥ ९१ ॥ ९२ ॥ ९३ ॥

इत्युक्तं तु फलं मध्ये एवं बाह्यगतैर्ग्रहैः ॥ उपग्रहसमायोगादत्यंतं प्राणसंशयः ॥ ९४ ॥ अकारादिस्वराः पंच पूर्वाद्याशाचतुष्टये ॥ मध्यांताः सव्यमालिख्य अस्तस्थाः खंडिकारकाः ॥ ९५ ॥ दुर्गनाम्नः स्वरो यस्मिन् बालो वास्तमितोपि वा ॥ तद्दिने प्रारभेद्युद्धं दुर्गं सिध्यति नान्यथा ॥ ९६ ॥ दुर्गस्थो यदि मार्गस्थः शीघ्रमित्र-समन्वितः ॥ उपस्थितेपि तत्सर्वं भंगं कुर्याच्च वैरिणि ॥९७॥ [1]एकार्गलविधानं तु कर्तव्यं दुर्गरक्षणे ॥ भंजने यमराजाख्यमित्युक्तं ब्रह्मयामले ॥९८॥ इति नरपतिजयचर्यायां स्वरोदये कोटचक्राणि संपूर्णानि ॥

इत्युक्तमिति । रव्यादीनां दुर्गमध्यस्थितानां यत्फलमुक्तं तदपि फलं बाह्यगतानामपि बोद्धव्यम् । उपग्रहसमायोगादिति । उपग्रहाः सर्वतोभद्रचक्रोक्ताः सूर्यभात्पंचमं धिष्ण्यं ज्ञेयं विद्युन्मुखाभिधमित्यादयोऽत्र बोद्धव्याः ॥ ९४ ॥ अथान्यत् अकारास्वरा इति ॥ अकारा इति । अकारः पूर्वे इकारो दक्षिणे उकारः पश्चिमे एकार उत्तरे ओकारो मध्ये । य एव स्वरः अस्तमितो भवति तस्यां दिशि खण्डिः । अयमर्थः प्रायशो न भवति न वा उत्सर्गसिद्धिः । यतः सर्वदा रवे राशिसञ्चारात् । आकारादीनां एकतमो यदाप्यस्तमितो भवत्येव न सर्वकोटेषु तस्यां दिशि खंडिः । एवं न स्यात् कदाचित्संभवति ॥ ९५ ॥ अथ स्वराणामावश्यकफलमाह । दुर्गनाम्न इति । यथा देवगिरेर्दुर्गस्य स्वर ओकारस्तस्योदयः पूर्णायां तिथौ तत्कालेपि च तस्यास्तकाले दुर्गग्रहणमारभेत् । अस्तमितो वा स्वरो भवति अस्तस्वरेण पञ्चम उच्यते । मृतस्वरः तदुदये कोटग्रहणं समारभेत् । यद्यस्तमितेन पंचमो न गृह्यते तदा दुर्गनाम्नोस्तमिते स्वरः कः ओकारं वर्जयित्वा ॥ ९६ ॥ ९७ ॥ एकार्गलविधानमिति ॥ एकार्गलविधानं आगमोक्तं ग्रहयज्ञं च पुरस्थेन दुर्गरक्षार्थं कार्यम् । दुर्गभञ्जनाय यमराजाख्यविधानं वेष्टकाधीशेन कार्यम् । अथ ग्रंथान्तरोक्तः अनुभूतार्थश्च लिख्यते । वक्री गुरुः प्राग्दिशि भंगकारी भंगाय भौमो दिशि दक्षिणस्यात् । भृशं भृगुः पश्चिमदिग्विभागे बुधोत्तरस्यां दिशि भंगकृत्स्यात् ॥ वक्री गुरू रक्षति पश्चिमायां धरासुतो रक्षति सौम्यभागे । वक्री सितो रक्षति पूर्वभागे याम्ये बुधः कोटवलेषु चैवम् । स्थिते सपुत्रे तु रवौ गुर्वारज्ञसिता

[1] वज्रार्गलविधानं तु इति पाठः ।

अपि । वक्रिता नैव शक्ताः स्युर्विधातुं कोटभेदनम् ॥ ९८ ॥ इति नरपतिजयचर्या-स्वरोदयटीकायां जयलक्ष्म्यां कोटचक्राणि सम्पूर्णानि ।

श्रुतं देव मया सर्वं युद्धशास्त्रमनेकधा ॥ सूचनं चातुरंगस्य सविशेषं वद प्रभो ॥१॥ श्रीभैरव उवाच ॥ शृणु देवि प्रवक्ष्यामि ब्रह्मयामलनिर्मितम् ॥ सारात्सारतरं सारं रहस्यमिदमद्भुतम् ॥ ॥ २ ॥ यस्य विज्ञानमात्रेण दैवज्ञो लभते यशः ॥ जयं ददाति भूपानां यस्यासौ मंडले स्थितः ॥ ३ ॥ पूजितव्यः सभूपालैर्दानमानार्घपूर्वकम् ॥ ममापि सदृशो देवि ज्ञातव्योसौ न चान्यथा ॥ ४ ॥ तेनाचार्येण देवेशि स्वसैन्यार्थेष्टशांतिकम् ॥ पौष्टिकं च प्रकर्तव्यं रक्षामृत्युंजयादिकम् ॥ ५ ॥ शलाकासप्तकं चक्रमीशादौ कृत्तिकादिकम् ॥ साभिजित्सव्यमालिख्यमष्टाविंशतितारकम् ॥ ॥ ६ ॥ कृत्तिकापित्र्यमैत्राख्यवसुभं च द्विदैवतम् ॥ अहियाम्यश्रवोमैत्रं कोणभानि क्रमादिह ॥७॥ मध्ये रौद्रं करश्चापि अहिर्बुध्न्यं ततो भयम् ॥ परस्परं वेधगतं स्तंभश्च सैन्ययोर्द्वयोः ॥८॥

अथ चातुरंगकवियुद्धसेनाचक्राणामतिप्रयोजनात् रणहस्तिविरतिराजविजयादानीय लिखे तत्रादौ चतुरंगसूचना पार्वतीभैरवसंवादे श्रुतमिति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ तत्र वेधमाह कृत्तिकेति ॥ ७ ॥ ८ ॥

चातुरंगमिदं सैन्यं गजवाजिपदातयः ॥ रथश्च चातुरंगानां राज्य मूलं चतुष्टयम् ॥ ९ ॥ अश्वादिसप्तनागानां वाजिनां पुष्यसप्तकम् ॥ स्वात्यादिसप्तपत्तीनांरथानामभिजिदादिकम् ॥ १० ॥ वह्निभाच्छ्रवणे याम्ये वेधमाहुर्द्विदैवते ॥ पित्र्यात्सार्पेच्युते याम्ये मैत्राद्वीशाहियाम्यभे ॥ ११ ॥ वासवादच्युते सार्पे द्विदैवे वेधमादिशेत् ॥ एवं वेधेषु सर्वेषु सुधीर्वेधं विचारयेत् ॥ यस्मिन्धिष्ण्ये ग्रहो योस्ति ततश्चित्योस्त्ववग्रहः ॥ १२ ॥ रवेर्वह्निक्षयः कालो धिष्ण्ये स्यादष्टमेष्टमे ॥ शिवामृत्युकलिः सोमात्सर्पोऽसृक्

घोरकः कुजात् ॥ १३ ॥ सौम्याद्वायूल्बणः क्रोधो जीवास्या-द्विकचः कचः ॥ ब्रह्माथ भार्गवो दैत्यो ग्रहाद्ग्रह उपग्रहाः॥ १४ ॥ शनैश्चराच्चित्रगुप्तः काले केतुस्तथा यमः ॥ राहोः शेषस्तथा शंखः कुलिकश्च तृतीयकः ॥ क्रमात्केतोस्तु त्रिशिखः शिखी स्याद्धूम-केतुकः ॥ १५ ॥

अथ चातुरंगसैन्यमाह । चातुरंगमिति ॥ ९ ॥ तेषां स्थानमाह । अश्वादिति ॥ १० ॥ अथ वेधमाह । वह्निमादिति ॥ ११ ॥ १२ ॥ अथ सर्वेषां ग्रहाणामुपग्रहाः पृथगाह । आदौ रवेः, रवेरेति । सूर्याधिष्ठितनक्षत्रात् अष्टमे वह्न्यादयस्तिष्ठंति रविनक्षत्रादष्टमे वह्निः वह्नितोष्टमे क्षयः क्षयादष्टमे कालः एवमष्टमेऽष्टमे चंद्रादीनामुपग्रहाणां स्थितिर्ज्ञातव्या ॥ १३ ॥ अथ बुधादीनामाह । सौम्यादिति बुधस्य वायुनामा उल्बणनामा एते त्रयो बुधस्य गुरोर्विकच-नामा अपरः कचनामा तृतीयो ब्रह्मा एते गुरोरुपग्रहाः । शुक्रस्य दैत्यः । प्रथमग्रहो द्वितीयः उपग्रहस्तृतीयः एते शुक्रस्योपग्रहाः ॥ १४ ॥ अथ शनैश्चरादीनां शनैश्चरादिति । एते रव्या-दीनामुपग्रहाश्चातुरंगचक्रे निवेशनीयाः । येषां ये उपग्रहास्ते तत्स्वरूपिणः । क्रूराणां क्रूरफलदाः सौम्यानां सौम्यफलदाः ॥ १५ ॥

रविर्यायी नृपो ज्ञेयःशनिःस्थानी महीपतिः ॥ रथी रथाधिपःसोमः केतुर्द्विरदनायकः ॥ १६ ॥ अश्वाध्यक्षः सुरगुरुः पदातीशो मही-सुतः ॥ शनैश्चरः स्यंदनेशः सैंहिकेयो गजाधिपः ॥ १७ ॥ भार्ग-वस्तुरगाधीशः पदात्यधिपतिर्बुधः ॥ रविर्यायी नृपो यस्तु राज्यं ग्रहीतुमागतः ॥ १८ ॥ चंद्रः शनिरथाधीशौ राहुकेतू गजा-धिपौ ॥ भौमचंद्रौ पदातीशौ गुरुशक्रौ हयाधिपौ ॥ १९ ॥ चरलग्ने चरांशे च शीघ्रगो बलसंयुतः ॥ सेनां भिनत्त्यसौ खेटः शत्रुमार्ग-गवेषया ॥ २० ॥

अथ चातुरंगे युद्धकाराणां संज्ञाभिर्ग्रहानाह । रविर्यायीति । स्वविषयसीमामुत्सृज्य स यायी राजा तत्संज्ञको रविः रविबलेन यायिबलम् । शनिः स्थायी नृपः गढाधिपः शनि बलेन गढाधिपस्य बलम् ॥ १६ ॥ १७ ॥ १८ ॥ १९ ॥ अधुना चतुरंगसंग्रामे युद्धे योधानां चातुरङ्गानां च यावदवस्था जायंते ता आह । चरलग्नेति । तदानीं चातुरङ्गसंग्रामोत्पन्नयो राज्ञोर्युद्धलक्षणमाह । चरलग्ने स्थितश्चरांशे च शीघ्रखगः स यदांगाधिपः स सेनांगः शत्रोर्मार्गगवेषया गमिष्यति । बली चेत्सग्रहस्तदा तत्र शत्रुसेनां भित्त्वा आगमिष्यति ॥ २० ॥

वक्रमंदगताः खेटा नारोहंति तदा चमूम् ॥ अस्तगाः शत्रुगेहस्था ग्रहा मृत्युप्रदायकाः ॥ राहुशत्रुभिराक्रांतौ रोधितौ म्रियते गमे ॥ २१ ॥ स्थिरराशिगताः खेटाः स्थिरांशकगता अपि ॥ स्थायिनो बलमापन्नं स्थिता जेष्यंति ते रिपून् ॥ २२ ॥ द्विस्वभावगता ये च द्विस्वभावांशके ग्रहाः ॥ समयुद्धं भवेत्तत्र भूमिस्तस्य जयं वदेत् ॥ २३ ॥ चरराशौ स्थिरांशस्थौ धावंतं प्रतिधावति ॥ मित्रदृष्टः समुदितो यो ग्रहः स जयी भवेत् ॥ २४ ॥ स्थिरलग्ने चरांशे यो धावेद्वीरः पराङ्मुखम् ॥ द्विस्वभावे स्थिरांशस्थे स्थिरतामवगच्छति ॥ २५ ॥

वक्रमंगदता इति । यो वक्रगतिर्मंदगतिर्वा ग्रहाः स परसैन्यं नारोहति अन्वेषणाय सैन्यं प्रति नागच्छति । यथा चंद्रः शीघ्रगः चरलग्ने चरांशे यदि भवति तदा रथाधीशो मारुह्य शत्रुगवेषां कर्तुं गच्छतीत्यर्थः । एवं भौमबुधौ यदि शीघ्रौ भवतः चरे चरांशे वा पदात्यगः शत्रुगवेषया गच्छति । एवं गुरुशुक्रौ चरे चरांशे भवतः शीघ्रगौ च तदा गवेषया गच्छति । एवं सर्वग्रहाणां ज्ञेयम् । ये च रथांगाद्यधीशा वक्रगतयः स्थिरे स्थिरांशे च तदा तेऽग्रतोऽरिचमूं नारोहंति अरिसैन्यं प्रति गंतुं नोत्सहंते । येऽस्तगता भवंति शत्रुगृहे वा तद्ग्रहांगं सेनांगं मृत्युमाप्नोति । यथा तुरगाधिपौ गुरुशुक्रौ अस्तमितौ यदि शत्रुगृहे वा तद्ग्रहांगसेनांगं मृत्युमाप्नोति । राहुशत्रुभिरिति । राहुणाक्रान्तो यो ग्रहः शत्रुभिराक्रान्तो तद्ग्रहस्यांगगवेषया गतमपि म्रियते । यथा भौमबुधौ राहुक्रान्तौ शत्रुभिर्वा तत्र गता पदाति शत्रुगवेषया म्रियंते । एवं सर्वांगेपि बोद्धव्यम् ॥ २१ ॥ स्थिरराशिगता इति । ये स्थिरराशौ स्थिता भवंति स्थिरांशगता अपि तदा स्थायिनां बलमापन्नं भवति तदा स्थायी जयी कोर्थः हंतुमागतमपि शत्रोः संघातस्य सेनांगं स्थायिनं मारयति । स्थायी स्थिरस्थायी वा ॥ २२ ॥ द्विस्वभावगता इति । समयुद्धेपि स्थायिनो जयो भवति ॥ २३ ॥ चरराशाविति । एवं । विशिष्टो यो ग्रहस्तस्य सेनांगं धावंतं प्रति धावंतमागतं प्रति धावति हंतुं धावति । यथा गजाधीशौ राहुकेतू तौ चरराशौ स्थिरांशस्थौ चेत्तदा हंतुमागतं गजारूढं प्रतिधावति । एवं धावंतं प्रति धावतीत्यर्थः । यो ग्रहो मित्रजयी मित्रदृष्टः अस्तमितः तद्ग्रहांगं जयं लभेत । यथा तुरगाधीशौ गुरुशुक्रौ मित्रगृहे मित्रदृष्टौ उदितौ चेदश्वानां अश्ववाराणां जयो भवति एवं सर्वेषाम् ॥ २४ ॥ स्थिरलग्ने चेति । स्थिरलग्ने चरांशे यो ग्रहो भवति तदंगं रथादिकं पराङ्मुखं प्रति धावति । एवं विशिष्टं ग्रहांगं स्थिरमेव रणभूमौ भवति न पलायते न योत्स्यति ॥ २५ ॥

स्थिरलग्ने द्विमूर्त्यंशे व्यावृत्तस्य भवेन्मृतिः ॥ द्रेष्काणयोधतो मृत्युर्धारयेत्तं गतायुधम् ॥ २६ ॥ मित्रभे मित्रभावस्थे युक्तदृष्टे-शकोदये ॥ बलवत्युदयेत्युच्चे नाथे विजयमादिशेत् ॥ २७ ॥ अत्यारिद्वेषियुग्दृष्टे नीचस्थेऽस्तंगते प्रिये ॥ विबले मित्रदृग्घीने तस्य स्यात्संगरे वधः ॥ २८ ॥ जन्माभिषेकभे यस्य पापग्रहयुते यदि ॥ तदा मृत्युमवाप्नोति संगरस्थो महीपतिः ॥ २९ ॥ सुरेज्यो भास्करः सोमश्चांद्रिर्वर्णाधिपाः क्रमात् ॥ ३२ ॥

स्थिरलग्नेति। एवं विशिष्टस्य ग्रहांगस्य व्यावृत्तस्य शत्रुसैन्यं गत्वा हत्वा वा परावृत्तस्य मृतिर्भवति। कोर्थस्तं शत्रुसेनांगं किमपि निहंति। युद्धकाले द्रेष्काणाधिपो बली चेत्तदंगं सेना-गतं युद्धं धारयति बंधनात् क्लीवतां याति यायी द्रेष्काणभावतः। यस्मिन्द्रेष्काणे यो ग्रहो भवति स चेच्छत्रुगृहे नीचे शत्रुजितः तदंगद्रेष्काणरूपात् पुरुषाद्बंधनं प्राप्नोति तत्र क्लैव्यं करोति ॥ २६ ॥ अथोपसंहारमाह । मित्रभेति। एवं विशिष्टे चतुरङ्गयुद्धांगनाथे तस्यांगस्य विजयमादिशेत् ॥ २७ ॥ अत्यरीति। एवं विशिष्टस्य ग्रहस्य सेनांगस्य वधो भवति ॥२७॥ अथ केवलं यायिस्थायिनो राज्ञोः शुभाशुभमाह। जन्माभिषेकेति। सुगमम्। विशिष्टादेवं विशिष्टो राजा परपुरं न गच्छेत्। पुरस्थोपि न युद्धं कुर्यात् ॥ २९ ॥ अथ वर्णाधिपमाह। सुरेज्येति। चातुरंगे वर्णाः। यद्वर्णजो राजा तस्य स्वामी गुरुः। यद्वर्णजा मंत्रिणस्तदधिपो रविः। सैन्यपतिः सोमः यद्वर्णकः सेनापतिस्तस्य सोमोऽधिपतिः। बुधः रात्रिनाथः कोटवार इति तस्य स्वामी बुधः ॥ ३० ॥

वर्णपे नीचराशिस्थेऽस्तंगते शत्रुवीक्षिते ॥ शत्रुगेहस्थिते क्रांते रणे मृत्युमवाप्नुयात् ॥ ३१ ॥ भौमराह्वार्किकेतूनामेतेषामप्युप-ग्रहाः ॥ शूद्रादयस्थजातीनामधिपास्ते प्रकीर्तिताः ॥ ३२ ॥ अवनीशो दिनमणिस्तपस्वी रोहिणीप्रियः ॥ स्वर्णकारस्तु भूपुत्रो ब्राह्मणो रोहिणीभवः ॥ ३३ ॥ श्रेष्ठी गुरुः कविर्वैश्यो वृषलः सूर्यनंदनः ॥ सैंहिकेयो निषादश्च ध्वजिः केतुः स्मृतो बुधैः ॥ ३४ ॥ रविजाः क्षत्रवर्णाः स्युः सोमजा वैश्यजातयः ॥ बुध-जाता नष्टविप्रा भौमजा वह्निजीविनः ॥ ३५ ॥

अत्र हेतुमाह। वर्णपे इति। सुगमम् ॥ ३१ ॥ ३२ ॥ ३३ ॥ ध्वजिर्मद्यकारः ॥ ॥ ३४ ॥ रविजा इति । क्षत्रवर्णाः सूर्यादुत्पन्नाः वैश्यजातयश्चंद्रादुत्पन्नः बुधान्नष्ट-

विप्रा जाताः धर्मेहाः तीरभुक्तौ नागरा इति भौमजा वह्निजीविनः स्वर्णघटकाः लोहघटकादयः ॥ ३५ ॥

बृहस्पत्युद्भवा विप्रा भृगुजाः कविगायकाः ॥ शूद्रादयः केतुजाता निषादा राहुसंभवाः ॥ अंत्यजाः शनिसंभूता मृतिं यांत्यधिपेऽस्तगे ॥ ३६ ॥ शीघ्रगाश्चरराशिस्था आरोहंत्यग्रतो रिपुम् ॥ शीघ्रगाः स्थिरराशिस्थाः पश्चात्प्राप्तं प्रवर्तते ॥ मंदगाः स्थिरराशिस्थाः पालयंति निजां चमूम् ॥ ३७ ॥ शनौ नीचगते पौरा रवौ नीचगतेध्वगाः ॥ बंधनं शत्रुसंयुक्ते मृत्युः शत्रुनिरीक्षिते ॥ सक्षतौ शत्रुसंयुक्तौ परयुक्तौ भयं नहि ॥ ३८ ॥ शीघ्रगा मित्रसंयुक्ताः शुक्रेणालोकिता यदि ॥ तथा संधिं विजानीयात्सेनयोरुभयोरपि ॥३९॥ योषितांशगते चंद्रे योषिद्ग्रहविलोकिते ॥ योषिल्लग्नगते वापि तदा स्त्री सैन्यपालिका ॥ ४० ॥

बृहस्पतिजाता ब्राह्मणाः भृगुजा नटादयो गायकाश्च शूद्रादयः केतुजन्मिनः निषादा राहुजाः पर्वतवासिनः किरातादयः अन्त्यजाश्चण्डालादयः शनैश्चराज्जाताः । प्रयोजनम् संग्रामे चतुर्वर्णपे नीचराशिस्थे इत्यादिग्रहलक्षणास्थितम् । तद्गता मृतिं लभन्ते येषां राष्ट्रभङ्गो वा राष्ट्रात्पलायन्ते ॥ ३६ ॥ अथान्यत् । शीघ्रगा इति । एवं विशिष्टस्य सेनांगं रथादि प्रथमत एव तं शत्रुं प्रतिगच्छतीत्यर्थः ॥ एवं विशिष्टग्रहस्यांगं पश्चात्प्राप्तं प्रतिगच्छतीत्यर्थः ॥ ३७ ॥ शनौ नीचगते इति । शनौ नीचगते अस्तंगते वा शत्रुसंयुक्ते स्थायी नृपः पुरस्थो बंधनं प्राप्नोति शत्रुवीक्षिते मरणं युक्ते दृष्टे च बन्धनं मरणं च । एवं पौरा अपि जना रविजाः क्षत्रवर्णाः सुतं त्याद्युक्ताः स्वेस्वे ग्रहे शत्रुयुक्तेक्षिते तत्तस्य मरणं भवति । अथ रवौ नीचग इति । रवौ नीचगते शत्रुग्रहयुक्तेक्षिते परपुरगतो राजा यायी सबन्धनं मरणं प्राप्नोति युक्ते बन्धनं युक्तेक्षिते मरणम् । तथा दिग्विजयिनां कटके ये रविजादयस्तेषामधिपे नीचगे शत्रुयुक्तनिरीक्षिते तस्यापि बंधनं मरणं भवति । यायिस्थायिनौ द्वौ ग्रहौ शत्रुसंयुक्तौ रविसौरास्तदा द्वौ सक्षतौ वाच्यौ परयुक्तौ शुभयुक्तौ तौ तदा अक्षतौ तिष्ठतः ॥ ३८ ॥ शीघ्रगा इति । सर्वग्रहाः शीघ्रा मित्रदृष्टयुक्ताः शुक्रेणालोकिता वा तदा उभयोः संधिं विजानीयात् ॥ ३९ ॥ अथान्यद् ज्ञानं वा कर्तव्यं तमाह । योषितांशगेति । वृषादिसमराशिनवांशे चन्द्रे योषिद्ग्रहेण शुक्रेण विलोकिते अस्तियोगे प्रश्नः । द्वयोः कटकयोर्मध्ये सैन्यपालिका स्त्री श्रूयते तदा स्त्री वाच्या । अथवा यदि पुरुषग्रहस्य कस्यापि बलं न भवति । सैन्यपतिकरणाय चन्द्रबलमधिकं भवति योषितांगे गते दृष्टे सति तदा स्त्री सैन्यपालिका कर्त्तव्या ॥ ४० ॥

ग्रहश्चोपग्रहो वापि बलवाञ्शत्रुवीक्षितः ॥ ॥ सेनामुखे बली शूरो रेखाविद्धं हनिष्यति ॥ तस्यैव दापयेद्दीक्षां जयाख्यां जयवर्द्धिनीम् ॥ ४१ ॥ वक्रगे मित्रसंदृष्टे वाममार्गान्निवर्तते ॥ अतिचारे मित्रदृष्टे मध्यमार्गान्निवर्तते ॥ ४२ ॥ उच्चगो बलसंयुक्तः पुष्टो मित्रैर्विलोकितः ॥ आगच्छेदक्षतो युद्धे निकृत्य परसैनिकम् ॥ ४३ ॥ अस्तगो दुर्बलः खेटः शत्रुग्रहनिरीक्षितः ॥ तद्ग्रहांगं समाप्नोति शत्रुबंधनजं भयम् ॥ ४४ ॥ भौमादिभिः खड्गपातः शुक्रेज्याद्यैस्तु कुंतजः ॥ सोमसूर्यादिभिर्बाणान्मंदाद्यैर्मुद्गरोद्भवः ॥४५॥ राह्वादिभिर्विषभयं केत्वाद्यैर्वचनाद्भयम् ॥ बुधाद्यैः सर्वघातः स्यात्तत्श्चोत्पातको बुधैः ॥ ४६ ॥

ग्रहश्चोपग्रहो वापि यो बली तदंगे यो भटः सेनाग्रगः स रेखाविद्धं चातुरंगचक्रे यं ग्रहं वेधयति एकरेखया तद्ग्रहांगोद्दिष्टसेनामध्ये हनिष्यतीति ॥ ४१ ॥ एवं विशिष्टग्रहसेनांग यद्ग्रजादिग्रहजा वर्णा राजानौ वा परसैन्यं गत्वा वामेन मार्गेण निवर्तते प्रत्यागच्छति । एवं विशिष्टो निरूपितो यः स मध्यमार्गेणैव परावृत्तो भवति शत्रुसेनां विनिर्भिद्य आगच्छेत्पुनरक्षतः अतिचारमित्रदृष्ट्या एव ग्रहः पुरुषः ॥ ४२ ॥ यो ग्रहः उच्चगः बलसंपन्नमित्रदृष्टः तस्य ग्रहस्य यदंगं यायिस्थायिराज्ञोर्मध्ये अश्ववाराद्यंग परं घातयित्वा अक्षत आगच्छति । यथा-स्वाधिपौ शुक्रगुरू उच्चस्थौ मित्रदृष्टौ उभयोः सेनयोरप्यश्ववाराः परं घातयित्वा अक्षता निवर्तते ॥ ४३ ॥ ४४ ॥ अधुना चातुरंगचक्रविद्धनंक्षत्रांगानां सेनानां घातमाह । भौमादिभिरिति । भौमादिभिर्भौमभौमोपग्रहैर्विद्धे खड्गपातः शुक्रबृहस्पत्योरुपग्रहवेधेन कुंतजो घातः एवमन्येषामपि । अयं सर्वघाताय उक्तः स उपपापवशात् ॥ ४५ ॥ ४६ ॥

गुरुशुक्रौ यत्र संस्थौ तत्र स्थाने पराजयः ॥ तस्मात्तत्र प्रकुर्वीत स्वरज्ञैर्दृढरक्षणम् ॥ ४७ ॥ चक्राण्युक्त्वा सर्वतोभद्रमुख्यान्युर्वीशानां भंगहेतूनि दुर्गे ॥ मुख्यं संख्ये दुर्गमध्येपि सैन्ये सेनानाथं वच्मि तत्तद्गुणांश्च ॥४८॥ यो बली स्याद्दशबलः षड्बली चेद्दुना बली ॥ सेनामुखे स कर्तव्यस्तद्बलादखिलं बलम् ॥ ४९ ॥ यज्जन्मभे चन्द्रदिवाकरौ स्तो यस्यास्तबालस्थविराः सुराःस्युः ॥ स देवसेनाधिपविक्रमोपि कार्यो न सेनाधिपतिस्तदानीम् ॥ ५० ॥

अधुना स्थानस्थितयोधानां फलमाह । गुरुशुक्राविति । चातुरंगचक्रे यन्नक्षत्रस्थौ गुरुशुक्रौ तत्रस्था योधाः पलायंते अजयं प्राप्नुवंति ॥ तत्करणाय निदर्शनं दर्शयित्वा विधानमाह । चक्राणीति ॥ ४८ ॥ य इति । षड्वर्गबलम् उच्चस्वगृहमित्रगृहशुभगृहाणि एतानि दश बलानि षड्बली वा स्थानदिक्कालनिसर्गचेष्टा एतानि षड्बलानि पद्धतिकारोक्तानि वा चन्द्र बलाद्बली वा चन्द्रबलेन यो ग्रहो यस्य राशिसंक्रमणकाले गोचरशुद्धो यातः स ग्रहो बली यस्य वर्णस्याधिपो स बली निगदितः एवं लक्षणयुक्तग्रहजातवर्णः स सेनामुखे सेनाग्रे स्था नीयः सेनापतिर्वा कार्यः । यतस्तद्बलानामखिलानां बलं भवति । यथा राज्ञो विजयिनः तथ यथा यात्रागुणा भवंति । तत्फलं राजफलं सर्वबलानां भवति न सर्वाणि बलानि यात्रां कुर्वं ॥ ४९ ॥ अथ सेनाधिपकर्त्तव्ये निषेधमाह । यदिति । यस्मिन्काले सेनाधिपे कर्त्तव्ये तस्मि न्काले चन्द्रदिवाकरौ जन्मनक्षत्रगतौ जन्मराशिगतौ वा भवतः तौ सेनापती न कार्यौ क बालवृद्धमृत्युस्वरास्तत्काले भवंति सोपि न कार्यः यदि स देवसेनाधिपो भवति इन्द्रोपि भ तथापि न कार्यः ॥ ५० ॥

शिशुर्ज्वरी रोगयुतः सुरापो भीरुस्तथा भीरुकुलोद्भवश्च ॥ गुर्वार्यदेवद्विजनिंदको यः कार्यो न सेनाधिपतिः स भूपः ॥५१॥ सर्वतोभद्रचक्रादौ यस्य वेधो न विद्यते ॥ तं वीरं कल्पयेत्तत्र चातुरंगे महाहवे ॥ ५२ ॥ क्षेत्रनामाधिको वीरो रिपुनामाधिकस्तु यः ॥ तस्यैव दापयेद्दीक्षां जयाख्यां जयवर्द्धिनीम् ॥ ५३ ॥ उच्चभूम्युत्तमं क्षेत्र समभूमिस्तु मध्यमम् ॥ निम्नभूरधमं क्षेत्रं त्रयस्तत्राधिदेवताः ॥५४॥ उच्चभूम्यधिपो राहुः समभूमेर्दिवाकरः॥ निम्नभूमीश्वरश्चन्द्रो यथा क्षेत्रं तथा फलम् । आत्मसैन्यस्य देवेशि राहुक्षेत्रं प्रदापयेत् ॥ ५५ ॥

अथान्यसेनाधिपकरणे निषेधमाह । शिशुरिति । एवं विशिष्टोपि न कार्यः ॥ ५१ ॥ चातुरंगसूचना । सर्वतोभद्रचक्रादाविति । सर्वतोभद्रचक्रे यस्य नक्षत्रवर्णराशिस्वरतिथिषु पापग्रहवेधो न भवति । तथांशचक्रेपि । सूर्यकालानले चक्रे यस्यानिष्टफलस्थाने नक्षत्रं पति भवति यस्य बालवृद्धस्वरांकितवर्षमासदिनादिकं न भवति एवं विशिष्टं वीरं कल्पयेत् । को सेनामुखे कर्त्तव्यः सेनापतिश्च पूर्वोक्तशिशुर्ज्वरीत्यादिकं वर्जयित्वा ॥५२॥ अन्यं निरूप्य धिकरणे बलमाह । क्षेत्रनामाधिक इति । क्षेत्रनामगतो वीरोधिको भवति । क्षेत्रनाम्नो वर्गः तस्य यो भक्ष्यः स वीरो न कार्यः किंतु क्षेत्रवर्गस्य यो भक्षकः स क्षेत्रव धिकः । यथा अवर्गो गरुडस्तस्य भक्ष्यो नागः तद्वर्गः गरुडवर्गो वीरः

स्तस्मिन्क्षेत्रे । अथवा आयचक्रनिरूपितध्वजादिकबलं तत्र विचार्यम् । यात्राधिकबलो भवति स च वीरः कल्प्यः । यथा काकाद्बली श्वा च भवेत्सारमेयाच्च रासभ इत्यादिना च क्षेत्रनामाधिकबली वीरः एवं प्रकारेण रिपुनामाधिकश्च कोष्ठभञ्जनाधिकश्चापरसेनाभञ्जनाधिकं तं वीरं कल्पयेत् अन्यद्बलं स्वबुद्धिस्फुरणादन्यदपि बलाबलं विचारयेत् । तस्य रणदीक्षा देया जयाख्या जयवर्द्धिनी सा नोक्ता अनधिगतत्वात् ॥ ५३ ॥ अथ कस्मिन्क्षेत्रे तस्य वीरस्थापनं कर्त्तव्यमिति चेत्तत्राह । उच्चमूम्युत्तममिति । सुगमौ श्लोकौ ॥ ५४ ॥ ५५ ॥

उभयोः सेनयोर्मध्ये यत्र रेखाऽरुणप्रभा ॥ दृश्यते तत्र भंगोस्ति सत्यमेतन्न चान्यथा ॥ ५६ ॥ बलाकाहंससंकाशं यत्सैन्यमुपलक्षितम् ॥ तद्गच्छति यमस्यास्यं न भूयः संनिवर्तते ॥ ५७ ॥ फाककोकिलवर्णाभं सैन्यं स्यादतिदारुणम् ॥ अदृश्यविग्रहैर्योधैः परसैन्यं निकृत्यते ॥ ५८ ॥ वीरा भीमोपमाः क्रुद्धा दृश्यन्ते नैव शत्रुभिः ॥ भंगं कृत्वा क्षयं यांति सिंहा इव यथा मृगान् ॥ ५९ ॥ गुर्वर्थद्विजदेवपूजनरतिर्धर्मानुरक्तः शुचिः स्वस्वामिन्यनुकूलवर्तिहृदयः शूरोथवंशोद्भवः ॥ शूरः साहसिकोथ शस्त्रनिपुणः स्याच्छूरमान्यश्च यः स नानारण हस्तिनां निगदितो जेता रणे विद्विषाम् ॥ ६० ॥

अथोभयोः सेनयोः येन यस्य जयभङ्गौ तल्लक्षणमाह । उभयोरिति । हरिश्चन्द्रपुररेखावत्किंचिदरुणप्रभा रेखा यस्य व्यूहरचितायां सेनायां दृश्यते सा भज्यते हता वा भवति । अनुक्तमपि लिख्यते । यस्य सेनासंमुखं मांसाशिनो गृध्रादयो निपतन्ति तदभिमुखे आकाशे गच्छंति सेनोपरि मण्डलं कुर्वंति तस्याः सेनाया भंगादिकं भवति ॥ ५६ ॥ अन्यत्सेनाक्षयमाह । बलाकेति । सुगमम् ॥ ५७ ॥ अथ सेनायां जयलक्षणमाह । यथा काककोकिलवर्णा दृश्यन्ते यत्र तद्वीराः ॥ ५८ ॥ ५९ ॥ अथ वीरप्रशंसामाह । गुर्वर्थेति ॥ ६० ॥

यायिनः स्थायिनः खेटा वेधरेखागता यदि ॥ समसप्तगता वापि जायते दारुणो रणः ॥ केतुर्यायी सभूभुजः सिंहिकानन्दनः कुजः ॥ ६१ ॥ परस्परं सप्तमगाः क्रूरसौम्या यथारयः ॥ वेधरेखागता वापी चन्द्रयोगेतिलोहदाः ॥ ६२ ॥ यद्दिशोभिमुखाः सर्वे शीघ्रगा यदि खेचराः ॥ विग्रहो जायते घोरस्तद्दिशास्थित-

भूभुजाम् ॥ ६३ ॥ शीघ्राः सर्वे ग्रहा राज्ञां विरोधः स्याद्बुधं विना ॥ यदा सर्वे वक्रगतास्तदा युद्धं सुदारुणम् ॥ ६४ ॥ यायिनः शीघ्रगाः सर्वे स्थायिनो वक्रगा यदि ॥ यायी विजयते तत्राऽन्यथा स्यात्स्थायिनो जयः ॥ ६५ ॥

अधुना युद्धलक्षणमाह । यायिनः इति । केतुशुक्रराहुभौमा एते वेधरेखागता यायिनो ग्रहाः । स्थायिनश्च जीवः सौरिस्तुहिनकिरणस्यात्मजश्चेति पौरा एते स्थायिनः । सप्तसलाका-चतुरङ्गचक्रे परं वेधगता यदि तदा संग्रामो दारुणो भवति । परस्परं द्वादशारचक्रे सप्तमगा अपि यायिस्थायिनः तदापि जायते दारुणो रणः ॥ ६१ ॥ अथापरयोगमाह । परस्परमिति । क्रूराः सौम्याश्च यस्य येऽरयः शत्रवः वेधरेखागता यदि भवंति एषां चंद्रयोगे सति जायते दारुणो रणः ॥ ६२ ॥ अथान्यलक्षणमाह । यद्दिश इति । कृत्तिकादिसप्तसप्तपूर्वादिदिक्चतुष्टये नक्षत्राणि । तेन कृत्तिकादिसप्तनक्षत्रस्थाः ग्रहाः शीघ्रगा भवंति । पश्चिमदिक्संस्थितानां राज्ञामभिमुखा भवंति । तेन किं स्वस्वाभिमुखाः शीघ्रग्रहा भवंति । तद्राज्ये संग्रामो जायते । दक्षिणोत्तरयो राज्ञोर्यस्य दक्षिणस्थास्तस्य तेऽभिमुखाः ॥ ६३ ॥ अथ सामान्यमाह । शीघ्रा इति । शीघ्राः सर्वे यस्मिन्काले ग्रहा भवंति तस्मिन्कालेऽन्योन्यं भूपवैरं भवति । बुधोऽत्र शीघ्रो न गृह्यते । यस्मिन्काले सर्वे वक्रगतयो भौमाद्या भवंति तस्मिन्काले परस्परं दारुणं युद्धं भवति ॥ ६४ ॥ यायिन इति । यायिनो यायिग्रहाः स्थायिनः स्थायिग्रहाः । अन्यथेति कोऽर्थः यायिग्रहा वक्रिणः स्थायिनो गुरुबुधशनयः शीघ्राः शीघ्रगतयः तस्मिन्काले यत्र युद्धं तत्र नागरस्य जयः ॥ ६५ ॥

उत्तरस्थाः स्थायिनश्चेद्यायिनो दक्षिणस्थिताः ॥ यायिनो विजयस्तत्र व्यस्ताः स्थायी जयप्रदाः ॥६६॥ कृत्तिका भरणी स्वाती नागवीथी प्रकीर्तिता ॥ रोहिण्याद्यात्त्रिभात्तिस्रो गजैरावतकर्षभाः ॥ ६७ ॥ स्थायिनो मंदगा राज्ञां तदा युद्धं न जायते ॥ पापा वक्राः शुभाः शीघ्रास्तदा युद्धं सुदारुणम् ॥ ६८ ॥ मन्दारेज्या वक्रगताः स्थायिनो त्रिजयप्रदाः ॥ शुक्रो वक्रो गुरुः शीघ्रः स्थायिनां मृत्युकारकः ॥ विपरीतौ शुक्रगुरू यायिनां मृत्युकारकौ ॥६९॥ दूरादागच्छतो राज्ञां धिष्ण्येधिष्ण्ये शतं वदेत् ॥ शतांतरे तु दशकं योजनं तु दशांतरे ॥ ७० ॥

उत्तरस्था इति। उत्तरस्था उत्तरवीथीगताः स्थायिग्रहाः दक्षिणस्थिताः कोर्थः दक्षिण-वीथिगताः॥ ६६ ॥ तत्र कृत्तिकाभरणीति तेन किम्। कृत्तिकाभरणीस्वाती नागवीथी। रोहिणीमृगशिरआर्द्रा गजवीथी। पुनर्वसुपुष्यश्लेषा ऐरेवती एतास्तिस्रो वीथय उत्तरस्थिताः। तत्र स्थायिग्रहा यदा भवन्ति यायिग्रहा दक्षिणमार्गे भवन्ति। तत्र दक्षिणः पंथाः। मैत्रात्रिभं मृगाख्या स्यादनुराधाज्येष्ठामूलानि हस्तचित्राविशाखके अजवीथी। दहनाआषाढयुग्मं पूर्वाषाढोत्तराषाढे। एतास्तिस्रो वीथयो दक्षिणे दक्षिणमार्गे स्थिताः अस्मिन्दक्षिणमार्गे यदि ग्रहा भवन्ति तदा यायिनो विजयो ज्ञेयः। यायिस्थायिनौ विपरीतस्थौ स्थायिग्रहा दक्षिणमार्गे यायिग्रहा उत्तरमार्गे यदि तदा स्थायिनो नगरभूपतेर्जयः॥ ६७ ॥ अथान्यत्॥ स्थायिनो ग्रहाः बुधगुरुशनयो मंदगतयो भवन्ति। कोर्थः। मन्दा भानौ चतुर्थगे इत्यादिदर्शनात्। तदा युद्धं तस्मिन्समये न ज्ञायते। अथान्यत्। पापा यदा। वक्रः पञ्चमषष्ठेर्के इत्यादि लक्षणेन वक्राः पापाः। शुभा बुधगुरुशुक्राः शीघ्राः शीघ्राश्चार्के द्वितीयगे द्वादशैकादशे सूर्ये भजते शीघ्रतां पुनरित्याद्यर्थेन शुभाः शीघ्रगतयः तस्मिन्समये राज्ञामन्योन्यं दारुणं युद्धं जायते ॥ ६८ ॥ अथान्यत्। मन्दारेज्येति। अथान्यत्। शुक्र इति। सुगमम्॥ ६९ ॥ अथ दिग्विजयिनां पथिकफलमाह। दूरादिति। यथा प्रत्यन्तस्था म्लेच्छा गुर्जरात्खुरसानतः दिल्ली पुराद्वा प्राचीदक्षिणां प्रति जेतुं प्रस्थितः तस्य दूराद्वा तत्रस्थानात्परं पुरं यदि शतं भवति पंथाः योजनं क्रोशो वा गव्यूतिर्वा तत्र कल्पना। यदि शतद्वयं भवति गमनावधिः तदा यात्रानक्षत्रात् अग्रे यावत्संख्ये नक्षत्रे मार्गाधिपस्य शत्रुर्विद्यते। विजयिनो राश्यधिपस्य शत्रुर्वा पापाः तदानीं शतयोजने क्रोशे गव्यूतौ वा शत्रुभिः सह युद्धं भवति। शुभग्रहश्चेत्तदा मार्गावरोधः। मित्रं वा सग्रहः तथा मित्रसमागमः। तत्र पुंसि विकल्पना। स्त्रीग्रहश्चेत्तदा स्त्रिया योषिता सह संयोगो विरोधो वा। शतं चेत्पंथा न भवति। तदा दशयोजनाभ्यन्तरे विकल्पना। अथवा योजनाविधिः पंथाः तदाभ्यन्तरे एव। अथवा यात्रानक्षत्रानन्तरनक्षत्रमतिक्रम्य शत्रुमित्रपापशुभानामेकतमस्तिष्ठति तदा शतयोजनादुपरि द्वितीये शतके दशयोजनादुपरि द्वितीयदशके क्रोशादुपरि द्वितीयक्रोशे। एवं नक्षत्रे शतदशकयोजनं वा विकल्पयेत्। अत्र विचारे आत्मबुद्धिरपि विचारविषयिणी बोद्धव्या॥ ७० ॥

शत्रुपक्षस्थितैः सौम्यैर्मार्गरोधकरो भवेत्॥ एकरेखागतौ शत्रुमृत्युर्वा शत्रुतोऽध्वनि॥ ७१ ॥ यत्र रेखागते मित्रे मार्गे मित्रस्य संगमः॥ मित्राभ्यंतरगे शत्रौ मित्रत्वमुपजायते॥ शत्रुमध्यगते मित्रे शत्रुत्वमुपजायते॥ ७२ ॥ शत्रुवर्णाधिपे नीचे दुर्बलेऽस्तंगतेपि वा॥ तथैव राष्ट्रपे नीचे राष्ट्रभंगो विचक्षणैः॥ ७३ ॥ प्रथमहतः पुरुषश्चेदधोमुखो हंतुरभिमुखः पतति॥ हंतुः परा-

जयः स्यादजयः पतिते तथोत्ताने ॥ ७४ ॥ छत्रं ध्वजो नरः शङ्खं गजो वाजी व यच्छिराः ॥ निपतेत्तत्र यत्सेना विजयं प्राप्नुयाद्ध्रुवम् ॥७५॥ पौरः प्राक्परतो यायी रविराक्रंदसंज्ञकः॥ मध्याह्ने रात्रिनाथश्च नित्यमाक्रंदसंज्ञकः ॥७६॥ इति श्रीनरपति-जयचर्यास्वरोदये चातुरंगम् ॥

मध्यगतत्वं ग्रहयोर्मध्ये ॥ ७१ ॥ ७२ ॥ अथ स्वस्थारिष्टमाह । अथ यस्य नगरदेशग्रह-णेच्छा भवति तन्नगरस्य राज्ञो वा स्वस्थारिष्टमवाप्य परपुरविषयं गच्छेत् । तथा च । शत्रु-वर्णाधिपे इति । वर्णाधिपाः पश्चादेवोक्ताः ॥ ७३ ॥ अथान्यत्पराजयलक्षणमाह । प्रथमहत इति । प्रथमं यः कश्चित्संग्रामे हतः सन् हंतुरभिमुखः येन हतस्तस्यैवाभिमुखमधोमुखः पतति । अथवा यस्य योधस्तस्य राज्ञोभिमुखस्तदा तस्य योधस्य राज्ञो वा विजयो ज्ञातव्यः । कुत्रापि प्रथमहतो भवतु सेनयोर्मध्ये यस्यैव राज्ञः प्रथमहत पुरुष-गजादयो वा हता भवंतु । यदभिमुखशिरा अधोमुखः पतित तस्यैव विजयः । उत्तरे मुखं तस्य पराजयः । अयमेवार्थः ॥ ७४ ॥ अमुमेवार्थमग्रे फलयति । छत्रमिति । एतानि यदभिमुखे अधोमुखानि पतंति उभयोः सेनयोर्मध्ये ज्ञात्वा अपरसेनांतं प्रतिगता जयं प्राप्नोति ॥ ७५ ॥ पौर इति । पौरसंज्ञपूर्वाह्णे रविः अपराह्णे यायी मध्याह्ने आक्रंदसंज्ञकः । नित्यं शीतांशुराक्रन्दः पौरा जीवार्कचन्द्रजाः । केत्वारभृगुराहवः यायिनो बलिनस्तेषां जयदास्तेन्यथान्यथा । बलि-नस्तेषां तेषां जयदाः अबला अस्तगा अन्यथा भंगदाः ॥ ७६ ॥ इति श्रीनरपतिजयचर्या-टीकायां जयलक्ष्म्यां राजविजयोक्तचातुरंगव्याख्यानम् ॥

गजचक्रम् ॥




अथ गजचक्रम् ॥ गजाकारं लिखेच्चक्रं सर्वावयवसंयुतम् ॥ अष्टाविंशतिऋक्षाणि देयानि सृष्टिमार्गतः ॥ १ ॥ मुखे शुंडाग्रनेत्रे च कर्णशीर्षाङ्घ्रिपुच्छके ॥ द्विकं द्विकं च दातव्यं पृष्ठोदरे चतुश्चतुः ॥२॥ गजनामादिभान्यादौ वदनाद्गण्यते बुधैः ॥ यत्र ऋक्षे स्थितः सौरिर्ज्ञेयं तत्र शुभाशुभम् ॥ ३ ॥ मुखे शुंडाग्रनेत्रे च सौरिर्भे

मस्तकोदरे ॥ युद्धकाले गजे यस्य जयस्तस्य न संशयः ॥ ४ ॥ पादे पृष्ठे च पुच्छे च कर्णस्थे च शनैश्चरे ॥ मृत्युर्भंगो रणे तस्य ऐरावतसमो यदि ॥५॥ एतेषु दुष्टगात्रेषु यत्काले संस्थितः शनिः॥ तत्काले पट्टबन्धश्च वर्जनीयः प्रयत्नतः ॥ ६ ॥ पृथिव्या भूषणं मेरु शर्वर्या भूषणं शशी ॥ नराणां भूषणं विद्या सैन्यानां भूषणं गजः ॥ ७ ॥ शरतोमरचक्राद्यैर्गजस्कन्धे हता नराः ॥ तत्क्षणा-त्स्वर्गमायांति तस्मात्स्वर्गोपमा गजाः ॥ ८ ॥ नास्ति हस्तिसमो योद्धा नास्ति हस्तिसमः सखा ॥ नास्तिहस्ति समो बन्धुर्नास्ति हस्तिसमो रिपुः ॥९॥ इतिस्वरोदये गजचक्रम् ॥

अथ गजचक्रम् । गजाकारमिति ॥ १ ॥ नक्षत्रन्यासक्रमः । मुखशुण्डाग्रनेत्रकर्णशीर्ष-चरणपुच्छ एवं क्रमेण गजांगन्यासः पृष्ठउदरमुखशुंडाग्रादिपुच्छांतांगविभागे गजस्य दशांगे द्वयंद्वयं कृत्वा । गजनामनक्षत्रादिन्यासः । पृष्ठे चतुः उदरे चतुः ॥ २ ॥ गजनामा-द्दीति । सुगमम् ॥ ३ ॥ ४ ॥ पादे पृष्ठे चेति । चतुः पादौ शनौ पुच्छे पृष्ठे च कर्णे च शनौ यस्य गजस्यांगे ज्ञाते सति तं गजमारुह्य राजा संग्रामं न कुर्यात् । गजारोहण-कांक्षयापि तुंगगजं नारोहेत ऐरावतसमोपि यदि । किं पुनः संग्रामं मुखादिषु शनौ यथे-च्छया गजावरोहणं कुर्यात् ॥ ५ ॥ ६ ॥ गजप्रशंसामाह । पृथिव्या इति ॥ ७ ॥ ८ ॥ ॥ ९ ॥ इति नरपतिजयचर्याटीकायां गजचक्रम् ।

## अथाश्वचक्रम् ॥




अथाश्वचक्रम् ॥ अश्वाकारं लिखेच्चक्रं अश्वधिष्ण्यादि-तारकाः ॥ वदनात्सृष्टिगा देया अष्टाविंशतिसंख्यया ॥ १ ॥ मुखाक्षिकणशीर्षेषु पुच्छांघ्रिषु युगं युगम् ॥ पंच पञ्चोदरे पृष्ठे सौरिर्यत्र फलं ततः ॥ २ ॥ मुखाक्ष्युदरशीर्षस्थो यदा सौरिस्तुरंगमे ॥ तदा-रिर्भंगमायाति रणेन्यत्र पराजयः ॥३॥ कर्णांघ्रिपुच्छपृष्ठस्थो यदा

यस्य हयस्य च ॥ विभ्रमं भंगहानी च करोत्यश्वो महाहवे ॥ ४ ॥ एतत्स्थानगतः सौरिर्यदा काले हयस्य च ॥ पट्टबन्धे गमे युद्धे वर्जयेत्तं हयं नृपः ॥ ५ ॥ देशांतरस्थितास्तस्य रिपवः संति शंकिताः ॥ तुरंगा यस्य भूपस्य विचरंति महीतले ॥ ६ ॥ मेदिनी तस्य यस्याश्वा इति वाक्यं विपश्चिताम् ॥ सर्वाः श्रियो न राजन्ते विनाश्वेन महीभुजाम् ॥ ७ ॥ इति अश्वचक्रम् ॥

अथाश्वचक्रम् । अश्वाकारमिति ॥ १ ॥ मुखाक्षीति । अश्वाकारं लिखित्वा नक्षत्रन्यासो मुखादितः । तत्राश्वस्य यन्नामनक्षत्रं मुखाद्गणनया यत्र शनिः पतति ततः फलम् । तत्र च क्रमः । मुखे द्वयं २ अक्ष्णोर्द्वयं२ कर्णयोर्द्वयं२ शीर्षे द्वयं २ पुच्छे द्वयं२ अग्रिमदक्षिणांघ्रौ द्वयम् २ पश्चाद्दक्षिणांघ्रौ द्वयं २ पश्चाद्वामांघ्रौ द्वयं२ ततोग्रिमवामचरणे द्वयं पंचोदरे ५ पंच पृष्ठे५ एवमष्टाविंशतिनक्षत्रणां न्यासः । उदाहरणम् । राजवाहन इति नाम तस्य चित्रानक्षत्रं तदारभ्य चित्रानक्षत्रादारभ्य द्वयं द्वयं कृत्वा उत्तराषाढास्थः शनिः राजवाहननाम्नोश्वस्य शिरसि शनिः ॥ २ ॥ तत्र पृथगंगानां शनिफलमाह । मुखाक्ष्युदरेति । मुखद्वयनक्षत्रे अक्षिद्वयनक्षत्र उदरर्क्षे च मस्तकर्क्षे च यदि तुरगनामनक्षत्रादेतेष्वंगेषु सौरिः स्थितो भवति । तदा तमारुह्य राजा जयं लभते परान् जयति ॥ ३ ॥ कर्ण २ पुच्छ २ चतुश्चरणेषु ८ पृष्ठे च ५ एषु नक्षत्रेषु सप्तदशसु यदि शनिश्चरति तदा संग्रामे विभ्रमः विशेषेण भ्रमः भयमुद्वेगश्च भंगश्च पलायनं तुरगः करोति तमश्वं नारोहेत् ॥ ४ ॥ ५ ॥ अथाश्वप्रशंसामाह । देशांतरस्थिता इति ॥ ६ ॥ ७ ॥ इति अश्वचक्रम् ।

अथ शुद्धमुहूर्तविषये अश्वचक्रम् ॥ अश्वानां कर्म कर्तव्यं स्वातौ तिष्ये पुनर्वसौ ॥ धनिष्ठाद्वितये हस्ते रेवतीरोहिणीद्वये ॥ १ ॥ सूर्यभात्स्थिरऋक्षेषु मुखे रामा यशस्तथा ॥ हृदये पञ्च लाभोयं पादे षष्ठश्च भंगदः ॥२॥ पुच्छे वेदा महाहानिः पृष्ठेब्धिर्मृत्युरादिशेत् ॥ अश्वाकारं लिखेच्चक्रं पूर्वग्रंथानुसारतः ॥ स्कंधारभ्य मुखस्यांतं सूर्यभात्साभिजिन्न्यसेत् ॥ ३ ॥ पञ्चदश्ययमैर्वेदबाणादभ्रक्रमेण च ॥ जन्मनक्षत्रमारभ्य गण्यते चन्द्रभे विधिः ॥ नवभिस्तु हरेद्भागं शेषं वाहनमुच्यते ॥ ४ ॥ ग्रंथांतरे ॥ अश्वाकारं लिखेच्चक्रं साभिजिद्भानि विन्यसेत् ॥ स्कन्धे च सूर्यभात् पञ्च पृष्ठे च

दशभं न्यसेत् ॥५॥ पुच्छे द्वौ दीयते प्राज्ञैश्चतुष्पादे चतुष्टयम् ॥ उदरे पंच ऋक्षाणि मुखे द्वे तुरगस्य च ॥ ६ ॥ धनलाभौ मुखे सम्यक् वाजिर्नश्यति चोदरे ॥ चरणस्थे रणे भंगः पुच्छे पत्नी विनश्यति ॥ ७ ॥ अर्थलाभो भवेत्पृष्ठे स्कंधे स्कंधपतिर्भवेत् ॥ रासभो रत्नहंता च वाजी रत्नप्रदो भवेत् ॥ ८ ॥ हस्ते लक्ष्मी-जयौ दद्यान्मेषे च मरणप्रदः ॥ जंबुकश्चायुषं हंति सिंहे वैरं च गर्जनम् ॥९॥ काके वार्ता कलिश्चैव शिखिहंसौ शुभावहौ॥१०॥ इति स्वरोदये अश्वचक्रम् ॥

अथ शुद्धमुहूर्तविषयेऽश्वचक्रम् । अश्वानामिति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ इत्यश्वचक्रम् ।

## अथ रथचक्रम् ।




अथ रथचक्रम् ॥ रथचक्रं लिखेच्चादौ शकटाकृतिशोभनम् ॥ रथाग्रे त्रित्रिशूलं च चतुश्चक्रं त्रिनाडिकम् ॥ १ ॥ भानुभं मध्यशूलाग्रे ततः सव्यगतानि तु ॥ त्रीणित्रीणि लिखेदेवं सप्तविंशतिसंख्यया ॥ २ ॥ महारथिकभं यत्र तत्र वक्ष्ये शुभाशु-

भम् ॥ शृंगे मृत्युर्जयं चक्रे रथे संधिस्त्रिदंडके ॥ ३ ॥ इति रथचक्रम् ॥

अथ रथचक्रम् । रथचक्रमिति ॥ १ ॥ २ ॥ ३ ॥ इति रथचक्रम् ।

## ॥ व्यूहचक्रम् ॥




अथ व्यूहचक्रम् ॥ व्यूहचक्रं तथाष्टारं वृत्ताकारं त्रिनाडिकम् ॥ दंड चतुष्टयं बाह्ये कर्तव्यं च चतुर्दिशि ॥ १ ॥ पूर्वदंडाग्रतो न्यस्य भानुभाद्यं भमण्डलम् प्रवेशे निर्गमे चैव त्रीणित्रीणि प्रदक्षिणम् ॥ २ ॥ शशिसंज्ञाष्टकं मध्ये तद्बाह्ये भानुसंज्ञकम् ॥ तृतीये राहुसंज्ञं च केतुर्दंडचतुष्टये ॥ ३ ॥ चंद्रर्क्षे विजयं लाभः सूर्यांगे मध्यमं फलम् ॥ राहुऋक्षाष्टके विघ्नं मृत्युः केतुचतुष्टये ॥ ४ ॥ एवमुक्तचतुःस्थाने यद्दिने यस्य नामभम् ॥ तद्दिने तत्फलं तस्य सर्वकार्येषु सर्वदा ॥ ५ ॥ इति यामलीय स्वरोदये व्यूहचक्रम् ॥

अथ व्यूहचक्रम् । व्यूहचक्रमिति । अस्मिन्व्यूहचक्रे चतुःस्थानं प्रोक्तम् । मध्येऽष्टसु नक्षत्रेषु चंद्रस्थानम् । तदुपरि अष्टसु नक्षत्रेषु रविस्थानम् । तदुपरि अष्टसु नक्षत्रेषु राहोः स्थानम् । तदुपरि चतुर्दंडेषु चतुर्दिक्षु चतुर्षु नक्षत्रेषु केतुस्थानम् । एतेषु चतुर्षु स्थानेषु यद्दिने यस्य नामभं पततितद्दिने तत्स्थानफलं भवति । चंद्रर्क्षे विजयं लाभमित्यादि ॥ १ ॥ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ इति व्यूहचक्रम् ।

कुंतचक्रम् ।




अथ कुंतचक्रम् ॥ कुंताकारं लिखेच्चक्रं मूलदंडशिखान्वितम् ॥ दिनभादि समारभ्य कर्तव्यं नवकत्रयम् ॥ १ ॥ नामभं नवके यत्र तत्र ज्ञेयं शुभाशुभम् ॥ मूले मृत्युर्जयं दंडे शेषर्क्षे तुल्यता रणे ॥ २ ॥ प्रभुभं यत्र नवके तत्र क्रूरैः फलं वदेत् ॥ मूले मृत्युर्जयो दंडे शिखायां संगरो भवेत् ॥ दंडयुद्धेषु सर्वेषु कुंततश्चिंतयेद्बुधः ॥ ३ ॥ इति कुंतचक्रम् ॥

अथ कुंतचक्रम् । कुंताकारमिति ॥ १ ॥ २ ॥ ३ ॥ इति कुंतचक्रम् ॥

खड्गचक्रम् ।




अथ खड्गचक्रम् ॥ खड्गचक्रं लिखेदादौ नवभेदसमन्वितम् ॥ योधधिष्ण्यं समारभ्य त्रीणि त्रीणि लिखेद्बुधः ॥ १ ॥ यवं वज्रं तथा मुष्टिः पालिका बंधधारयोः ॥ खड्गं तीक्ष्णं विजानीयान्नवांगानि विभेदतः ॥ २ ॥ यवादौ यत्र बंधान्ता जायंते क्रूरखेचराः ॥ मृत्युर्भंगो भयं युद्धे सौम्यैर्लाभो जयस्तथा ॥ ३ ॥ खड्गे धाराद्वये तीक्ष्णे क्रूरैर्जयति संगरे ॥ सौम्यैर्यत्र भवेद्भंगो मिश्रैर्मिश्रफलं ततः ॥ ४ ॥ इति खड्गचक्रम् ॥

अथ खड्गचक्रम् । खड्गचक्रमिति ॥१॥ खड्गस्यांगविभागेन त्रित्रिनक्षत्रक्रमेण प्रत्यंगविभागः । तत्र योधनक्षत्रात् खड्गस्य यवाद्यंगविभागेषु पापशुभस्थेषु फलं वदेत् ॥ २ ॥ फलमाह । यवादाविति । यवादिबंधांतपर्यंतं यस्य योधनक्षत्रात्क्रूरा भवंति तस्य योधस्य खड्गेन युद्धं कुर्वन्मृ-

त्युर्भवति न वा भंगः । यदि आयुष्मान्भवति तदा तं खड्गं हस्तेनादाय युद्धाय न सज्जेत् । तत्र शुभाश्चेद्भवंति तदा जयः जयलक्ष्मीप्राप्तिः अन्यदा क्षेमलाभसुखानि च ॥ ३ ॥ खड्गे धाराद्वयेति । यस्य योवनक्षत्रात् षोडशादिनक्षत्रात् खड्गत्रये धाराद्वयस्थषण्नक्षत्रे तीक्ष्णे च षोडशनक्षत्राद्द्वादशनक्षत्रेषु पापा जयदास्तेन खड्गेन जयो भवति । तत्र शुभा भंगकराः । तेन खड्गेन हता अपि भटाः कुशलिनो भवंति ॥ ४ ॥ इति खड्गचक्रम् ।

## छुरिकाचक्रम् ।




अथ छुरिकाचक्रम् ॥ यथा खड्गं तथा वियाच्छुरिकां तत्र निर्णयम् ॥ क्रूरसौम्यविभागेन योधधिष्ण्यानि विन्यसेत् ॥१॥ इति छुरिकाचक्रम्॥

अथ छुरिकाचक्रम् । यथा खड्गमिति ॥ १ ॥ इति छुरिकाचक्रम् ।

## चापचक्रम् ।




अथ चापचक्रम् ॥ चापचक्रं समालिख्य गुणबाणसमन्वितम् ॥ शशिनक्षत्रतो भानि त्रीणित्रीणि समालिखेत् ॥१॥ त्रीणि बाणस्य मूले तु मध्ये मूर्ध्नि क्रमात्तथा ॥ चापस्य मूलमध्योर्ध्वे त्रीणित्रीणि तथा पुनः ॥ २ ॥ गुणे तु त्रीणि त्रीण्येव योधनक्षत्रतः फलम् ॥ शरमूले भवेन्मृत्युर्मध्ये व्याधिः फले जयः ॥ ३ ॥ गुणमध्ये भवेद्भंगश्चापमध्ये धनक्षयः ॥ चापोर्ध्वे विजयो ज्ञेयो गुणोर्ध्वे लाभसंयुतः ॥ ४ ॥ चापाधो विग्रहो मृत्युर्गुणाधोपि तथा फलम् । पापग्रहयुते नेष्टं विशेषेण तु नान्यथा ॥ ५ ॥ सौम्ययोगे जयं लाभं चापचक्रे समादिशेत् । शुभपापसमायोगे बलाधिकफलं स्फुटम् ॥ ६ ॥ इति चापचक्रम् ।

अथ चापचक्रम्। चापचक्रमिति ॥ १ ॥ २ ॥ गुणेत्विति। बाणस्य मूले धनुर्गुणयोगो यत्र कोटक इति प्रसिद्धः पक्षः पत्रं पक्षिपक्षः तत्रादौ त्रीणि ततः शरमध्ये त्रीणि ततः फले त्रीणि च क्रमात्। धनुर्मूले त्रीणि मध्ये त्रीणि धनुःकोटौ त्रीणि लिखेद्बुधः बाणकोदंडमौर्वीषु तत्रैव गुणे त्रीणि गुणमध्ये त्रीणि गुणमूले त्रीणि एवं सप्तविंशतिनक्षत्रन्यासः॥३॥ तत्र पृथक्फलमाह। दिनर्क्षमिति। बाणकोदंडमौर्वीणां त्रयाण मूलाल्लिखनम्। तत्र प्रथमतो बाणमूलाद्गणना बाणस्य मूले त्रीणि नक्षत्राणि मध्ये त्रीणि उपरि इति नव बाणे नक्षत्राणि। दिनर्क्षतो योधभं गणयेत् बाणस्यादौ दिनभात्त्रीणि तत्र योधनक्षत्रमवलोकयेदस्ति न वा। ततस्तदग्रे त्रीणि मध्ये तत्र योधनक्षत्रं विद्यते न वा। ततोऽवसाने त्रीणि एवं नवभानि दिनर्क्षतः। ततो दशमनक्षत्रात्त्रीणि त्रीणि कृत्वा धनुर्मूले मध्ये कोटौ च तत्र योधनक्षत्रं विचारयेत्। तदुपरि एकोनविंशति १९ नक्षत्रान्मौर्वीमूले त्रीणि मध्ये च त्रीणि धनुःकोटिलग्नमौर्वीषु त्रीणि त्रीणि तत्र विचारयेत्। ततः फलम्। दिनर्क्षतस्त्रिषु नक्षत्रेषु जन्मभं तदा धनुष्मतो युद्धतः मृत्युर्भूयात्। मध्ये त्रिनक्षत्रादुपरि षण्नक्षत्रमध्ये यदि च जन्मभं तदा धनुष्मान्व्याधिपीडितो भवति। संग्रामदिने व्याधिरुत्पद्यते धनुर्गुणमध्ये च जन्मभे पतिते यथाक्रमं संग्रामे भंगः चापमध्ये धनक्षयः ॥ ४ ॥ तथा च। शरमध्ये इति व्याख्यातम् ॥ ५ ॥ चापगुणमूलयोर्जन्मभे मृत्युः गुणचापयोरुपरि जन्मभे क्रमेण तद्दिने लाभः विजयश्च। चापगुणमूलयोर्जन्मभे पापयुते विशेषात्तदवश्यं फलं नियतम्। शरमूलेऽपि ॥ ६ ॥ ७ ॥ इतिचापचक्रम्।

## अग्निचक्रम्.

| सू | बु | शु | श | चं | मं | गु | रा | के |
|---|---|---|---|---|---|---|---|---|
| ३ | ३ | ३ | ३ | ३ | ३ | ३ | ३ | ३ |
| शोक. | सुख. | अर्थलाभ. | पीडा. | लाभ. | निर्धन. | अर्थलाभ. | हानि. | मृत्यु. |

अथाग्निचक्रम् अथातः संप्रवक्ष्यामि अग्निचक्रं वरानने॥ होमे च शांतिके चैव चिंतनीयं प्रयत्नतः ॥१॥ सैका तिथिर्वारयुता कृताप्ता शेषे गुणेभ्रे भुवि वह्निवासः ॥ सौख्याय होमे शशियुग्मशेषे प्राणार्थनाशौ दिवि भूतले च ॥ २ ॥ त्रीणित्रीणि भवेद्दक्षे सूर्यऋक्षेष्वनुक्रमात् ॥ आदित्ये च भवेच्छोकं बुधे चैव श्रिया सुखम् ॥३॥ शुक्रे चैवा-

र्थलाभश्च शनौ पीडा न संशयः ॥ चन्द्रे लाभं विजानीयाद्भौमे च निधनं भवेत् ॥४॥ गुरौ चैवार्थलाभश्च राहौ हानिश्च निश्चितम्॥ केतौ चैव भवेन्मृत्युरग्निचक्रं वरानने ॥ ५ ॥ रविभं दीयते पूर्वं गण्यते सृष्टिमार्गतः ॥ शुभाशुभफलं वक्ष्ये अग्निचक्रं सदा बुधैः ॥ ६ ॥ इत्यग्निचक्रम् ॥

अथाग्निचक्रम् । अथात इत्यादि सुगमम् ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ इत्यग्निचक्रम् ।

शनिचक्रम् ॥



शनिचक्रं नराकारं लिखित्वा सौरिभादितः ॥ नामऋक्षं भवेद्यत्र ज्ञेयं तत्र शुभाशुभम् ॥ १ ॥ मुखैकं दक्षदोस्तुर्यं षट्पादौ पंच हृत्करे ॥ वामे तुर्यं त्रयं शीर्षे नेत्रे गुह्ये द्विकं द्विकम् ॥२॥ मुखे हानिर्जयो दक्षे भ्रमः पादे श्रियो हृदि ॥ वामे शीर्षे भयं राज्यं नेत्रे सौख्यं मृतिर्गुदे ॥ ३ ॥ तुर्याष्टद्वादशे पक्षे यदा विघ्नकरः शनिः ॥ तदा सौख्यं वपुस्थाने हृच्छीर्षे नेत्रदक्षयोः ॥ ४ ॥ तृतीयैकादशे षष्ठे यदा सौख्यकरः शनिः ॥ तदा विघ्नं शरीरस्थे मुखगुह्यांघ्रिवामदोः ॥५॥ यस्य पीडाकरः सौरिस्तस्य चक्रमिदं स्फुटम् ॥ लिखित्वा कृष्णद्रव्येण तैलमध्ये क्षिपेद्बुधः ॥ ६ ॥ निक्षिप्य भूमिमध्यस्थे कृष्णपुष्पैः प्रपूजयेत् ॥ तुष्टिं याति न संदेहः पीडां मुक्त्वा शनैश्चरः ॥ ७ ॥ यथोक्तं यामले तंत्रे सूनोः सूर्यस्य पूजनम् ॥ यथोक्तविधिना सर्वं कर्तव्यं मंत्रपूजनम् ॥ ८ ॥ जपेत्प्रतिदिनं मंत्रं संख्ययाष्टोत्तरं शतम् ॥ पूजयित्वा विधानेन ततः शांतिं प्रयच्छति ॥ ९ ॥ इति शनिचक्रम् ॥

अथ शनिचक्रम् । शनिचक्रमिति सुगमम् ॥ १ ॥ मुखैकमिति । एकमित्यादि नक्षत्रसंख्या-ध्यासचक्रमेणैव शनिनक्षत्रान्नामनक्षत्रं गण्यते । शन्यंगे यत्र पतति ततःशुभाशुभम् । तत्रगणना

क्रमः मुख १ दक्षिणहस्त ४ दक्षिणपाद ३ वामपाद ३ हृदय ५ वामकर ४ शीर्ष ३ नेत्र २ गुह्यं २ तं शनिचक्रम् एवं २७ ॥ २ ॥ शनिमुखाद्यंगपतितनक्षत्रफलमाह। मुखे हानिरिति । फलमिदं मुखादिन्यासादेव बोद्धव्यम् ॥ ३ ॥ यस्य जन्मराशितः चतुर्थेऽष्टमे द्वादशे द्वितीये शनिर्भवति तदा तस्मिन्काले तस्य नामनक्षत्रं शनिस्थितनक्षत्राद्गणनया शनिः हृच्छीर्षनेत्रदक्षभुजस्थानेषु पतति तदा चतुर्थाष्टद्वादशद्वितीयस्य फलं बाधित्वा सौख्यफलदायको भवति ॥ ४ ॥ यदा पुनः तृतीयैकादशे षष्ठे जन्मराशिगतः शनिः सौख्यकरः तस्मिन्समये शनिचक्रे शनिनक्षत्राद्गणनया मुखादिक्रमेण मुखगुह्यवक्रवामदोः षण्नक्षत्रं पतति तदा तृतीयैकादशादिफलं बाधित्वा विघ्नमेव सर्वत्र ददाति ॥ ५ ॥ अथाशुभे शनौ शांतिकमाह ॥ यस्य पीडाकर इति ॥ ६ ॥ मंत्रपूजनम् ॐ श्रांश्रींश्रौंसः शनैश्चराय स्वाहा इति मंत्रः ॥ ८ ॥ ९ । इदि जयलक्ष्म्यां शनिचक्रम् ।

## कूपचक्रम् ॥




अथ कूपचक्रम् ॥ कूपचक्रं प्रवक्ष्यामि विज्ञेयं तद्यथा बुधैः ॥ गणयेद्रोहिणीपूर्वं यावत्तिष्ठति चंद्रमाः ॥ १ ॥ मध्ये शीघ्रजलं स्वादु पूर्वे भूमिस्तु खंडितम् ॥ अग्नेय्यां सजलं प्रोक्तं याम्यायां निर्जलं भवेत् ॥ २ ॥ नैर्ऋत्यां हि क्षारजालं वारुण्यामुत्तमं जलम् ॥ वायौ पाषाणभेदश्चोत्तरे दीर्घजलं भवेत् ॥ ३ ॥ ईशान्यां कटुकं क्षारं कूपचक्रे विधीयते ॥ ४ ॥ इति कूपचक्रम् ॥

अथ कूपचक्रम् । कूपचक्रमिति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ इति कूपचक्रम् ।

अथ कूर्मचक्रम् ॥




अथ कूर्मचक्रम् ॥ वर्तुलं नवकोष्ठं च कूर्माकारं कृती लिखेत् ॥ स्वरयुग्मं क्रमेणैव इंद्राद्यष्टसु दिक्षु च ॥ १ ॥ कादिवर्णान् क्षमीशानं यथा मध्ये स्थलाधिपः ॥ तन्नामाद्यक्षरं तत्र कूर्मस्थं तच्च दीपकम् ॥ २ ॥ तत्पार्श्वे कोष्ठे द्वौ हस्तौ द्विविधौ द्वौ च कुक्षितः ॥ तत्पार्श्वौ द्वौ च पादौ च कोष्ठे पुच्छे च शेषकः ॥ ३ ॥ सुखमग्निभगः कोष्ठे मुखे सिद्धिरनुत्तमा ॥ करस्थाने महाक्लेशं कुक्षौ दुःखमवाप्नुयात् ॥ ४ ॥ पादे हानिस्तथा पुच्छे पीडा स्याद्बंधनादिभिः ॥ मोक्षार्थी वंदनं कुर्यात् दक्षिणे त्वाभिचारके ॥ ५ ॥ श्रीकामः पश्चिमे भूत्वा उत्तरे शांतिदं भवेत् ॥ ईशान्ये शत्रुनाशः स्यादाग्नेये शत्रुदायकः ॥ ६ ॥ नैर्ऋत्ये शत्रुभीतिः स्याद्वायव्यां तु पलायनम् ॥ ग्रामे वापि वने वापि यत्र कुत्रावलोकयेत् ॥ ७ ॥ दीपस्थाने जपं कुर्यात् सर्वकार्यमभीप्सितम् ॥ कूर्मचक्रमिति ज्ञेयं यः कूर्याज्जपयज्ञकम् ॥ ८ ॥ तस्य जपफलं नास्ति सर्वोनर्थोपि लभ्यते ॥ ९ ॥ इति कूर्मचक्रम् ॥

अथ कूर्मचक्रम् ॥ वर्तुलमिति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥

इति कूर्मचक्रम् ।

अथ सेवाचक्रम् ॥




अथ सेवाचक्रम् ॥ सेवाचक्रे सप्तशीर्षे सप्तपृष्ठे तथोदरे ॥ पादयोः सप्त ऋक्षाणि साभिजित्तत्र विन्यसेत् ॥ १ ॥ स्वामिभाद्भृत्यभं गण्यं भृत्यभात् स्वामिभं ततः ॥ निष्फलं पादपृष्ठस्थे सफलं मस्तकोदरे ॥ २ ॥ इति सेवाचक्रम् ॥

अथ सेवाचक्रम् । सेवाचक्रे इति । सेव्यसेवकयोर्लाभार्थं सेवाचक्रम् ॥ १ ॥ सेवकस्य सेव्याल्लाभो भविष्यति निष्फलं वा सेव्यस्य सेवकात्सेवालाभोऽलाभो वा फलाफलं विचार्यते । स्वामिभादिति । सेव्यसेवकयोर्नक्षत्रमन्योन्यं शिरसि दत्त्वा गणयेत् । स्वामिभाद्गणनया सेवकस्य नक्षत्रं सेव्यस्य शिरसि पतति तदा सेवकस्य स्वामिनो लाभः । तेन किम् । प्रथमतः शिरसि सप्त तदनन्तरं सप्त पृष्ठ तत उदरे सप्त ततः पादयोः सप्त दद्यात् गणनापि तथैव ॥ २ ॥ इति सेवाचक्रम् ।

## अथ घातनरचक्रम् ॥




अथ घातनरचक्रम् ॥ नरचक्रं नराकारमष्टावयवसंयुत ॥ येन विज्ञानमात्रेण क्रियते घातनिर्णयः ॥ १ ॥ मुखैकं मस्तके त्रीणि हस्ते पादे चतुश्चतुः हृदि पञ्च त्रिकं कण्ठे साभिजिद्भानि विन्यसेत् ॥ २ ॥ कृत्वा योधभमादौ तु मुखे मस्तकवामके ॥ हस्त पादोदरग्रीवादक्षहस्तांघ्रि गण्यते ॥ ३ ॥ यत्रांगे भानुभौमार्किराहवो धिष्ण्यसंस्थितः ॥ तत्र घातं विजानीयाच्चन्द्रयोगे विशेषतः ॥ ४ ॥

अथ घातनरचक्रम् । नरचक्रमिति ॥ १ ॥ २ ॥ न्यासनक्षत्रे नरावयवक्रमेण फलयति । कृत्वा योधभेति । योधनामनक्षत्रं मुखे दत्त्वा गण्यते । कोर्थः एकं मुखे त्रीणि शीर्षमित्यादिनक्षत्रं दत्त्वा यत्र क्रूरास्तत्र घातफलं वदेत् ॥ ३ ॥ यत्रांगे इति । चन्द्रपापयोगे अवश्यमेव घातं वदेत् । इदं तु सामान्यं द्वंद्वयुद्धे दैववित् स्वयोद्धाऽवयवं प्रति भटांगेषु यत्र यत्र पापा भवन्ति तदंगं तस्य वदेत् । अमुकांगे पापो विद्यते तत्र घातं कारयेत् । अथोपदेशगणनायां दक्षहस्तांघ्रिषु गण्यत इति । अत्र उपदेशः । योधनक्षत्रं दक्षिणकरे दत्त्वा गणयेत् यत्र पापस्तत्र घातं वदेत् । कृत्वा योधभमादौ तु मुखाद्गण्यते उपदेशेन दक्षिणहस्तन्यस्तचतुर्नक्षत्राद्गण्यते । ततो मुखे शिरसि त्यादिगणनाक्रमः ॥ ४ ॥

ग्रहभुक्तिप्रमाणेन नवांशकक्रमेण च ॥ प्रहारो जायते तत्रवक्रे द्विगुणसंख्यया ॥ ५ ॥

ग्रहभुक्तिप्रमाणेनेति । यन्नक्षत्रे पापः तेन पापेन नक्षत्रोद्दिष्टराशौ यावंतो नवांशा भुक्तास्तन्नवांशप्रमाणं घातं च दिशेत् । ग्रहदृष्ट्या च ऊर्ध्वदृष्टिग्रहे ऊर्ध्वघातं अधोदृष्टिग्रहे अधोघातम् ॥ ५ ॥

निजभे त्वर्द्धघातं च पादोनं मित्रभे ग्रहे ॥ उदासीने भवेत्सर्वं द्विगुणं शत्रुगे ग्रहे ॥६॥ द्विर्द्वादशे भानुचन्द्रौ त्रिरुद्रे शनिमंगलौ॥ शुक्रदुजे वेददृशौ पञ्चांके राहुवाक्पती ॥ ७ ॥ षष्ठाष्टके केतुशुक्रौ सप्तार्धे कंटतीक्ष्णगू ॥ नृराशेर्लग्नतश्चैते ग्रहा घ्नंति रिपुं महत् ॥८॥ नाभिश्रोत्रमुखे चन्द्रः पृष्ठकोष्ठे बुधस्तनौ ॥ भौमार्कौ दंडहृद्बंधे गुरूदरे गुदे भृगुः ॥ ९ ॥ बाहुकर्णे तथास्ये च स्वर्भानुः स्कन्धकर्णयोः ॥ कालः करतले यस्य बाहुकक्षांधराभवः ॥१०॥ केतुर्दंडे त्रिधा हंति मुखे शीर्षोदरे रविः ॥ क्षितिवर्णैर्युता वेधा ग्रहा घातस्य लक्षणम् ॥ ११ ॥ शत्रुभे मित्रघातेपि रिपुणा तस्य होरया ॥ म्रियतेऽरिः स्वके लग्ने शत्रुघातेपि हन्यते ॥ १२ ॥

पुनर्घातं निर्णयति । निजभे त्वर्द्धघातं चेति ॥ ६ ॥ ७ ॥ ८ ॥ ९॥ १०॥ ११॥१२॥

एकोऽप्यनेकघातांश्च करोति भूबलोज्झितः ॥ भूबलस्थे भटे खेटाः स्थिता घातं न कुर्वते ॥१३॥ यत्रयत्र स्थितो घातो यत्रयत्र स्थितो न हि ॥ तत्फलं कथयिष्यामि ग्रहभूमिबलात्पुनः ॥ १४ ॥ क्रूरा घातं न कुर्वंति दक्षपृष्ठगता रणे ॥ संमुखा वामगा एते योधांगे क्षतकारकाः ॥ १५ ॥ दक्षिणांगगताः क्रूराः सौम्या वामांगसंस्थिताः ॥ शिरश्छेदे समुत्पन्ने भटो धावति सम्मुखम् ॥ १६ ॥ यस्य वामांगगाः क्रूराः सौम्या यस्य च दक्षिणे ॥ तस्य भंगो रणे नूनं यदि शूरो महाभटः ॥१७॥ इति घातनरचक्रम् ॥

एकोपीति । यः पापो घातकारी स खेटो योधस्य भूबलस्थो भवति तदा घातं न करोति। भूबलोज्झितखेटः एकोपि अनेकघातं करोति ॥ १३ ॥ तेन यत्रयत्र भूबलं तं तं कथयति । यत्र यत्रेति । सुगमम् ॥ १४ ॥ क्रूराघातमिति । ग्रहो यदि कृत्तिकादिसप्तनक्षत्रव्यवस्थया यत्रक्षे पापः शुभो वा तत्र तत्र ग्रहभूमिः । तत्रतत्र ग्रहबलं किं तदाह यः पापो घाताय व्यवस्थितः स चेद्योधस्य दक्षिणस्थः पृष्ठस्थितो वा भवति संग्रामकाले तदा स घातं न करोति स एव

श्चेत्संमुखो वामगो वा भवति तदा एकोपि अनेकघातं करोति । मुद्गरैः कुंतैः पाशैः खङ्गैरेतैः घातं करोति । अथवा अनेकैर्भटैर्मिलितैर्हन्यते । तदा कृत्तिकादिसप्तस्थे पापे पश्चिमोत्तरमुखस्थितस्य योधस्य पृष्ठदक्षिणस्थो भवति । दक्षिणपूर्वमुखस्थो वा संमुखः अतो वामसंमुख एकोपि अनेकघातं करोति । एवमन्यासु दिक्षु योधस्य संमुखपृष्ठदक्षिणगां ग्राह्याः ॥ १५ ॥ अथान्यभूबलमाह । दक्षिणांगगता इति । अस्मिन्भूबलाश्रिते योधशिरश्छेदेपि सति संमुख एव हंतुं धावति किं पुनः शस्त्रधारी जीवत्ति । ग्रहबलं प्राप्य न धावति संमुखे हेतुमिति ॥ १६ ॥ अथान्यत् । यस्येति । सुगमम् ॥ १७ ॥ इति नरपतिजयचर्यास्वरोदयटीकायां जयलक्ष्म्यां नरघातचक्रम् ॥

## अथ डिंभचक्रम् ॥



अथ डिंभचक्रम् ॥ डिंभचक्रे न्यसेद्भानि भानु-भाद्द्वित्रि मस्तके ॥ मुखे त्रीणि द्वयं स्कंधे एकैकं बाहुहस्तयोः ॥ १ ॥ पंच हृन्नाभिगुह्येष एकैकं षट् च जानुनि ॥ चरणाभ्यां तथैकैकं जन्मभं यत्र तत्फलम् ॥ २ ॥ शीर्षस्थे छत्रलाभश्च वक्रे मिष्टान्नभोजनम् ॥ स्कंधे धनी च बाहुभ्यां स्थानभ्रष्टो भवेन्नरः ॥ ३ ॥ पाणिभ्यां तस्करो लक्ष्मीर्हृद्यल्पायुश्च नाभिभे ॥ गुह्ये कामी भ्रमो जानौ स्तोकजीवी च पादयोः ॥ ४ ॥ इति डिंभचक्रम् ॥

अथ डिंभचक्रम् । डिंभचक्रे न्यसेदिति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ सुगमम् । इति डिंभचक्रम् ।

## अथ पक्षिचक्रम् ॥



अथ पक्षिचक्रम् ॥ चंचुमस्तककंठेषु हृदयोदरपत्सु च ॥ पक्षयोश्च त्रिकं चैव शशिभादि न्यसेद्बुधः ॥ १ ॥ चंचुस्थे नामभे मृत्युः शीर्षे कंठोदरे हृदि ॥ विजयः क्षेमलाभश्च भंगदं पादपक्षयोः ॥ २ ॥ इति पक्षिचक्रम् ॥

अथ पक्षिचक्रम् । चंचुमस्तककंठेष्विति ॥ १ ॥ २ ॥ इति पक्षिचक्रम् ।

॥ वर्गचक्रम् ॥

| ध्वांक्ष २ श. अज. | ध्वज ८ अ. ग. | धूम ५ क. मा. |
|---|---|---|
| गज ३ य. मृग | | सिं. ६ च. सिं. |
| रासभ १ प. मू. | वृष ७ त. सर्प | श्वा. ४ ट. श्वा. |

अथ वर्गचक्रम् ॥ अगरुडः कमार्जारश्चः सिंहष्टः शुनीसुतः ॥ तः सर्पो मूषकः पश्च यो मृगः शअजात्मजः ॥ १ ॥ वसु ८ भूत ५ रसा ६ वेदा ४ मुनि ७ चंद्रा १ त्रि ३ बाहवः २ ॥ पूर्वादि क्रमतो ज्ञेया वर्गोपरि दिगष्टके ॥ २ ॥ नाम्नि वर्गादिवर्णानामंकाः कार्याः पृथक्पृथक् ॥ पिंडिता वसुभिर्भक्ता शेषमायोध्वजादिकः ॥ ३ ॥ शेषसंख्या ध्वजो धूमः सिंहश्वावृषरासभाः ॥ गजध्वांक्षौ क्रमेणैव आया अष्टौ भवंति ते ॥ ४ ॥

अथ वर्गचक्रम् । अगरुड इति । पूर्वे अवर्गो गरुडः । आग्नेये कवर्गो बिडालः । दक्षिणे चवर्गः सिंहः । नैर्ऋत्ये टवर्गः श्वा । पश्चिमे तवर्गो नागः । वायव्ये पवर्गो मूषकः । उत्तरे यवर्गो गजः । ईशान्यां शवर्गश्छागः । एषां वर्गोपरि । अवर्गे अष्टौ ८ कवर्गे पंच ५ चवर्गे ६ टवर्गे ४ तवर्गे ७ पवर्गे १ यवर्गे ३ शवर्गे २ द्वयम् ॥ १ ॥ २ ॥ अथ कृत्यमाह। नाम्नि वर्गादीति । नाम्नि यस्य वर्गस्य वर्णा भवंति तस्य वर्णस्य येंका नाम्नि यावंतो वर्णस्वरास्तावत्संख्यया अंकाः पृथक्कार्याः पिंडिता एकत्र कार्याः । अष्टभिर्भक्ताः । शेषांकसंख्यया ध्वजादिको ग्राह्यः । यथोदाहरणम् । यथा रामभद्रो राजा महादेवनामा सेवकः। रामभद्रनाम्नि रेफस्य त्रीणि ३ मकारस्यैकं १ भस्य सप्त ७ रस्यापि त्रीणि ३ चत्वारः ४ स्वराः तत्संख्या ३२ सर्वसंख्या ४६ वसुभिर्भक्ते शेषं ६ सप्त ७ महादेवनाम्नि । मकारस्यैकं १ हस्य द्वयं २ दस्य सप्त ७ वस्य त्रीणि ३ स्वरसंख्या ३२ सर्वसंख्या ४५ । वसुशेषे ५ उभाभ्यां बलाबलं रामभद्रो राजा आयाधिकः महादेव आयोनः रामभद्रराजतो न लाभः तथा किंचिल्लाभकरः राजा महादेवात्सेवां प्राप्नोति । सेवाधिको राजा गजः सेवको वृषभः ॥३॥४॥

ध्वांक्षश्वारासभवृषगजसिंहध्वजा नलाः ॥ यथोत्तरबलाः सर्वे ज्ञातव्याः स्वरपारगैः ॥ ५ ॥ प्रभौ योधे पुरे देशे मित्रनारीगृहेषु च ॥ आयाधिके भवेल्लाभो न लाभो बलवार्जिते ॥ ६ ॥ इति वर्गचक्रम् ॥

ध्वांक्षात् श्वा बलवान् शुनो धूमः धूमाद् वृषः वृषभाद्गजः गजात् सिंहः सिंहाद्ध्वजः ध्वजात् खरः खरात् श्वा सौरभेयाद्गजो बली यथोत्तरबला एते इति व्याख्यातम् ॥ ५ ॥ अयं विचारः सर्वत्र देशे पुरे वैरिणि नायकामित्रे गृहे कलत्रे । यत्रायाधिकः स लभते हीनात् न्यूनाधिकतो यथोत्तरक्रमेण । यथा ध्वांक्षः धूमश्च अनयोरन्तरे किंचिन्न्यूनः ध्वांक्षाद्गजश्चतुर्थे बली । पादैकेन फलम् । ध्वांक्षस्य तदग्रे हीनफलमेव । एवं हीनाधिकविचारः ॥ ६ ॥ इति वर्गचक्रम् ॥

॥ आयचक्रम् ॥

| ध्वांक्ष ८।३० | ध्वज १।९ | धूम २।१० |
|---|---|---|
| गज ७।१५ | | सिंह ३।११ |
| खर ६।१४ | वृष ५।१३ | श्वा ४।१२ |

इति आयचक्रम् ॥

ध्वजो धूमोथ सिंहः श्वा सौरभेयः खरो गजः ॥ ध्वांक्षश्चेति क्रमेणैव आया अष्टौ द्विगष्टके ॥१॥ प्रतिपदाद्युदीयंते तिथिमुक्तिप्रमाणतः ॥ अहोरात्रे पुनः सर्वे याम-भुक्त्या भ्रमंति च ॥ २॥ आया वर्गा ष्टके ज्ञेया दिगष्टकक्रमेण च ॥ स्वोदये मृत्युदं ज्ञेयं सर्वकार्येषु सर्वदा ॥ ३ ॥

अथायचक्रम्। ध्वज इति। ध्वजादयोष्टावायाः पूर्वाद्यष्टसु दिक्षु ज्ञेयाः। एतेऽष्टौ प्रतिपदादिषु उदीयंते। प्रहरक्रमेणाष्टसु भ्रमंति ॥ १ ॥ २ ॥ ३ ॥ इत्यायचक्रम्।

अथ ग्रामचक्रम् ॥



अथ ग्रामचक्रम् ॥ ग्रामनक्षत्रमारभ्य कर्तुर्नक्षत्रगण्यते ॥ शिरः पंचार्थलाभं च मुखे त्रीण्यर्थनाशनम् ॥ १ ॥ बाणा हृदि धनं धान्यं द्वौ पादौ षट् दारिद्रता ॥ द्वौ गुह्ये भयपीडा च नाभौ चत्वारिसंपदम् ॥ २ ॥ पृष्ठैकं प्राणसंदेहो हस्ते चैकैकलाभदम् ॥ जन्मराशिस्थितो ग्रामस्त्रिषट्सप्तमगोपि वा ॥ ३ ॥ सिद्धार्थाश्च विनश्यंति आपत्यं च दिनेदिने ॥ ४ ॥ चतुर्थश्चाष्टमो यश्च द्वितीयो वा यदा भवेत् ॥ तत्र चोत्पद्यते द्रव्यं यत्र चैवं विनिर्दिशेत् ॥ ५ ॥ पंचमो नवमो ग्रामो द्वादशैकादशे दशे ॥ महालाभो भवेत्तस्य प्रभवेच्च चिरायुषम् ॥ ६ ॥ अन्यच्च ॥ पंचमो नवमो ग्रामो दशमैकादशस्थितः ॥ द्वितीये वसते नित्यं धनधान्यसमन्वितम् ॥ ७ ॥ चतुर्थश्चाष्टमो ग्रामो द्वादशेपि यदा भवेत् ॥ तत्र चोपार्जितं द्रव्यं तत्रैवापि विनश्यति ॥ ८ ॥ इति ग्रामचक्रम् ॥

अथ ग्रामचक्रम् । ग्रामनक्षत्रमिति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ इति ग्रामचक्रम् ।

## ॥ पट्टचक्रम् ॥

| कृ | आ | श्ले | उ | स्वा | ज्ये | उ | श | रे |
|---|---|---|---|---|---|---|---|---|
| रो | पु | म | ह | वि | मू | श्र | पू | अ |
| मृ | पु | पू | चि | अ | पू | ध | उ | भ |

अथ पट्टचक्रम् ॥ अथातः संप्रवक्ष्यामि विवाहे शोधयेद्बुधः ॥ रवितारादिगण्यंते चंद्रभादि च यो न्यसेत् ॥ १ ॥ त्रीणित्रीणि क्रमेणैव फलं तस्य शुभाशुभम् ॥ मध्ये मृत्युस्तथा लक्ष्मीरभिविघ्नं तथैव च ॥ सौभाग्यं विधवा वंध्या धनं पुत्रः क्रमेण च ॥ २ ॥ त्रिऋक्षमर्कादिकुलक्षयं च पूर्वार्धलक्ष्मीर्मृतिदुर्बलत्वम् ॥ सौभाग्यवंध्या विधवा च नारी पुत्रप्रसूतिर्धनपट्टकाले ॥ ३ ॥ इति विवाहपट्टचक्रम् ॥

अथ पट्टचक्रम् ॥ १ ॥ २ ॥ ३ ॥ इति पट्टचक्रम् ।

## अथ विरंचिचक्रम् ॥




अथ विरंचिचक्रम् ॥ अथातः संप्रवक्ष्यामि सद्यः प्रत्ययकारकम् ॥ विरंचिनाम विख्यातं यत्सुरैरपि दुर्लभम् ॥ १ ॥ कृत्तिका चोत्तराफाल्गुन्युत्तराषाढपूर्वकम् ॥ पंक्तियुक्त्या लिखे-

द्धानि क्रमेण नवकत्रये ॥ २ ॥ वेधोपि कर्णगस्तत्र कर्तव्यो नवकत्रये ॥ क्रूरसौम्यग्रहैर्विद्धं ज्ञेयं तस्य शुभाशुभम् ॥ ३ ॥ जन्म संपद्विपत्क्षेमप्रत्यारिः साधको वधः ॥ मैत्रातिमैत्रगास्तारा नवभेदा भवन्ति च ॥ ४ ॥

अथ विरंचिचक्रम्। अथात इति। कृत्तिकादिन्यासे चक्रलिखनक्रमो दर्शितः । क्रमोत्क्रम लिखनं चापि निरस्तम् । तत्र जन्मनक्षत्रात् नवकत्रयं लिखित्वा ग्रहं दत्त्वा विलोकयेत् । निर्वे धफलं वेधफलम् ॥ १ ॥ २ ॥ ३ ॥ ४ ॥

जन्मत्रयस्य वेधेन मृत्युः क्रूरग्रहेण च ॥ जयं लाभं शुभैस्तत्र मिश्रैर्मिश्रफलं विदुः ॥ ५ ॥ जन्मत्रये स्थितः सौरिः क्षेमभे राहुभूमिजौ ॥ मित्रातिमित्रगे सूर्ये जायते वधबन्धनम् ॥ ६ ॥ जन्मत्रये यदा जीवः क्षेमभे बुधभार्गवौ ॥ मित्रातिमित्रगे चंद्रे जयं लाभं सुखानि च ॥ ७ ॥ त्रिपञ्चसप्ततारासु रोगोत्पत्तिर्यदा तदा ॥ चिररोगो मृतिस्तासु क्रूरविद्धासु जायते ॥ ७ ॥ इति विरञ्चिचक्रम् ॥

जन्मत्रयस्येति । जन्मत्रयर्क्षे जन्मभं दशमभमेकोनविंशभम् एतज्जन्मत्रयं पापेन यदि विद्धं भवति तदा मृत्युवत्कष्टम् । सौम्यवेधेन शुभम् । पापशुभैर्विद्धं मिश्रं फलम् । क्रमोत्क्रमलिखनेन जन्मत्रयं पृथक् पंक्तिवेधमपि पृथग्भवति तेन हेतुना कृत्तिकादिलिखनक्रमेण जन्मनक्षत्रक्रमेणैतच्चक्रं यदि लिख्यते तदा जन्मसंपद्विपत्क्षेमादि त्रित्रितारकं पापशुभाभ्यांजन्मादित्रयं विद्धं भवति तत्फलं भवति॥५॥अमुमर्थं कविरेव फलयति।जन्मत्रये स्थितः सौरिरिति । यस्य कृत्तिकानक्षत्रं जन्मभं तत्र कृत्तिकास्थशनौ जन्मत्रये वेधः। उत्तराफाल्गुन्यां स्थिते जन्मत्रये वेधः। उत्तराषाढास्थितेन किमुपरिस्थितेन शनौ उत्तराषाढायामेव वेधः। विरिंचिचक्रे सम्मुखः एव वेधः । अत्र यदि संमुखवेधो न स्यात् तदा सर्वतोभद्रचक्रवेवमेव दर्शयेत्कविः। तेन किम् उपरिस्थितेन अधोर्द्धयं विद्धं भवति ॥ ६ ॥ तथा च पुनः फलयति। जन्मत्रये यदा जीव इति । सुगमम् ॥ ७ ॥ यस्य पुनरुत्तराषाढानक्षत्रं जन्मनक्षत्रं तस्मान्मासे चक्रेऽस्मिन् जन्म त्रयं विद्धं विद्यते । यस्य चित्रानक्षत्रं जन्मभं तस्य जन्मनक्षत्रं तस्य जन्मभत्रये गुरुः स्थित एव विद्यते वेधेन सर्वत्रोहयेत्॥ ८ ॥ इति जयलक्ष्म्यां विरंचिचक्रम्।

॥ भास्वच्चक्रम् ॥




अथ भास्वच्चक्रम् ॥ रेखात्रयं त्रिशूलाभं तिर्यग्रेखासमन्वितम् ॥ एकैका कोणगा तत्र मध्याधो भानुभादितः ॥ ॥ १ ॥ लिखेत्सव्यक्रमेणैव चक्रे भास्वति तारकाः ॥ अधस्त्रये भवेन्मृत्युश्चतुर्भिः कोणगैः शुभम् ॥ द्वादशा मध्यमाः प्रोक्ता ऊर्ध्वगा भस्मकारकाः ॥ २ ॥ इति भास्वच्चक्रम् ॥

भास्वच्चक्रम् रेखात्रयमिति ॥ १ ॥ २ ॥ इति भास्वच्चक्रम् ।

अथ श्येनचक्रम् ॥




अथ श्येनचक्रम् ॥ श्येनचक्रं समालिख्य पक्षिरूपं सुशोभनम् ॥ चंच्वग्रे भानुभं कृत्वा अष्टाविंशति विन्यसेत् ॥ १ ॥ ऋक्षैकं चंचुकोटिस्थं शीर्षे ग्रीवे त्रिकं त्रिकम् ॥ पादपृष्ठे चतुष्कं च उदरे नव भानि च ॥ २ ॥ नामऋक्षं स्थितं यस्य चंच्वग्रे वधबन्धनम् ॥ लाभो हृच्छीर्षग्रीवासु विरुद्धं पादपृष्ठयोः ॥ ३ ॥ इति श्येनचक्रम् ॥

अथ श्येनचक्रम् । श्येनचक्रम् ॥ १ ॥ २ ॥ ३ ॥ इति श्येनचक्रम् ।

## ॥ सम्वत्सरचक्रम् ॥



अथ संवत्सरचक्रम् ॥ चक्रं सांवत्सरं वक्ष्ये यदुक्तं कोशलागमे ॥ येन विज्ञायते सम्यग्वर्षेवर्षे शुभाशुभम् ॥ १ ॥ द्वादशारं लिखेच्चक्रं तत्र मेषादिराशयः ॥ संस्थाप्याः क्रमयोगेन मीनांताः सव्यमार्गगाः ॥ २ ॥ तत्र चक्रे समालेख्यं मेषादिराशिमार्गतः ॥ प्रभवाद्यब्दमेकैकं षष्टिः पंचप्रवर्तनैः ॥ ३ ॥ एवं राशौ स्थितं यत्र वत्सरं वर्तमानजम् ॥ तद्राशिस्थं फलं वीक्ष्य यत्किंचिद्वार्षिकं मतम् ॥ ४ ॥ चैत्रे या प्रतिपच्छुक्ला तस्याः काले प्रवेशजे ॥ एतद्विलोकयेच्चक्रं कालज्ञानविनिश्चितम् ॥ ५ ॥ तत्र सर्वान् ग्रहान्न्यस्य राशौ ये यत्र संस्थिताः वर्षराशेर्विचिंत्यास्ते रेखा-

स्थानगता ग्रहाः ॥ ६ ॥ वर्षोपचयगाः क्रूराः सौम्याश्छिद्रांत्यव-
र्जिताः ॥ ग्रहा रेखाप्रदा ज्ञेया मितमध्यग्रहे स्थिताः ॥ ७ ॥
स्वर्क्षे द्विघ्नं फलं दत्ते स्वोच्चे त्रिघ्नं तथैव च ॥ फलार्धं शत्रुगेहस्थो
नीचस्थो निष्फलो ग्रहः ॥८॥ एवं रेखाप्रमाणेन वर्षविंशोपका
मताः ॥ ज्ञातव्या दैशिकेंद्रेण वर्षमध्ये प्रयत्नतः ॥ ९ ॥ एवं वर्ष-
फलं प्रोक्तं चैत्रमासाद्यवासरात् ॥ आषाढे कार्त्तिकेप्येवं जलं
धान्यं विचिंतयेत् ॥ १० ॥ तत्र देशे पुरे ग्रामे फलं भिन्नं प्रदृ-
श्यते ॥ तस्मात्तत्कारणं वच्मि येन जानाति साधकः ॥ ११ ॥
देशादिराशिनाथस्य यो रेखादायको ग्रहः ॥ मित्रोदासीनशत्रुत्वे
फलं भिन्नं करोति सः ॥१२॥ मित्रं द्विघ्नं फलं दत्ते समः सौम्यं
करोति सः ॥ शत्रुः सर्वहरो ज्ञेयः सर्वदा कालचिंतकैः ॥१३॥
एवं विचार्य कर्तव्या कालविंशोपका बुधैः ॥ यथा जलं यथा
धान्यं स्वस्वकाले विचिंतयेत् ॥ १४ ॥ इति संवत्सरचक्रम् ॥

अथ संवत्सरचक्रम् । चक्रमिति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥९॥
॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ इति संवत्सरचक्रम् ।

॥ स्थानबलचक्रम् ॥




अथ स्थानबलचक्रम् ॥ स्थानचक्रं प्रवक्ष्यामि यदुक्तं लंपटागमे ॥ येन विज्ञायते सम्यक् स्थानेस्थाने शुभा-शुभम् ॥ १ ॥ स्थानपीडाप्रभावेण राज्ञः पीडा प्रजायते ॥ तस्मादपी-डिते स्थाने स्थातव्यं सर्वदा नृपैः ॥२॥ स्थाननामोद्भवं राशिं कृत्वा-दौ द्वादशारके ॥ राशिमंडलकं
न्यस्य वाममार्गेण संस्थितम् ॥ ३ ॥ तत्र तत्र ग्रहाः स्थाप्या
मासचंद्रश्च राशिगः ॥ तेषां विलोकनं वीक्ष्य स्थानराशिगतं

तथा ॥ ४ ॥ तृतीयैकादशे पादं द्विपादे व्योमबंधुगे ॥ त्रिकोणे त्र्यंघ्रि मूर्यस्ते पूर्णं पश्यंति खेचराः ॥ ५ ॥ शन्यर्कराहुकेत्वाराः पंच क्रूरग्रहा मताः ॥ शेषं चतुष्टयं सौम्यं मासेंदुश्चापि पंचमः ॥६॥ एवं पंच ग्रहाः क्रूराः पंच सौम्यास्तथैव च ॥ तेषां शुभाशुभां दृष्टिं कृत्वा स्थानबलं वदेत् ॥ ७ ॥ एकैकग्रहजा दृष्टिः पूर्णपादचतुष्टयम् ॥ पंचमे नवमे तेषां पादोना विंशतिर्भवेत् ॥ ८ ॥ तत्र विंशोपका ज्ञेयाः सौम्यक्रूरग्रहोद्भवाः ॥ एवं प्रसाधयेद्दृष्टिं युग्मखेट्टैः शुभाशुभम् ॥ ९ ॥ बह्वी स्तोकोनिता शेषा जायंते दृक्शुभाशुभाः ॥ ते च विंशोपकास्तस्य स्थानस्य बलनिर्णये ॥१०॥ एवं देशे पुरे ग्रामे बलं यत्र शुभाधिकम् ॥ तत्र स्थाने स्थितो राजा दुष्टारिष्टैर्न पीडयते ॥ ११ ॥ स्थानबलप्रभावेण स्वबलस्य बलादयः ॥ शत्रुसैन्यं क्षयं याति यावत्थाने शुभे स्थितेः ॥ १२ ॥ इति स्थानबलचक्रम् ॥

अथ स्थानबलचक्रम् । स्थानचक्रमिति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥ इति स्थानबलचक्रम् ।

## ॥ चंद्रशृंगोन्नतिचक्रम् ॥




अथ चंद्रशृंगोन्नतिचक्रम् ॥ मीनमेषोदये चंद्रः सततं दक्षिणोन्नतः ॥ उदगुन्नतशेषे स्यात् समस्तु वृषकुंभयोः ॥१॥ विड्वरं[1] स्यात्समे चंद्रे दुर्भिक्षं दक्षिणोन्नते ॥ ईतिरोगभयं शूले सुभिक्षं चोत्तरोन्नते ॥ २ ॥ नारदीयसंहितायाम् ॥ याम्यशृंगोन्नतश्चंद्रः शुभदो मीनमेषयोः ॥ सौम्यशृंगोन्नतः श्रेष्ठो नृयुग्मकरयोस्सदा ॥ ३ ॥ समोक्षघटयोः कार्किचा-

१ विग्रहः स्यात् इति पाठः।

पयोः शरसंनिभः ॥ चापवत् कीटहयोंस्तु शूलवत् तौलिक-न्ययोः ॥ ४ ॥ विपरीतोदितश्चेंदुर्दुर्भिक्षकलहप्रदः ॥ यथोक्तोऽभ्युदितश्चंद्रः प्रतिमासं सुभिक्षकृत् ॥ ५ ॥ आषाढद्वयमूलेंद्र-धिष्ण्यानां याम्यगः शशी ॥ अग्निप्रदग्धोपचरवनसर्पविनाश-कृत् ॥ ६ ॥ विशाखामैत्रयोर्याम्यपार्श्वगः पापकृच्छशी ॥ मध्यमः पितृदैवत्यो द्विदैवतं शुभोत्तरे ॥ ७ ॥ अप्राप्य पौष्ण भानूभुक्तषडृक्षाणि शशी शुभः ॥ मध्यगो द्वादशार्द्राया-मतीत्य नववासरान् ॥ ८ ॥ यमेंद्राहीशतोयेशमरुतश्चार्य-तारकाः ॥ ध्रुवादितिद्विदैवत्यमध्यमाश्च पराः समाः ॥ ९ ॥ याम्यशृंगोन्नतः श्रेष्ठः सौम्यशृंगोन्नतः शुभः ॥ शुक्ले पिपीलि-काकारे हानिर्वृद्धिर्यथार्थकृत् ॥ १० ॥ सुभिक्षकृद्विशालेंदुरवि-शालोर्थनाशनः ॥ अधोमुखः शस्त्रभयं कलहो दंडसन्निभे ॥११॥ कुजाद्यैर्निहते शृंगे मंडले वा यथाक्रमात् ॥ आयार्घवृष्टिनृपति-जनानां नाशकृच्छशी ॥ १२ ॥ इति शृंगोन्नतिचक्रम् ॥

अथ चंद्रशृङ्गोन्नतिः । मीनेति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥

एतानि सर्वचक्राणि ज्ञात्वा युद्धं समाचरेत् ॥ जयेदिह न संदेहः शक्रतुल्येऽपि वैरिणि ॥ १ ॥ इति चक्राध्याये चतुरशीतिचक्राणि समाप्तानि ॥ पंचावस्थास्वरूपं स्वरबलविमलं देहतत्त्वं प्रधानं राशौ भे वेधहृद्यं ग्रहवशफलदं स्थायियायिप्रधानम् ॥ वर्गाद्यैश्च वर्णैर्बलविधिसहितं मातृकाभेदरम्यं भूपादीनां जयार्थे नरपतिरकरोच्चक्रबंधप्रबंधम् ॥ २ ॥

इति श्रीनरपतिजयचर्यायां यामलीयस्वरोदये चक्र-बंधाख्यस्तृतीयोऽध्यायः ॥ ३ ॥

एतानीति ॥ १ ॥ पंचावस्थास्वरूपमिति ॥ २ ॥

इति नरपतिजयचर्यास्वरोदयटीकायां तृतीयोऽध्यायः ॥ ३ ॥

चतुष्कोणं चतुर्द्वारं वीरभूमिं लिखेद्बुधः ॥ वायव्याग्नेयकोणे तु रेखाया द्विदलान्वितम् ॥ १ ॥ बहुना वीक्ष्यमाणेन नात्र तेषां प्रयोजनम् ॥ कृत्तिकादि लिखेद्भानि सप्तसप्तक्रमेण च ॥ २ ॥ चतुर्दिक्मध्यनक्षत्रं द्वारं तत्र नियोजयेत् ॥ कोणे त्रयं त्रयं विज्ञेया ऋक्षगता ग्रहाः ॥ ३ ॥ विचिंत्य केतवः पञ्च यत्र यत्र व्यवस्थिताः ॥ पूर्वद्वारि शिवो याम्ये हस्तः पश्चाच्च वारुणम् ॥ ४ ॥ उत्तरद्वार्यहिर्बुध्न्यो मध्यस्तंभचतुष्टयम् ॥ पूर्वादिदलमध्यस्थे मेषाद्राशीन्न्यसेत्क्रमात् ॥५॥ वर्गाष्टके क्रमाद्देयं नंदाद्यास्तिथयस्तथा॥ सिंहादिषट्कके क्षेत्रे भानोः कुंभादिषड्विधौ ॥ ६ ॥ सूर्याचंद्रमसोर्मध्ये कालसूत्रमुदाहृतम् ॥ आग्नेयाद्वातपर्यंतं परिघाख्यं सदा भवेत् ॥७॥ शनिसूर्यदिने मध्ये कालः पूर्वदिशि स्थितः ॥ शुक्रेंदु बाह्यतो याम्ये मध्ये जीवारपश्चिमे ॥८॥ बुधे बाह्योत्तरे कालः कालभेद उदाहृतः ॥ यामार्द्धे सूर्यदिवसे पूर्वे पश्चात्तु वायुगः ॥ ९ ॥ ततो दक्षिणमायाति ऐशान्यात्पश्चिमे ततः ॥ आग्नेय्यामुत्तरे भागे ततो नैर्ऋत्यगो रवेः ॥ १० ॥ चन्द्रे वाते कुजे याम्ये बुधे रौद्रे गुरौ परे ॥ दहने भार्गवे देयं शनिवारे तथोत्तरे ॥११॥ स्वान्हि यामार्द्धया भुक्त्या स्वस्थानाद्रविवद्भ्रमः ॥ कालकेतुश्च कालाग्निर्धूमकेतुः शिखी तथा ॥ १२ ॥ विनाशकश्च पञ्चैते विषमा ब्रह्मणः सुताः ॥ तिथिभे नवमे चैव तृतीये कृतिभे तथा ॥ त्रयोविंशतिभे चैव सूर्यभात्क्रमशः स्थितः ॥१३॥ इति वीरभूमिः ॥

एतावत्पर्यन्तं सर्वतोभद्रादीनि चक्राणि लिखित्वा भूबलानि लिख्यन्ते । भूबलप्रकरणे । अथ वीरभूमिः । चतुष्कोणमिति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ ॥ १० ॥ ११ ॥ १२ ॥ १३ ॥ इति वीरभूमिः ॥

॥ व्योमरामहता नाड्यो रामाष्टिविहृता तिथिः ॥ तिथिस्तात्कालिकी ज्ञेया वर्तमानतिथिक्रमात् ॥ १ ॥ उदिते

स्वल्पलाभः स्याद्भ्रमिते बहुलाभकृत् ॥ भ्रामिते जयमाप्नोति संध्याहानिरस्तेक्षयः ॥ २ ॥ तात्कालिकी तिथिर्यत्र तत्रोदयति योगिनी ॥ सा सदा शुभदा वामे यात्राद्यूते रणांगणे ॥३॥ इंद्रा १ग्नि २ रंतको ३ रक्षो४ऽम्बु५मरु६द्धनद७शूलिनी ॥ ८ दिक्षु भ्रमति तत्काले गिरिजास्वाष्टसु तिथौ ॥ ४ ॥ रविः कुजो गुरुश्चांद्रिः शुक्रसौरींदुराहवः ॥ पूर्वाद्याः प्रहरार्धेन तुर्येतुर्ये दिशि भ्रमः ॥ ५ ॥ शुक्रवारक्रमादह्नि रात्रौ व्यत्ययतो भ्रमः ॥ कृष्णपक्षे गतिर्वामा जयदः पृष्ठदक्षिणे ॥ ६ ॥ यस्यैवं राहुमाप्नोति जयं विषमसंगरे ॥ नैवात्र बलवान्कालो भूबलोनात्र योगिनी ॥ ७ ॥ एतस्य बलमाश्रित्य दुर्गभंगस्य वांछया ॥ प्रस्थितः क्षणमात्रेण दुर्गं गृह्णाति दुर्जयम् ॥ दुर्गस्था दुर्जया ये च न ते स्युः सम्मुखास्तदा ॥ ८ ॥ कालर्क्षतिथिभिर्घातो यत्र योधस्य वर्तते ॥ प्रवेशं कारयेत्तत्र दिशि यस्यां शुभग्रहाः ॥ ९ ॥ दक्षपृष्ठगताः पापा क्षतदा न भवंति हि ॥ सम्मुखा वामभागस्था भवंति क्षतदायकाः ॥ १० ॥ क्रूरास्तु दक्षिणे यस्य शोभना वामभागगाः ॥ तदा शूरो भवेद्योधो विपरीते तु भंगदाः ॥ ११ ॥ स्वमित्रसमशत्रूणां गृहे पापास्तु घातदाः॥ अर्ध २ पादोन ३ संपूर्ण ४ द्विगुणं ८ त्रिघ्न १२ वक्रिभे ॥ १२ ॥

द्वितीयश्चलक्षेत्रम् । अथ वीरभूम्यंगी तात्कालिकी तिथिः । व्योमेति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥ ११ ॥ १२ ॥

चैत्रादयस्त्रिगुणिता मासास्तत्तिथिसंयुताः ॥ नवभक्ताः क्रमाज्ज्ञेया शेषा यात्रा नवैव तु॥ १३॥ निष्फला १ राक्षसी २ चैव साधारणी३ च हारिणी ४॥ तारणी ५ कालयुक्ता ६ च महाबलवती ७ तथा ॥१४॥ ऐंद्री ८ ऐरावती ९ चेति क्रमात्तत्फलमुच्यते ॥ निष्फला कार्यहरिणी राक्षसी व्याधिदायिनी ॥ साधारणी सत्फलदा हारिणी मृत्युदायिनी ॥ १५॥ तारण्यां सफलं कार्यं कालयुक्ता च

कालदा ॥ महाबलायां लभते राज्यमैंद्री च हानिदा ॥ ऐरावती च सफला गतस्य सफला क्रिया ॥ १६ ॥ इति यात्रा ॥

अथ यात्रा । चैत्रादय इति ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥ इति यात्राफलानि ।

॥ओड्रभूमी १ ॥

| ई चैत्र मार्ग | पू श्रावण | आ आषाढ फाल्गुन |
|---|---|---|
| उ भाद्र पद | | कार्तिक द |
| वा वैशाख पौष | आश्विन प | ज्येष्ठ माघ नै |

अथातः संप्रवक्ष्यामि भूबलानि समासतः ॥ चतुर्विधेपि संग्रामे येन स्याद्विजयी नृपः ॥ १ ॥ चैत्राद्या ईशवायव्ये रक्षोग्नींद्रधनाधिपे ॥ वारुण्यां दक्षिणे रुद्रवायुरक्षस्तथानिले ॥ २ ॥ उड्डीभूमिरियं ख्याता प्रोक्ता या ब्रह्मयामले ॥ चतुर्विधेपि संग्रामे जयदा पृष्ठदक्षिणे ॥ ३ ॥ इति ओड्डीभूमिः ॥ १ ॥

अथ भूबलानि लिख्यंते । अथात इति । इयमोड्डी भूमिरोडदेशे बलवती अन्यदेशे निर्बला वाच्या । अत्र देशे अन्याया अलाभे ग्राह्या । अथवा अनया सह सङ्करो भवति तदा न त्याज्या । सुगमा इयम् ॥ १ ॥ २ ॥ ३ ॥ इति ओड्डी भूमिः ।

जालंधरी २

| ई वैशाख पौष | पू कार्तिक | आ ज्येष्ठ मार्ग. |
|---|---|---|
| आश्विन उ | | श्रावण द |
| वा चैत्र माघ | भाद्र प | आषाढ फाल्गुन नै |

वायुरुद्राग्निनैर्ऋत्ये याम्यतोयोत्तराध्वजे ॥ पूर्वदिशि ॥ अग्निरुद्रानिले रक्षे चैत्रादौ भ्रमणं भवेत् ॥ १ ॥ एवं मासोदयो यत्र तत्रस्था पृष्ठदक्षिणे ॥ इयं जालंधरी भूमिः संग्रामे जयदा भवेत् ॥ २ ॥ इति जालंधरी भूमिः ॥ २ ॥

अथ जालन्धरीभूमिः । वायुरुद्राग्नीति इयमपि चैत्रादौ मासभूमिः ॥ १ ॥ जालन्धरी जालन्धरदेशे एकैव प्रबला जयदा । अन्यदेशे मिलिता अन्यया सह जयदा । चक्रे द्रष्टव्यम् ॥ २ ॥ इति जालंधरी भूमिः ।

## पूर्णा भूमिः ३

| | पू ४।१६ | |
|---|---|---|
| उ ८।२८ | | १२।२४ द |
| | २०।३२ प | |

पूर्णाख्यां कथयिष्यामि पूर्णपीठाद्विनिर्गताम् ॥ द्वंद्वयुद्धेथवा दुर्गे यामार्धं भुक्तिरत्र च ॥ १ ॥ पूर्वोत्तरे यमे शक्रे तोयांतकोत्तरे जले ॥ यथा दिने तथा रात्रौ पृष्ठदक्षिणगो जयेत् ॥ २ ॥ इति पूर्णा भूमिः॥३॥

पूर्णाख्यामिति ॥ १ ॥ पूर्वोत्तरे इति । पूउपदपूउपदिवारात्रौ च । अर्द्धप्रहर एव भ्रमति प्रथमं पूर्वत एव तिष्ठति तदनन्तरं वामावर्तेन उत्तरपश्चिमदक्षिणेषु पुनः प्राक् उत्तरादिक्रमेण भ्रमति । एवं रात्रौ एतावता यद्दिने यत्प्रहरप्रमाणं तदर्धं प्राचो द्वितीयमुत्तरे एवं तृतीययामार्द्धं पश्चिमे चतुर्थं दक्षिणे पंचमंपुनः प्राचिषष्ठमुत्तरे सप्तमं पश्चिमेअष्टमं दक्षिणे । एवं दिनार्द्धप्रहरैः पूर्णाख्या नाम भ्रमति । अत एवं सामान्यार्द्धप्रहरप्रमाणार्द्धं प्रथमं प्राचिद्वितीयमुत्तरदिशि अंष्ट कृत्वा रात्रौ भ्रमति । पूर्णाख्या नाम पूर्णपीठाद्विनिर्गता अस्माकं मतम् । अर्द्धप्रहरमेव पूर्णाख्या ॥ २ ॥ इति पूर्णाख्या भूमिः ।

## कामाख्या ४

| ई ३२ | पू मे. सिं. ध. ४ | आ ८ |
|---|---|---|
| क. मी. उ वृ. २८ | | वृ.क.म. द १२ |
| वा २४ | मि. तु. कुं. २० प | नै |

इंद्रे यमे जले सौम्ये मेषादिभ्रमणं त्रयम् ॥ रविसंक्रांतितो मासा ज्ञातव्या यत्र संस्थिताः ॥ १ ॥ तत्स्थानाद्भ्रमणं सव्यं चतुर्नाडीदिगष्टके ॥ पृष्ठदक्षिणगा युद्धे कामाख्यारिक्षयंकरी ॥ २ ॥ इति कामाख्या भूमिः॥ ४ ॥

इंद्रे इति ॥ १ ॥ तत्स्थानादिति । मेषादिचतुर्दिक्षु पूर्वदक्षिणपश्चिमोत्तरदिक्षु स्थितेषु भवति । मेषः पूर्वे वृषो दक्षिणे मिथुनं पश्चिमे कर्कट उत्तरे । अजवृषमिथुनकुलीराः पंचमनवमैः सहेंद्राद्या इति यद्दिनेषु एषु-राशिषु संक्रमः तद्दिनाच्चतुर्घटीप्रमाणेन वामावर्तः । तद्व्यतिरिक्तो भ्रमति । कामाख्या नाम भूमिः । तत्र मेषे रविः प्रथमश्चतुर्नाडीपर्यंतं प्राच्यां तिष्ठति तत ऐशान्यां चतुर्नाडीभिः एवम् उत्तरे वायव्ये पश्चिमेत्यादिक्रमेणाष्टदिक्षु दिवारात्रौ परिभ्रमति ।

तथा कर्के रविर्यदा तद्दिनाच्चतुर्नाडीभिरुत्तरे ततो वायव्ये ततः पश्चिमे नैर्ऋत्ये दक्षिणे इत्यादि क्रमेण स्वदिशः सकाशात् सव्यं भ्रमणं कामाख्या भवति। इयं कामाख्या पृष्ठदक्षिणगा युद्धे कामाख्या विजयप्रदा ॥ २ ॥ इति कामाख्या भूमिः।

## कोलापुरी ५

| ई | पू<br>चै. श्रा.<br>मा. ८ | आ |
|---|---|---|
| उ वै. भा.<br>पौष<br>१६ | | आ. का.<br>फा. द<br>३२ |
| वा | ज्ये. आ.<br>मा. २४<br>प | नै |

शक्रोत्तरे जले याम्ये चैत्रादौ भ्रमणत्रयम् ॥ मासोदयगता यत्र तस्माच्च घटिका क्रमात् ॥ १ ॥ तत्राष्टनाडिकाभुक्तिरुदयश्च पुनः पुनः ॥ इयं कोलापुरी भूमिः पृष्ठदक्षिणगा शुभा ॥ २ ॥ इति कोलापुरी भूमिः ॥ ५ ॥

शक्रोत्तरेति। प्रागुत्तरपश्चिमयाम्यदिक्षु चैत्रादिमासानां भ्रमणत्रयेण त्रित्रिमासाश्चतुर्दिक्षु पतंति तत्र चैत्रः प्राग्दिशि वैशाख उत्तरे ज्येष्ठः पश्चिमे आषाढो दक्षिणे श्रावणः पुनः पूर्वे भाद्र उत्तर इत्यादिक्रमेण चैत्रादिमासानां भ्रमणं भवति। तत्र यस्यां दिशि यस्य मासस्योदयस्तस्मात्स्थानात् घटिकाक्रमेण उदयः ॥ १ ॥ कतिघटिकास्तानाह। तत्राष्टनाडिकेति। तत्र चैत्रे मासि चैत्रमासस्य प्राचि उदयः भूवलं तु तन्मासि अष्टघटीभिः प्राच्यां तदनन्तरं पुनरष्टघटीनामुपरि चैत्रमासस्य उत्तरे उदयः तदुपरि पश्चिमे उदयः तदुपरि दक्षिणे तदुपरि पुनः प्राचि एवं पुनः पुनः तस्याष्टौ उदया भवंति दिनेदिने मासं प्रति अष्टघटीभिरित्युपलक्षणं प्रहरप्रमाणेन भ्रमः। इयं कोलापुरे ख्याता ॥ २ ॥ इति कोलापुरी भूमिः।

## एकवीरा ६

| ई चै<br>मार्ग | पू<br>भा. | ज्ये. आ<br>मा. |
|---|---|---|
| आ.<br>उ फा. | | का द |
| आश्वि.<br>वा | वैशा.<br>पौष<br>प | आ.<br>नै |

रुद्रे जलाग्नि सौम्ये च नैर्ऋत्यैंद्रानिले यमे ॥ ईशेंबु पावके सौम्ये चैत्रादिभ्रमणं भवेत् ॥ १ ॥ एकवीरा महाभूमिः प्रोक्ता या चादियामिले ॥ पृष्ठदक्षिणगा युद्धे जयदा नात्र संशयः ॥ २ ॥ इति एकवीरा भूमिः ॥ ६ ॥

रुद्रे जलाग्निरिति। रुद्र इति ईशानकोणादारभ्य चतुश्चतुर्विदिग्दिग्भ्यश्चैत्रादिमासैरेकवीराया भूमेर्भ्रमणं भवति। तत्र प्रथमः ईशान्यां विदिशि एकवीरा तिष्ठति। ततईशानाद्दिशि पश्चि

---

१ तत्र द्विनाडिकाभूक्तिरिति-तथा च-उदयानाडिकाभुक्तिरित्यपि पाठः।

मायां वैशाखे तिष्ठति । ततो विदिशि आग्नेये ज्येष्ठे मासि तिष्ठति । ततो दिश्युत्तरस्यामाषाढे तिष्ठति । एवं विदिशि स्थित्वा दिशि गच्छति । एवं क्रमेण चैत्रादिद्वादशमासैरेकवीरा भूमिः ॥ १ ॥ २ ॥ इत्येकवीरा भूमिः ।

## सिलिंध्रा ७

| | | |
|---|---|---|
| | पू चै. श्रा. मा. | |
| वै. उ भा. पौ. | | आषा. का. द. फा. |
| | आश्वि. ज्ये. मा. प | |

चैत्रादि पूर्वतो वामं भ्रमन् काष्ठाचतुष्टये ॥ सिलिंध्राख्या महाभूमिर्जयदा पृष्ठदक्षिणे ॥ १ ॥ बुधश्च मंगलः सौरिर्विधुर्गुरुरिति क्रमात् ॥ सर्वे ग्रहा एवमेव रविशुक्रौ च पश्चिमे ॥२॥ इति यामले सिलिंध्रा भूमिः॥७॥

चैत्रादीति । शिलींध्रा नाम भूमिः चैत्रे मासि पूर्वे तिष्ठति मासम् । ततो वामक्रमेण वैशाखे मासि उत्तरे तिष्ठति । ज्येष्ठे पश्चिमे आषाढे दक्षिणे श्रावणे पुनः पूर्वे एवं क्रमेण चैत्रादिभ्रमणं सिलींध्राया भवति प्रहरस्थित्या मासक्रमात् ॥ १ ॥ २ ॥ इतिसिलींध्रा भूमिः।

## महामारी ८

| | | |
|---|---|---|
| ई वृ ३० मि २७॥ | पू मे २॥ | आ मी ५ कुं ७॥ |
| क. उ २५ | | म द १० |
| सिं. २२॥ क २० वा | तुः १७॥ प | ध १२॥ वृ १५ नै |

## क्षेत्रपाली ९

| | | |
|---|---|---|
| | पू चै. श्रा. मार्ग. ५ | |
| वै. भा. उ पौष ४।८ | | आ. का. फा. द २ ६ |
| | ज्ये. आ. मा ३ ७ प | |

चक्रे द्वादशपत्राख्ये मेषाद्या वाममार्गतः ॥ यत्रस्थोर्कस्ततः सव्ये भुक्तिः सार्द्धघटीद्वयम् ॥ १ ॥ महामारी समाख्याता भूबलानां बलोत्कटा ॥ समरे जयदा प्रोक्ता पृष्ठदक्षिणसंस्थिता ॥ इति महामारी भूमिः ॥ ८ ॥

चक्रे द्वादशपत्राख्ये इति ॥ १ ॥ २ ॥ इति महामारी भूमिः ।

विलोमाः पूर्वतो मासाश्चैत्राद्या दिक्चतुष्टये ॥ प्रहराः सव्यमार्गेण मासस्थानाद्धिगण्यते ॥ १ ॥ चातुरंगे कत्रौ कोटे जयदा पृष्ठदक्षिणे ॥ क्षेत्रपाली महाभूमिर्भूबलानां बलोत्तमा ॥ २ ॥ यद्बलाद्बलयुक्तानि भूबलान्यपराणि हि ॥ एतद्बलेन रहिता वृथा चतुरशीतयः ॥ ३ ॥ इति क्षेत्रपाली भूमिः ॥ ९ ॥

विलोमा इति। पूर्वदिशमारभ्य विलोमेन वामावर्तेन पूर्वोत्तरपश्चिमदक्षिणपूर्वोत्तरादिचतुष्टये क्षेत्रपाल्या भूमेर्भ्रमणत्रयं भवति। मासं तत्रैव तिष्ठति पुनर्दक्षिणक्रमेण मासस्थानात्प्रहरक्रमेण दिशि दिशि याति। उदयात्प्रहरं यावत् मासस्थाने तिष्ठति प्रहरादुपरि प्रहरं यावद्दक्षिणस्यां तिष्ठति। ततःप्रहरं पश्चिमायां ततःप्रहरत्रयोपरि संध्यांतमुत्तरस्यां तिष्ठति। एवं सव्यमार्गेण क्षेत्रपाली भ्रमति ॥ १ ॥ सामर्थ्यमाह। चातुरंगेति। २ ॥ यद्बलादिति। सिलींध्राक्षेत्रपाली तुल्या। परंतु प्रहरं यावत् सूर्योदयात् क्षेत्रपाली सिलींध्रा एकत्रैव तिष्ठति द्विभूमेर्बलं प्राप्यते पुनःपंचमे प्रहरे प्रहरं यावत्क्षेत्रपाल्या सह संयोगः। एतंज्जातं क्षेत्रपालीप्रहरबलाद्या यथा प्रहरेण जयं ददाति तथा मासस्थानम् इदं परिच्छिन्नम् ॥ ३ ॥ इति क्षेत्रपाली भूमिः।

## वंशजा १०

| ई आग्ने. | पू आ. फा. | चै. आ मार्ग |
|---|---|---|
| उ वैशा. पौष | | भा. द |
| श्रा. वा | का. प | ज्येष्ठ माघ नै |

पावके सौम्यनैर्ऋत्य इन्द्रवायुयमे हरे ॥ जलाग्न्युत्तरनैर्ऋत्ये पूर्वे चैत्रादिमासतः ॥ १० ॥ वंशजेयं महाभूमिर्दैत्यवंशजयंकरी ॥ दक्षपृष्ठगता युद्धे जयदा नात्र संशयः ॥२॥ इति स्वरोदये वंशजा भूमिः ॥१०॥

पावकेति ॥ १ ॥ वंशजेयमिति। वंशजां तु पुरस्कृत्य वंशजैकवीराभूम्योर्बलं प्राप्यते। एकत्र तत्त्वैकवीरां पुरस्कृत्य। तथा एकवीरा ईशानकोणे चेद्भवति वंशजा तु आग्नेयकोणात् चैत्रे मासि वंशजा आग्नेये एकवीरा ईशान्यां तत्रोभयोर्बलमेकत्र। वंशजा आग्नेये पृष्ठस्था यदि क्रियते तत्रैकवीरा दक्षिणे पतति एकवीरा चेत्पृष्ठे क्रियते वंशजा वामे पतति। अथ वैशाखे एकवीरा पश्चिमे वंशजा उत्तरे तथाप्येकवीरायां पृष्ठस्थायां वंशजा वामे एव पतति। एवं वंशजायां पृष्ठस्थायामेकवीरा दक्षिणे पतति। अतो वंशजाया एव पुरस्कारेण द्विभूमिबलं प्राप्यते एवमूहनीयम्। वंशजायाश्चक्रमेकवीरायामेव आग्नेशतो जानीयात् ॥ ॥ २ ॥ इति वंशजा भूमिः।

रुद्रभू. ११

| ई आषा. | पू चै. मार्ग | आ भा. |
|---|---|---|
| आ. उ फा. | | ज्ये. पौ. द |
| वैशा. वा पौष | श्रा. मा. प | का. नै |

दानवानां वधार्थाय रुद्रो रुद्रेण चिंतितः ॥ तं रुद्रं च प्रवक्ष्यामि जयाय विजयार्थिनानाम् ॥ १ ॥ दशदोर्दंडपञ्चास्यं त्रिनेत्रं च जटाधरम् ॥ महाप्रेतासनारूढं त्रिशूलायुधधारिणम् ॥ २ ॥ ऐन्द्रे वायौ यमे रुद्रे वारुणेग्नीन्दुराक्षसे ॥ प्राच्यन्तके जले सौम्ये चैत्रमासाद्ययं क्रमः ॥३॥ दिनं निनार्धयामं च प्रहरार्धं तथाग्रतः ॥ एवं भुक्तिप्रमाणेन पृष्ठदक्षिणगो जयी ॥ ४ ॥ इति स्वरोदये रुद्रभूमिः ॥ ११ ॥

दानवानामिति ॥ १ ॥ दशदोर्दंडेति । दशदोर्दंडदशबाहुयुक्तं पंचास्यं पंचवक्त्रमित्यादिलक्षणीयं रुद्रेण महादेवेन चिंतितः । ध्यानस्थितकृतः ॥ २ ॥ स तु चैत्रमासक्रमेण ऐंद्रे प्राचि वायौ वायव्यकोणे यमे दक्षिणेत्यादिश्लोकोक्तदिक्षु परिभ्रमःस्थितःजयार्थिनां जयं दातुं तत्र मासिमासि एवं क्रमेण ॥ ३ ॥ तदग्रतः मासोदयस्थानाद्दिनान्ते द्वितीयदिशि रात्रौ याति पुनर्दिनार्धं तत्रैव तिष्ठति अपरार्धे द्वितीयदिशि याति । ततःपूर्वरात्रे तृतीयदिशं अर्धरात्रोपरि चतुर्थदिशं दिनं दिनार्धं व्याख्यातम् । यामं चेति । स एव रुद्रो मासोदयस्थानात्प्रहरं तत्रैव स्थित्वा द्वितीयप्रहरे द्वितीयदिशं याति तृतीयेन तृतीयां दिशं चतुर्थप्रहरेण चतुर्थदिशमित्यादिक्रमेण अष्टौ दिशो भुंक्ते । प्रहरार्धमिति । मासोदयस्थाने प्रहरार्धं स्थित्वा द्वितीयप्रहरार्धे द्वितीयदिशं याति तृतीयप्रहरार्धे तृतीयां दिशमित्यादिक्रमेण षोडशभिरर्धप्रहरैर्मासस्थानाच्चतुश्चतुःकृत्वा दिशिदिशि परिभ्रमति । एतावता दिनं दिनार्धमित्यादिस्थितिक्रमेण यथोत्तरबलः कालेन भवति । यथा दिनार्धेन फलं ददाति । तथा सकलदिनेन । यथा दिनार्धोपरि तां त्यक्त्वा अन्यां दिशं गतः एवं दिनार्धात्प्रहराख्यो बलवान् प्रहराख्यादर्धप्रहराख्यो रुद्रो बली । मासरुद्रो दिनरुद्रः अर्धदिनरुद्रः यामरुद्रोर्धयाम रुद्रःपंचानामधिकफलं ग्राह्यम् । रुद्रभूमिःश्रेष्ठाभूः । अथान्यत् । क्षेत्रपाली भूःरुद्रभूः । अनयोरेकस्थानाद्ग्रामं परिभ्रमः तृतीयप्रहरे वामदक्षिणभ्रमणाभ्यां पश्चिमायां स्थितेभवतः । तद्बलेन जयी भवति । क्षेत्रपाली चतुर्थप्रहरेण उत्तरस्यां दिनार्धरुद्रेण सह संगता भवति । तत्र उभयोर्बलं ग्राह्यम् । अथवा । चैत्रश्रावणमार्गमासेषु क्षेत्रपाली शिलीध्रां कोलाख्या रुद्रभूः एकत्र तिष्ठति । यत आश्विने रुद्रभूः ज्येष्ठाश्विनमासेषु क्षेत्रपाली शिलींध्रया कोलाख्यचा च सह सा. माघे ज्येष्ठे च रुद्रया । किंच पूर्णा च क्षेत्रपालीव तिष्ठति प्रहरार्धेन मिलति द्वितीयार्धेन उत्तरे तृतीयेन पश्चिमे क्षेत्रपाल्या-

प्रहरेण समं मिलति । क्षेत्रपाली प्रहरे दक्षिणावर्तेन भ्रमति एवं विचार्यमाणेन कामाख्या क्षेत्रपाली शिलींध्रा कोला रुद्रभूमिः आसां पंचानामेकत्र मिलनं भवति । मासस्थित्या प्रहरप्रहराभ्यां च । पंचानामासां च बलं प्राप्य युद्धाय तिष्ठेत् । इति रुद्रभूमिप्रसंगेन विचार्य लिखितम् ॥ ४ ॥ इति रुद्रभूमिः ।

## कालानलीभूमिः १२




सप्तरेखांकिते चक्रे रुद्रादौ मासभादितः ॥ सव्यमार्गेण भं दत्त्वा चाष्टाविंशतिसंख्यया ॥ १ ॥ मासर्क्षदिनभं ज्ञात्वा तस्मात्तात्कालिकं च भम् ॥ रेखायामुदयाद्भुक्तिः सपादघटिकाद्वयम् ॥ ॥ २ ॥ मासर्क्षं मासनामर्क्षं दिने दुर्दिनभं तथा ॥ नाडिकाभ्रमणा यत्र तत्र तत्कालसंज्ञकः ॥ ३ ॥

मासेंदोर्मासभानुः स्याद्दिनेंदोर्दिनभास्करः ॥ घटिकेंदोर्घटीभानुस्त्रिपञ्चर्क्षे सदा भवेत् ॥ ४ ॥ दक्षपृष्ठे रविं कुर्यात् वामसम्मुखे निशाकरम् ॥ जयेदिह न सन्देह एकोपि शतमाहवे ॥ ५ ॥ शक्तिरूपः स्थितश्चन्द्रः कालरूपी दिवाकरः ॥ चन्द्रसूर्यान्तराले च कालरेखाभिधीयते ॥ ६ ॥ कवौ कोटे तथा द्वंद्वे चातुरंगे महाहवे लंघनीया न सा योधैः कालरेखार्कसंमुखी ॥ ७ ॥ इति स्वरोदये कालानलभूमि ॥ १२ ॥

सप्तरेखांकितेति । सप्तशलाकाचक्र सप्तरेखाचक्रं लिखित्वा मासमं जानीयात् । रुद्रकोणे स्थित्वा सप्तसप्त कृत्वा नक्षत्राणि लिखेत् भं नक्षत्रमुच्यते । तत्र चित्रानक्षत्रं चैत्रस्य वैशाखस्य विशाखा नक्षत्रं ज्येष्ठस्य ज्येष्ठा आषाढस्य पूर्वाषाढा श्रावणस्य श्रवण इत्यादि ज्ञेयम् । एवं मासनक्षत्रं रुद्रकोणरेखायां दत्त्वा सप्तसप्त कृत्वा साभिजिति लिखेत् । अथ कृत्तिकादि तत्र सप्तशलाकचक्रे किमिति न लिखितम् । तत्राह । आचार्येण रुद्राद्यं मासभादितो लिखेत् ॥ १ ॥ मासर्क्षादिति ॥ २ ॥ ३ ॥ मासर्क्षे सप्तशलाकाचक्रे दिनभं कस्यां दिशि वर्तते । दिनतोदयात्तात्कालिक नक्षत्रं कस्यां दिशि एवं नक्षत्रत्रितयं ज्ञात्वा रविज्ञानमाह । मासेंदोरिति मासर्क्षं चेदीशाने तदा मासचंद्रात्पंचदशं नक्षत्रं रेखायां स्थितं जानीयात् । यथा चैत्रे मासि

चित्रा नक्षत्रात्पंचदशमं रेवती तत्र रविः । अनेन मासचन्द्ररवी जातौ पूर्वपश्चिमे आद्यरेखायां प्राक् चन्द्रः पश्चाद्रविः युद्धदिने कृत्तिका यदि सा कृत्तिका पश्चिमे चतुर्थनाड्यां स्थिता विघटेत् । तत्र दिनचन्द्रः पश्चिमे कृत्तिकास्थानात्पंचदशनक्षत्रे अनुराधायां रविः दिनरविः प्राचि चतुर्थनाड्यां कृत्तिकायां युद्धसमये गतघटिका दश तदा तदा सपादघटिका दश तदा सपादघटिकाद्वयविचारेण नवघटिकाभिः कृत्तिकातश्चत्वारि नक्षत्राणि भुक्तानि पंचमनक्षत्रे तत्कालचन्द्रः तत्कालचन्द्रःदक्षिण आद्यरेखायां रविः । अस्य व्याख्यानस्य चक्रमिदं सप्तमम् ॥ ४ ॥ अथ भूबलमाह । दक्षपृष्ठे रविं कुर्यादिति । श्लोकार्थेन चैत्रे मासि अस्मिन्सप्तशलाकाचक्रे दिनचन्द्रतत्कालचन्द्राभ्यां दिनतत्कालरवी पूर्वदक्षिणे तेन किं आग्नेयदिशि पृष्ठस्थं च प्राक् रविद्वयं कृत्वा वामेस्य चंद्रद्वयं भवति । अधिकबलं प्राप्य जयो भवति एकोपि शतमाहवइति वचनात् ॥ ५ ॥ रविचन्द्रयोर्बलमाह । शक्तिरूप इति । अत्र चक्रे कालरेखापुष्ये अभिजिते च एवमिमां रेखां न लंघयेत् । कोर्थः एकसैन्यं दक्षिणपश्चिमे स्थितम् । अपरसैन्यं पूर्वोत्तरे अत्र युद्धे द्वयं याति यमालयं न कस्यापि जयः ॥ ६ ॥ कवौ कोटेति । कालरेखा अर्कसंमुखी यतः कालरूपी दिवाकरः ॥ एवा भूमिः पश्चादुक्तक्षेत्रपालीभृतिषु मेलनीया यथा यस्याधिकफलं प्राप्यते ॥ ७ ॥ इति कालानलभूमिः ।

**निरामयाभूमिः १३** पावकाद्द्वादशारे च घटी पञ्चक्रमोदयः ॥




उदयाद्वाममार्गेण भ्रमो ज्ञेयो निरामये ॥ १ ॥
पावकाद्द्वादशानां तु चैत्रादीनां क्रमोदयः ॥
अग्निप्राग्रुद्रचंद्रेषु वायुवारुणनैर्ऋते ॥ २ ॥
यमेग्निपूर्वगादिक्षु मासे वामभ्रमोदयः ॥ पंच
पंच घटीमानमासस्थानक्रमोदयः ॥ ३ ॥
यत्रोदयगता भूमिः सा कार्या पृष्ठदक्षिणे ॥ ततो जयमवाप्नोति
संग्रामेपि चतुर्विधे ॥ ४ ॥ ॥ इति निरामया भूमिः ॥ १३ ॥

पावकादिति । पावकादग्निकोणतो मासाश्चैत्राद्या मासाः पंचघटीप्रमाणेनोदयेन अष्टदिक्षु क्रमेण परिभ्रमंति । केन क्रमेण वाममार्गेण यथा चैत्रमासस्य आग्नेयकोणे उदयः तत्र उदयाच्चैत्रमासः पंचघटीप्रमाणकालपर्यंतमाग्नेये एव तिष्ठति तदुपरि वामं पञ्चघटीयावत्तावत्पूर्वस्य तिष्ठति तत ऐशान्यां तत उत्तरे एवं वामक्रमेण परिभ्रमः । चैत्रे व्यतीते वैशाखस्योदयः प्राचि ज्येष्ठस्येशानकोणे आषाढस्योत्तरस्यां श्रावणस्य वायौ भाद्रस्य पश्चिमे इत्यादि मास-

स्योदयः पंचघटीभिरपि स्वस्थानात्क्रमेण वामं परिभ्रमः । यथा श्रावणः पश्चिमोत्तरान्तराले उदयति तत उत्तरस्यामेवं क्रमेण वामं परिभ्रमणम् । नैर्ऋत्ये दक्षिणे आग्नेय इत्यादिक्रमः । अत्र यद्यपि सामान्येनोक्त पावकाद्द्वादशमासा इति तथापि सर्वभूमयश्चैत्रादेवोक्ताः अतो व्याख्यातं चैत्रस्योदयोऽग्निकोणात् क्रमशब्देन, दिशां भ्रमणं क्रमेणैवेति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ इति निरामया भूमिः ।

जयलक्ष्मीभूमिः १४

| | | |
|---|---|---|
| इ वै ४ आ. पौ. | पू | चै. आ श्रा. मार्ग. १ |
| उ | | द |
| ज्ये. मा. आश्वि. वा ३ | प | आ. का. फा. २ नै |

महालक्ष्मीभूमिः १५

| | | |
|---|---|---|
| ई ६ | पू ज्ये. मा. आश्वि.५ | आ. ४ |
| उ आ. का. फा. ७ | | वै. पौ. द भा. ३ |
| ८ वा | चै. श्रा. मार्ग. यामार्द्ध १ प | २ नै |

वह्न्यादिकोणगा वामा मासा यामास्तु सव्यगाः ॥ दक्षपृष्ठस्थिता युद्धे जयदा जयलक्ष्मिका ॥ १ ॥ इति स्वरोदये जयलक्ष्मिका भूमिः ॥ १४ ॥

वह्न्यादीति ॥ १ ॥ इति जयलक्ष्मिका भूमिः ।

वारुणाद्वामगा मासाश्चैत्रादिदिक्चतुष्टये ॥ उदयास्तेन सार्गेण प्रहरार्द्धे दिगष्टके ॥ १ ॥ महालक्ष्मीरियं ख्याता यथोक्ता ब्रह्मयामले ॥ दक्षपृष्ठगता युद्धे तस्य भंगो न विद्यते ॥२॥ इति महालक्ष्मीभूमिः ॥ १५ ॥

वारुणादिति । वारुणपश्चिमदिगष्टके वारुणपश्चिमदिगतो वामं पश्चिमदक्षिणपूर्वोत्तरक्रमेण चतुर्दिक्षु चैत्रादिमासानामुदयः । यथा चैत्रस्योदयः पश्चिमे वैशाखस्य दक्षिणे ज्येष्ठस्य पूर्वस्याम् आषाढस्योत्तरे श्रावणस्य पुनः पश्चिम इत्यादिपरिभ्रमः प्रहरेण तु क्रमेणाष्टदिक्षु परिभ्रमः यथा चैत्रोदयः पश्चिमे प्रहरपर्यंतं ततो नैर्ऋत्ये प्रहरेण स्थितिः ततो दक्षिणे आग्नेय पूर्वे चेति प्रहरेण क्रमः ॥ १ ॥ २ ॥ इति महालक्ष्मी भूमिः ।

**जयाभूमिः १६**

| ई | पू चै. श्रा. मार्ग. | आ |
|---|---|---|
| वै. भा. उ पौ. | | आषा. द फा. का. |
| वा | ज्ये. आ. मा. प. | नै |

**विजयाभूमिः १७**

| ई मार्ग. फा. | पू चै. भा. मार्ग. | आ वैशाख |
|---|---|---|
| आ. उ का. | | आश्वि. द मा. |
| पौ. वा | ज्ये. प | श्रा. नै |

अपसव्यगता मासाः पूर्वादिक्चतुष्टये ॥ दक्षपृष्ठे जयो युद्धे जयभूमिरियं मता ॥ १ ॥ इति जयाभूमिः ॥ १६ ॥

अपसव्यगता इति ॥ १ ॥ इति जयाभूमिः ।

इंद्रं वह्निजले सौम्ये नैर्ऋत्यैंद्रयमोत्तरे ॥ इंद्रवातांतके रुद्रे चैत्रमासाद्ययं क्रमः ॥१॥ एषा सा विजया भूमिर्युद्धे दक्षिणभागगा ॥ जयदा नात्र संदेहश्चातुरंगे महाहवे ॥२॥ इति विजयाभूमिः ॥१७॥

इंद्रेति ॥ १ ॥ २ ॥ इति विजयाभूमिः ।

**भैरवी १८**　　　**भैरवी १८**




षट्कोणमालिखेच्चक्रं पूर्वापरसमन्वितम् ॥ षट्कं कर्कादिकं प्राच्यां मकराद्यं च पश्चिमे ॥ १ ॥ पूर्वाग्निवायुरुद्रे च नैर्ऋत्ये वरुणा-

लये ॥ घटीपंचप्रमाणेन कर्कादौ भ्रमणं भवेत् ॥ २ ॥ तोयवाताग्निनैर्ऋत्ये शूलिनींद्रदिशि क्रमात् ॥ भ्रमो मृगादिगे षट्के प्रोक्ता भूमिश्च भैरवी ॥ ३ ॥ जयदा दक्षिणे भागे मृत्युदा वामभागके ॥ ॥ सम्मुखे भंगदा युद्धे पृष्ठस्था संधिकारिका ॥ ४ ॥ इति यामले भैरवी भूमिः ॥ १८ ॥

षट्कोणमालिखेदिति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ इति भैरवीभूमिः ।

## वालाभूमिः १९

| ई ८ | पू ४ | आ ३२ |
|---|---|---|
| उ १२ | | २८ द |
| १६ वा | २० प | २४ नै |

## योगीश्वरीभूमिः २०

| ई वृ ६०<br>मि. ५५ | पू<br>मे. ५ | आ<br>मी. १०<br>कुं. १५ |
|---|---|---|
| क. ५०<br>उ | | म. २०<br>द |
| सिं. ४५<br>क. ५०<br>वा | तु. ३५<br>प | ध. २५<br>वृ. ३०<br>नै |

यत्रोदयंगता बाला विशेषात्पृष्ठतो रणे ॥ नश्यंति शत्रुसंघाताः सिंहादेव यथा मृगाः ॥ १ ॥ अर्द्धयामोदया बाला सम्मुखी जयदा मता ॥ तदूर्ध्वं वामगा श्रेष्ठा पृष्ठगा निश्चितं शुभा ॥ २ ॥ इति स्वरोदये बालाभूमिः ॥ १९ ॥

यत्रोदयगता इति ॥ १ ॥ २ ॥ इति बालाभूमिः ।

मेषादि विन्यसेच्चक्रं द्वादशारेऽपसव्यतः ॥ पूर्वाद्युदयतः सव्ये भ्रमः पंचघटीमितः ॥ १ ॥ इयं योगीश्वरी भूमिर्जयदा पृष्ठदक्षिणे ॥ अहोरात्रेण सा सर्वं चक्रं क्रामति सर्वदा ॥ २ ॥ इति योगीश्वरीभूमिः ॥ २० ॥

मेषादि विन्यसेदिति ॥ १ ॥ २ ॥ इति योगीश्वरीभूमिः ।

---

१ यत्रोदयगता दिवा बाला संमुखी जयदा माता ॥ तदूर्ध्वा वामगा श्रेष्ठा पृष्ठगा निशि साऽशुभा ॥ इति क्वचित्पुस्तके ॥

### चंडिभूमिः २१

| | | |
|---|---|---|
| ई १२ | पू घटी २ | आ ८ |
| उ ६ | | १४ द |
| १६ वा | १० प | ४ नै |

### यामभूमिः २२

| | | |
|---|---|---|
| ई ८ | पू याम १ | आ २ |
| उ ७ | | ३ द |
| ६ वा | ५ प | ४ नै |

इंद्रनैर्ऋत्यसोमाग्नितोयरुद्रांतकानिले ॥ घटीद्वयप्रमाणेन दिनार्धे भ्रमणं क्रमात् ॥ १ ॥ एवमेवापराह्णेऽपि चंडी भ्राम्यति सर्वदा ॥ यस्य दक्षिणगा युद्धे तस्य भंगो न विद्यते ॥ २ ॥ इति स्वरोदये चंडीभूमिः ॥ २१ ॥

इन्द्रनैर्ऋत्येति ॥ १ ॥ २ ॥ इति चण्डीभूमिः ।

उदयात्पूर्वतः सव्ये यामे यामे दिगष्टके ॥ यामे भूमिर्भ्रमत्येवं जयदा पृष्ठदक्षिणे ॥ १ ॥ इति यामभूमिः ॥ २२ ॥

उदयादिति ॥ १ ॥ इति यामभूमिः ।

### झुंझुकाभूमिः २३

| | | |
|---|---|---|
| ई यामार्द्ध ४ | पू ३२ | आ २८ |
| उ ८ | | २४ द |
| वा १२ | १६ प | २० नै |

### कर्तरीभूमिः २४



ईशाद्या वामतो यांति यामार्धं ककुबष्टके ॥ भुंभुकाख्या भ्रमत्येवं जयदा वामसम्मुखी ॥ १ ॥ इति भुंभुका भूमिः ॥ २३ ॥

त्रिरेखा ऊर्ध्वगाः कृत्वा तिर्यग्गास्तु तथा पुनः ॥ पूर्वरेखादितो न्यस्य मेषाद्याः सव्यमार्गगाः ॥ १ ॥ यत्र राशौ स्थितश्चंद्रस्त-द्वंद्वे क्रमतो रविः ॥ रविः पृष्ठेशशी चाग्रे जयदा कर्तरी स्मृता ॥ २ ॥ इति यामले कर्तरी भूमिः ॥ २४ ॥

त्रिरेखा इति ॥ १ ॥ २ ॥ इति कर्तरी भूमिः ।

**शार्दूली भूमिः २५**




**सिंहली भूमिः २६**




चैत्राद्युत्तरतो मासा द्वादशारे च सृष्टिगाः ॥ यत्रस्थास्तत्रतो यांति पंचपंच घटीः क्रमात् ॥ १ ॥ भंगदा पृष्ठगा प्रोक्ता मृत्युदा वामतः स्थिता ॥ जयं ददाति दक्षाग्रे शार्दूली समरे स्थिता ॥ २ ॥ इति स्वरोदये शार्दूली भूमिः ॥ २५ ॥

चैत्रादीति ॥ १ ॥ २ ॥ इति शार्दूली भूमिः ।

वाममार्गेण पूर्वादियामार्धं च दिगष्टके ॥ वामाग्रे जयदा प्रोक्ता सिंहली समरे सदा ॥ १ ॥ इति यामले सिंहली भूमिः ॥ २६ ॥

वाममार्गेणेति ॥ १ ॥ इति सिंहली भूमिः ।

तिथ्यादावुदयं याति नाडिका षट् प्रमाणतः ॥ पूर्वा याम्योदके सौम्ये ब्रह्मस्थाने तथैव च ॥ १ ॥ तन्वी भूमिरियं ख्याता जयदा

### तन्वीभूमिः २७

| ई | पू ६ | आ |
|---|---|---|
| उ २४ | | १२ द |
| वा | १८ प | नै |

### महामायाभूमिः २८

| ई | पू चै. श्रा. मार्ग | आ |
|---|---|---|
| उ आ. का. फा. | | वै. भा. द पौष. |
| | ज्ये. आ मा. श्वि प | नै |

पृष्ठंदक्षिणे ॥ ब्रह्मस्थानोदये मृत्युः सैन्ययोरुभयोरपि ॥ २ ॥ इति तन्वीभूमिः ॥ २७ ॥

तिथ्यादाविति ॥ १ ॥ २ ॥ इति तन्वीभूमिः ।

चैत्राद्याः पूर्वतो मासाः सव्यकोष्ठचतुष्टये ॥ पृष्ठदक्षिणगा भव्या महामाया त्वियं मता ॥ १ ॥ इति महामायाभूमिः ॥ २८ ॥

चैत्राद्या इति ॥ १ ॥ इति महामायाभूमिः ।

### माहेश्वरीभूमिः २९

| | पू आ. का. फा. | |
|---|---|---|
| उ ज्ये. आ. मा. | | चै. श्रा. द मार्ग. |
| | वै. भा. पौष प | |

### देवकोटीभूमिः ३७

| ३२ | पू यामार्द्ध ४ | ८ |
|---|---|---|
| उ २८ | | १२ द |
| २४ | २० प | १६ |

दक्षिणाद्युदयं यातिं चैत्राद्यं दिक्चतुष्टये ॥ जयदा पृष्ठदक्षस्था भूमिरेषा महेश्वरी ॥ १ ॥ इति माहेश्वरीभूमिः ॥ २९ ॥

दक्षिणादीति ॥ १ ॥ इति महेश्वरीभूमिः । ( अग्रे भूमि प्रकरणे व्याख्या नास्ति )

अर्धयामो भ्रमेत्सव्ये शक्रस्थानाद्दिगष्टके ॥ पृष्ठस्था जयदा युद्धे देवकोटिरियं मता ॥ १ ॥ इति देवकोटिभूमिः ॥ ३० ॥

**शिवाभूमिः ३१**

| ई १५ ३० | पू तिथि १।२ | आ ३।४ |
|---|---|---|
| १३ उ १४ | | ५ ६ द |
| ११ १२ वा | ९ १० प | ७ ८ नै |

**शक्तिभूमिः ३२**

| ई तिथि ३ | पू १४ | आ ९ |
|---|---|---|
| उ ११ | | ७ द |
| १० वा | ६ प | १५ नै |

इंद्रातिथियुगं भुक्तिः सव्यमार्गे दिगष्टके ॥ दक्षिणे जयदा प्रोक्ता शिवा भूमिर्महाहवे ॥ १ ॥ इति शिवाभूमिः ॥ ३१ ॥

आदौ तिथित्रयं रुद्रे त्रयं चैव जसोद्भवे ॥ ततश्चैका यमाशाया-मग्निभागे तिथिद्वयम् ॥ १ ॥ वायौ सौम्ये तथैकैका पूर्वस्यां तु तिथित्रयम् ॥ नैर्ऋत्यैका कृता पृष्ठे शक्तिभूमिर्जयप्रदा ॥ २ ॥ इति स्वरोदये शक्तिभूमिः ॥ ३२ ॥

**धूम्राभूमिः ३३**

| ई आ. | पू भा. मा. | आ श्रा. |
|---|---|---|
| का. उ पौ. | | आषा. द फा. |
| चै. वा | वैशा. मार्ग. प | ज्ये. नै |

चैत्रादिवायुतो मासाः सहारेण दिगष्टके ॥ पुनः पश्चिमतः शेषाश्चतुर्दिक्षु क्रमेण च ॥ १ ॥ पृष्ठदक्षिणगा श्रेष्ठा भंगदा वामसंमुखी ॥ इयं धूम्राभिधा भूमिः सर्वशत्रुभयंकरी ॥ ॥ २ ॥ इति धूम्राभूमिः ॥ ३३ ॥

मानाभूमिः ३४

| | | |
|---|---|---|
| ई भा. | पू वै. पौ. | आ चै. का. |
| उ ज्ये. | | श्रा. द आ |
| आ. वा | आ फा. प | मार्ग नै |

वराटिकाभूमिः ३५

| | | |
|---|---|---|
| ई . चैत्र आषाढ़ | पू वैशाख श्रावण | आ ज्येष्ठ भाद्रपद |
| उ | | द |
| वा आश्विन पौष | प कार्तिक माघ | नै मार्गशीर्ष फाल्गुन |

वह्निशक्रोत्तरे वायौ यमे रुद्रांबुयावके ॥ नैर्ऋत्यैंद्रयमे तोये चैत्रादिभ्रमणं ततः ॥ १ ॥ पृष्ठस्था जयदा नित्यमन्यत्रैषा न शोभना ॥ इयं मानाह्वया भूमिर्युद्धकाले महाबला ॥ २ ॥ इति माना भूमिः ॥ ३४ ॥

चैत्रादिमासषट्के तु पूर्वभागे कृतोदया ॥ शेषषट्के तु वारुण्यां पृष्ठे भव्या वराटिका ॥ १ ॥ इति वराटिका भूमिः ॥ ३५ ॥

त्रिमुंडाभूमिः ३६

| | | |
|---|---|---|
| ई श्रा का. फा. | पू | चै. आ श्रा. मार्ग. |
| उ | | द |
| ज्ये. आ. मा. वा | प | वै. भा. पौष नै. |

मत्सरी भूमिः ३७

| | | |
|---|---|---|
| ई १२ | पू १६ | आ २० |
| उ ८ | | द २४ |
| यासार्क ४ वा | ३२ प | २८ नै |

वह्नितः सव्यमार्गेण मासाश्चैत्रादिकोणगाः ॥ पृष्ठदक्षिणगा युद्धे त्रिमुंडा जयदा मता ॥ १ ॥ इति त्रिमुंडाभूमिः ॥ ३६ ॥

वायुतः सव्यमार्गेण यामार्धं ककुभं प्रति ॥ सन्मुखी वरदा प्रोक्ता मत्सरीयं महाहवे ॥ १ ॥ इति मत्सरीभूमिः ॥ ३७ ॥

**धर्माभूमिः ३८**

| | | |
|---|---|---|
| ई ३२ | पू ४ | आ ८ |
| उ २८ | | १२ द |
| २४ वा | २० प | १६ नै |

**मृताभूमिः ३९**

| | | |
|---|---|---|
| फा. मा. | पू चै. | वै. ज्ये. |
| उ पौ. | | आ. द |
| मार्ग का | आ प | श्रा. भा. |

पूर्वतः सृष्टिमार्गेण वेदसंख्या घटी क्रमात् ॥ दक्षपृष्ठे स्थिता श्रेष्ठा धर्माभूमिरियं मता ॥१॥ इति धर्माभूमिः ॥ ३८ ॥

द्वादशारेंद्रतः सव्ये चैत्रादिभ्रमणं क्रमात् ॥ वामाग्रे संस्थिता युद्धे मृताख्या मृत्युदायिका ॥ १ ॥ इति मृताभूमिः ॥ ३९ ॥

**सृष्टिभूमिः ४०**

| | | |
|---|---|---|
| ई ४ | पू याम १ | आ ६ |
| उ ७ | | ३ द |
| २ वा | ५ प | ८ नै |

**क्षयाक्षयाभू० ४१**

| | | |
|---|---|---|
| ई वै | पू चै. मा. | आ का |
| उ ज्ये पौष | | आ. फा. द |
| आ वा | श्रा. मा. प | भा. नै |

इंद्रवायुयमे रुद्रे जलाग्निशशिराक्षसे ॥ यामोदयाद्भवेभूमिः सृष्टि पृष्ठे जयप्रदा ॥ १ ॥ इति सृष्टिभूमिः ॥ ४० ॥

चैत्राद्याः पूर्वतो मासा वामहस्तदिगष्टके ॥ पुनर्मार्गादितो मासाः शेषाः काष्ठाचतुष्टये ॥ १ ॥ क्षयाभूमिर्जयादेवं दक्षिणेन तथा क्षया ॥ क्षया वामे क्षया दक्षे जयदा नात्र संशयः ॥ २ ॥ इति यामले क्षयाक्षया च भूमिः ॥ ४१ ॥

### दुर्मतीभूमिः ४२

| | | |
|---|---|---|
| ई आ. फा. | पू चै. मा. | आ भा |
| आश्वि उ | | ज्ये. द मा. |
| वै. पौ. वा | श्रा पं | का नै |

### प्रहरा भूमिः ४४

| | | |
|---|---|---|
| ई २२ | पू यामार्द्ध ४ | आ १२ |
| उ ८ | | २० द |
| २८ वा | २४ प | १६ नै |

तुर्यां तुर्यां दिशं याति वामं चैत्रादिपूर्वतः ॥ समरे दक्षपृष्ठस्था दुर्मतीयं जयप्रदा ॥१॥ इति दुर्मतीभूमिः ॥ ४२ ॥

पूर्वोत्तराग्निनैर्ऋत्ये यमे तोयानिले शिवे ॥ प्रहरार्द्धोदया सा तु पृष्ठस्था प्रहरा भुवि ॥ १ ॥ इति प्रहराभूमिः ॥ ४४ ॥

### गौरीकाली भूमिः ४५




### नारहरीभूमिः ४६

| | | |
|---|---|---|
| ई ७ | पू ८ | आ १ याम |
| उ ६ | | २ द |
| ५ वा | ४ प | ३ नै |

तूर्यंतूर्यंदिशं याति। इति पा० ।

पूर्वोत्तरदिशोः शुक्ले कृष्णे पश्चिमयाम्ययोः ॥ जयदा पृष्ठभागेन गौरी काली क्रमेण च ॥ अग्रस्था शुभदा गौरी काली पृष्ठे शुभावहा ॥ १ ॥ इति स्वरोदये गौरीकालीभूमिः ॥ ४५ ॥

वह्नितः सव्यमार्गेण यामभोगो दिगष्टके ॥ नारहर्याख्यका भूमिर्जयदा पृष्ठदक्षिणे ॥ १ ॥ इति नारहरीभूमिः ॥ ४६ ॥

**बलाभूमिः ४७**

| ई भा | पू चै. पौष | आ श्रा |
|---|---|---|
| वै उ माघ | | आषा. द मार्ग |
| आश्वि वा | ज्ये फा प | का नै |

**भूचरी खेचरी भूमिः ४८ । ४९**




पूर्वोत्तरे जले याम्ये वह्नीशे वायुराक्षसे ॥ यमेंद्रे सौम्यतोये च चैत्रादिमासभोगगा ॥१॥ इयं भूमिर्बलाख्या सा सन्मुखी वामगा शुभा ॥ भंगदा दक्षपृष्ठे च युद्धकाले न संशयः ॥ २ ॥ इति यामले बला भूमिः ॥ ४७ ॥

मेषादिद्वादशारे च वाममार्गेण भूचरी ॥ खेचरी दक्षमार्गेण भ्रमो भवति सर्वदा ॥१॥ चक्रस्था भूचरे चक्रे शीघ्राः खेचरगा ग्रहाः ॥ भूचरा दक्षपृष्ठस्थाः खेचरा वामसन्मुखाः ॥ २ ॥ भूचराः स्थायि जयदाः खेचराश्चैव यायिनः ॥ सौम्यासौम्यविभागेन विज्ञाय फलमादिशेत् ॥३॥ इति यामले भूचरी खेचरी भूमिः ॥४८॥३९॥

### गुह्याभूमिः ५०




### द्वादशी भूमिः ५१




पूर्वाह्ने पावके कोणे पराह्ने वायुगोचरम् ॥ इयं गुह्याभिधा भूमिर्जयदा पृष्ठदक्षिणे ॥ १ ॥ इति गुह्या भूमिः ॥ ५० ॥

पूर्वतो निवहन्मासा द्वादशारे च सृष्टिगाः ॥ चैत्राद्या द्वादशी भूमिर्जयदा पृष्ठदक्षिणे ॥ इति द्वादशी भूमिः ॥ ५१ ॥

### विष्टिभूमिः ५२

| | | |
|---|---|---|
| ई ७।८ ९।१० पू | पू ३।उ ४।५।६ | पू.२ आ २ १५।१ |
| उ १० उ ११।१२।१३ | | उ ११ द १२।१३।१४ |
| १४।३०।१।२।३।४ वा पू | उ४।५ ६।७ प | ८।९।१०।११पू नै |

### केवलाभूमिः ५३

| | | |
|---|---|---|
| ई ज्ये. | पू चै. भा. | आ वै. |
| आषा. उ माघ | | आश्विन द पौष |
| फा. वा | का मार्ग प | श्रा. नै |

आग्नेयकोणतो वामं पूर्णिमादितिथिक्रमात् ॥ सार्द्धं दिनत्रयं भद्रा वायव्ये सार्द्धपंचकम् ॥१॥ सन्मुखी वामगा वर्ज्या यात्रायां समरे तथा ॥ पुरग्रामगृहादीनां प्रवेशे शुभमिच्छता ॥२॥ इति विष्टिभूमिः ॥ ५२ ॥

इंद्रवह्नीशसौम्ये च नैर्ऋत्येंद्रयमे जले ॥ तोये याम्योत्तरे वायौ भ्रमश्चैत्रादिमासतः ॥ १ ॥ जयदा पृष्ठदक्षस्था भंगदा वामस-

न्मुखी ॥ केवलेयं महाभूमिर्युद्धे चैवं चतुर्विधे ॥ २ ॥ इति केवला भूमिः ॥ ५३ ॥

**त्रैलोक्यविजया भूमिः ५४**

| | | |
|---|---|---|
| ई ८ १३ | पू १ १४ | ३ आ १५ |
| २ उ १२ | | ५ ३० द |
| ७ ११ वा | ६ १० प | ४ ९ नै |

**कालपाशाभूमिः ५५**

| | | |
|---|---|---|
| ई रा | पू सू | आ चं |
| श उ कालः | | मं द पाशः |
| बु वा | गु प | शु नै |

इंद्रचंद्राग्निनैर्ऋत्ययाम्योंबुवायुरुद्रगा ॥ नैर्ऋत्यामनिले सौम्ये रुद्रेंद्राग्नियमाधिपे ॥१॥ प्रतिपदादि भ्रमत्येषा जयदा पृष्ठदक्षिणे ॥ त्रैलोक्यविजया भूमिर्भूबलानां बलोत्कटा ॥ इति त्रैलोक्य-विजया भूमिः ॥ ५४ ॥

वारेह्नः पूर्वदिग्भागे ततः सव्येन मंदगः ॥ यत्रस्थस्तत्र कालः स्यात् पाशस्तस्य तु संमुखः ॥ १ ॥ दक्षिणस्थः शुभः कालः पाशो वामदिगाश्रयः ॥ यात्रायां समरे श्रेष्ठस्ततोन्यत्र न शोभ-नः ॥ २ ॥ इति कालपाशाभूमिः ॥ ५५ ॥

**करालिकाभूमिः ।**

| | | |
|---|---|---|
| ई ४ २ | पू १ चै.श्रा.मार्ग. यामार्द्ध | ४ आ ८ |
| वै. भा. उ पौष. या ३ घ ४ | | आ. का. द फा. ४।७ |
| ४ ४ वा | ज्ये. आ. मा. ५ प | ४ ६ नै |

चैत्राद्याः पूर्वतो मासा वामगा दिक्चतुष्टये॥यत्रस्थास्तत्रतो यांति यामार्द्धेन दिगष्टके ॥ १ ॥ भंगदा पृष्ठदक्षे च जयदा वामसन्मुखी ॥ इयं करालिका भूमिः संग्रामे शत्रु-नाशिनी ॥ २ ॥ इति करालिका भूमिः ॥५६ ॥

### वडवाभूः ५७

| ई वा २ | पू मध्य १ | वा आ ८ |
|---|---|---|
| मध्य उ ३ | | मध्य ७ द |
| ४ वा वा | मध्य ५ प | ६ वा नै |

### वडवाद्विभूमिः ५८

| ई १६ | पू ८ | ३२ आ |
|---|---|---|
| २ | ४ | २८ |
| उ २४ २० | | २० द २४ |
| २८ | ४ | १२ |
| वा ३२ | ८ प | १६ नै |

मध्यबाह्यक्रमेणैव पूर्वतो वाममार्गगा ॥ वाक्षार्द्धमुदयं याति सर्वकालं दिगष्टके ॥ १ ॥ बाह्योदया तु बाह्यानां मध्यस्थानां तु मध्यगा ॥ यायिनां बाह्यगा देया स्थायिनां तु हि मध्यगा ॥ वडवेयं महाभूमिः शत्रूणां क्षयकारिणी ॥ २ ॥ इति वडवा भूमिः ॥ ५७ ॥ इति वडवाद्विभूमिः ॥ ५८ ॥

### अपराजिताभूमिः ५९

| ई | पू चै.श्रा.मार्ग. | आ |
|---|---|---|
| वै. भा. उ पौष | | आ. का. द फा. |
| वा | ज्ये. मा. आ. प | नै |

### रौद्रीभूमिः ६०

| ई श्रा. | पू वै. पौ. | आ आश्वि. |
|---|---|---|
| का. उ | | आषा. द फा. |
| ज्ये. मा. वा | भा. प | चै. मार्ग. नै |

चैत्राद्याः पूर्वतो वामं भ्रमणं दिक्चतुष्टये ॥ संमुखी जयदा प्रोक्ता भूमिरेषाऽपराजिता ॥ १ ॥ इति अपराजिताभूमिः ॥ ५९ ॥
नैर्ऋत्यादि भ्रमो वामे तुर्ये तुर्ये दिगष्टके ॥ चैत्रादिमासगा रौद्री
नैर्ऋत्यादि भ्रमो वामे तुर्ये तुर्ये दिगष्टके ॥ चैत्रादिमासगा रौद्री
जयदा पृष्ठदक्षिणे ॥ १ ॥ इति रौद्रीभूमिः ॥ ६० ॥

## वामलोचनाभूमिः ६१

| | | |
|---|---|---|
| ई | पू | आ |
| उ अपराह्ण १५ | | पूर्वाह्ण द १५ |
| वा | प | नै |

## शिशुभूः ६२

| | | |
|---|---|---|
| | पू चै. श्रा. मार्ग. | |
| उ वै. भा. पौ. | | आ. का. द फा. |
| | ज्ये. मा. आश्वि. प | |

उदयद्युदलं यावद्दक्षिणस्थो जयी भवेत् ॥ तदूर्ध्वं चोत्तरस्यां तु भूरेषा वामलोचना ॥१॥ इति वामलोचना भूः ॥ ६१ ॥

चैत्राद्यापूर्वतो वामं भ्रमणं दिक्चतुष्टये ॥ संमुखी जयदा प्रोक्ता शिशुभूमिरियं मता ॥ १ ॥ इति शिशुभूमिः ॥ ६२ ॥

## मातंगीभूः ६३

| | | |
|---|---|---|
| ई कर्क १ याम | पू सिं. याम १ | आ क. म. ३ |
| उ मि. ८ | | कुं. तु. ४ द |
| वृ. ७ वा | ध. ६ मे. प | मी. वृ. ५ नै |

## अभेद्या भूमिः ६४

| | | |
|---|---|---|
| ई ५० १० | पू ५।४५ | आ ४० |
| उ १५ ५५ | | ३५ द |
| २० वा ६० | २५ प | ३० नै |

कर्कादिरुद्रविदिशो मकराद्यग्निकोणतः ॥ यामैकं सव्यमार्गेण मातंगी पृष्ठगा जयेत् ॥१॥ इति मातंगीभूमिः ॥ ६३ ॥

पूर्वतो वाममार्गेण घटचः पंच दिगष्टके ॥ अभेद्या जयदा प्रोक्ता संमुखी समरे सदा ॥ १ ॥ इति अभेद्याभूमिः ॥ ६४ ॥

### दहनीभूमिः ६५

| | | |
|---|---|---|
| ई १० १५ | पू ५ | ६० आ ५५ |
| उ २० | | ५० द |
| ३५ ३० वा | २५ प | ४० ४५ नै |

### जिताभूः ६६

| | | |
|---|---|---|
| ई आ. का. फा. ५ | पू | आ वै. आ. मार्ग. ५ |
| उ | | द |
| ज्ये. आ. आश्वि. वा | प | वै. भा. पौष ५ नै |

द्वादशारे घटी पंच पूर्वतो वाममार्गगा ॥ जयदा वामपृष्ठस्था दहनीभूमिराहवे ॥ १ ॥ इति दहनीभूमिः ॥ ६५ ॥

वह्न्यादिचैत्रतो मासाः सव्यमार्गेण कोणगाः ॥ पंचनाडी भ्रमंत्येवं जिता पृष्ठे जयप्रदा ॥१॥ इति जिताभूमिः ॥ ६६ ॥

### वायुवभूः ६७

| | | |
|---|---|---|
| म. १५ फा. १० | पू पौष २० | मा. २५ का. ३० |
| उ चै. ५ | | आश्वि. ३५ द |
| वै ६० ५५ ज्ये. | अ.षा. ५० प | ४० भा. श्रा. ४५ |

### वर्गभूः ६८

| | | |
|---|---|---|
| ई क ८ मार्जार | पू अ १ गरुड | श आ २ मेष |
| उ सिंह च ७ | | य ३ द गज |
| श्वा ६ ट वा | सर्प त ५ प | मूषक प ४ नै |

द्वादशारेंदुतो[1] वामं चैत्रादौ यत्र संस्थिताः ॥ तत्रतो घटिकाः पंच सव्यमार्गेण निर्मिताः ॥ १ ॥ जयदा दक्षिणे भागे मृत्युदान्यत्र संस्थिता ॥ प्रोक्ता वायुबला भूमिः स्वरशास्त्रे बलोत्कटा ॥ २ ॥ इति वायुबला भूमिः ॥ ६७ ॥

१ रेंद्रतो इति पा०

अष्टारे वाममार्गेण न्यसेद्वर्गाष्टकं क्रमात् ॥ भ्रमणं सृष्टिमार्गेण यामार्द्धमुदयो भवेत् ॥१॥ योधनामोदिते वर्गे पृष्ठदक्षिणतः कृते वर्गकालानली भूमिर्द्वंद्वयुद्धे जयावहा ॥ २ ॥ इति वर्गकालानलीभूमिः ॥ ६८ ॥

कपालिकाभूः ६९

| | | |
|---|---|---|
| ई का | पू म | ध्या आ |
| उ कै | | ह्न द |
| टि वा | घ प | स्थ नै |

अनलानिलाभूः ७०

| | | |
|---|---|---|
| ई | पू | पूर्वाह्न १५ |
| उ | | द |
| अपराह्न वा १५ | प | नै |

दिनमध्यस्थनाड्येका कपालस्थे दिवाकरे ॥ नश्यद्यायी जयेत्स्थायी भूमिरेषा कपालिका ॥१॥ इति कपालिकाभूमिः ॥६९॥ पूर्वाह्ने पावके कोणेऽपराह्ने वायुकोणगा ॥ जयदा दक्षपृष्ठस्था भूमिरेषानलानिला ॥ १ ॥ इति अनलानिलाभूमिः ॥ ७० ॥

चंद्रसूर्यभूः ७१

| | | |
|---|---|---|
| ई रा | पू सू | आ चं |
| उ श | | मं द |
| शु वा | गु प | बु नै |

ग्रहभूः ७२

| | | |
|---|---|---|
| ई रा | पू सू | आ चं |
| उ श | | द मं |
| शु वा | गु प | बु नै |

दक्षपृष्ठे रवेर्बिंबं जयार्थं रणमूर्द्धनि ॥ चंद्रबिंबं ततो रात्रौ पुरो वामे तु शोभनम् ॥ १ ॥ इति चंद्रसूर्यभूमिः ॥ ७१ ॥

दक्षपृष्ठस्थिताः क्रूराः सौम्या वामाग्रसंस्थिताः ॥ संग्रामे जयदाः प्रोक्ता मिश्रामिश्रफलप्रदाः ॥ १ ॥ इति ग्रहभूमिः ॥ ७२ ॥

राशिभूमिः ७३




लग्नभूः ७४




भास्फरी यत्र संतिष्ठेद्द्वादशारेपसव्यतः ॥ राशिर्दक्षिणपृष्ठस्था संग्रामे जयदा मता ॥ १ ॥ इति राशिभूमिः ॥ ७३ ॥

सूर्यराश्यादितः सव्यलग्नं तत्कालसंभवम् ॥ पृष्ठदक्षिणगं कृत्वा जयेद्युद्धे न संशयः ॥ १ ॥ इति लग्नभूमिः ॥ ७४ ॥

राहुकालानलभूः ७५




स्वरभूः ७६



राहुकालानले चक्रे कृत्वा चंद्रदिवाकरौ ॥ वदनाद्यंगभेदेन कथयिष्यामि भूबलम् ॥ १ ॥ राहोर्मुखस्थितश्चंद्रः पृष्ठभागे जयप्रदः ॥ गुह्यसंपुटगो युद्धे वामाग्रे च जयावहः ॥ २ ॥ कपालपुच्छयोश्चंद्रो वाममार्गे जयप्रदः ॥ भानुः सर्वत्र सर्वांगे जयदः पृष्ठदक्षिणे ॥ ३ ॥ इति राहुकालानलाभूमिः ॥ ७५ ॥

आकाराद्याः स्वराः पंच नंदादितिथिषु क्रमात् ॥ सव्यमार्गोदयास्ते च पंचस्थानेषु सर्वदा ॥ १ ॥ ततस्तिथ्यादिता भुक्तिः प्रत्येकं रविनाडिका ॥ दक्षपृष्ठस्थिता शस्ता वामाग्रे मृत्युदायिका ॥ २ ॥ मध्यभागोदये मृत्युः सैन्ययोरुभयोरपि ॥ किंचित्स्थायी जयी युद्धे स्वरभूमिरियं मता ॥ ३ ॥ इति स्वरभूमिः ॥ ७६ ॥

त्रिकालभूः ७७

| | | |
|---|---|---|
| ई | पू<br>चै. वै.<br>ज्ये. | आ |
| उ पौ. मा. फा. | | आषा. श्रा. द भा. |
| वा | आ. का. मार्ग प | नै |

ऋक्षराहुभूः १




चैत्रादिपूर्वतः सव्ये चतुर्दिक्षु त्रयं त्रयम् ॥ त्रिकालरुद्रभूम्येषा जयदा पृष्ठदक्षिणे ॥ १ ॥ इति त्रिकालरुद्रभूमिः ॥ ७७ ॥

सप्तरेखांकिते चक्रे कृत्तिकादि न्यसेद्बुधः ॥ धिष्णे यत्र स्थितो राहुर्ऋक्षराहुः स उच्यते ॥ १ ॥ इति ऋक्षराहुः ॥ १ ॥

### मासराहुः २




### पक्षराहुः ३




द्वादशारेऽपसव्येन मासांश्चैत्रादिकान्न्यसेत् ॥ वह्न्मासस्थितो राहुर्मासराहुः सउच्यते ॥१॥ यस्मिन् राशौ राहुरस्ति तत्संख्याके मासि स्थाप्या ॥ इति मासराहुः ॥ २ ॥

पूर्वोत्तरगतः कृष्णे शुक्ले पश्चिमदक्षिणे ॥ पक्षभुक्तिप्रमाणेन पक्षराहुरयं मतः ॥१॥ इति पक्षराहुः ॥ ३ ॥

### दिनराहुः ४




### खंडराहुः ५




त्रिंशद्दंडांकिते चक्रे वह्नितः पूर्णिमादिकान् ॥ तिथीन् विन्यस्य स्यादेवं दिनराहुरिहोच्यते ॥ १ ॥ सप्तरेखांकिते चक्रे कोणरेखा

द्ध्यांकिते ॥ कृत्वा विलोममार्गेण संस्थाप्यं तिथिमंडलम् ॥ २ ॥
पूर्णिमाद्यग्निरेखातस्तिथिरेखा क्रमेण च ॥ तिथिभोगभ्रमो राहु-
र्दिनराहुः सउच्यते ॥ ३ ॥ इति दिनराहुः ॥ ४ ॥

ऐंद्र्यां कृष्णे तृतीयायां सप्तम्यां शूलिनो दिशि ॥ दशम्यां धनदा-
शायां वायव्यां भूतवासरे ॥ १ ॥ शुक्लपक्षे तु वारुण्यां चतुर्थ्यां
समुदेत्यसौ ॥ नैर्ऋत्ये च तथाष्टम्यामेकादश्यां यमे दिशि ॥ २ ॥
अग्नेये पंचदश्यां च मासराहूदये सति ॥ खंडगत्या भ्रमत्येवं
खंडराहुस्तथोच्यते ॥ ३ ॥ इति खंडराहुः ॥ ५ ॥

अर्द्धयामराहुः ६

| ई ४ | पू १ | ६ अ |
|---|---|---|
| उ ७ | | ३ द |
| २ वा | ५ प | ८ नै |

गुढार्द्धयामराहुः ७

| ई ७ | पू ४ | १ आ अर्द्धयाम |
|---|---|---|
| उ २ | | ६ द |
| ५ वा | ८ प | ३ नै |

इंद्रवायुयमे रुद्रे तोयाग्निशशिराक्षसे ॥ यामार्द्धमुदितो राहुर्भ्रम-
त्येवं दिगष्टके ॥ १ ॥ इति अर्द्धयामराहुः ॥ ६ ॥

ईशानयमवातेंद्ररक्षः सोमाग्निवारुणे ॥ पूर्वाह्णेपि भ्रमत्येव-
मपराह्णेऽप्ययं क्रमात् ॥ जलाग्निसौम्यनैर्ऋत्ये शक्रानिलयमे हरे॥
इति गूढार्धराहुः ॥ पूर्वारात्रौ भ्रमत्येवं अपराह्णेप्ययं क्रमात्
॥ २ ॥ अह्नः पंचदशांशेन मुहूर्तः परिकीर्तितः ॥ एवं मुहूर्तको
राहुर्ज्ञातव्यः स्वरवेदिभिः ॥ ३ ॥ इति मुहूर्तराहुः ॥ ७ ॥

### मुहूर्त्तराहुः ७

| | | |
|---|---|---|
| ई १ मुहूर्त्त ८ | पू. ४।५ | आ ७।२ |
| उ ६।३ | | २ ७ द |
| ३।६ वा | १।८ प. | ५ ४ नै |

### कुलिकराहुः ८

| | | |
|---|---|---|
| ई २२ रा | पू सू ४ | आ चं ८ |
| उ श २८ | | मं द १२ |
| शु २४ वा | गु २० प | बु १६ नै |

रविः सोमः कुजः सौम्यो गुरुः शुक्रः शनिस्तमः ॥ ऐंद्रादीशानपर्यंतमर्द्धयामभ्रमःस्मृतः ॥ १ ॥ अर्द्धयामोदयः खेटः स्थाप्यः प्राच्यां ततः शनिः ॥ यत्रास्ते तद्दिशि ज्ञेयं बुधैः कुलिकजं तमः ॥२॥ दिनवारोदयाज्ज्ञेया तुर्यतुर्यादिशि क्रमात् ॥ ज्ञेयः कुलिकजो राहुः स्थाने यत्र शनैश्वरः ॥३॥ इति कुलिकराहुः ॥ ८ ॥

### राहुमंडलीभूः ८

| | | |
|---|---|---|
| ई रा | पू रा | आ रा |
| उ रा | | रा द |
| रा वा | रा प | रा नै |

### राशिचंद्रः ९

| | | |
|---|---|---|
| ई | पू मे. सिं. ध. | आ |
| क. वृ. उ मी. | | वृ क. म. द |
| वा | मि. तु. कुं. प | नै |

संमुखी वामसंस्था वा यस्येयं राहुमंडली ॥ पराजयो भवेत्तस्य वादद्यूते रणादिषु ॥ १ ॥ यस्य दक्षिणपृष्ठस्था ह्येषा राहुपरंपरा ॥ सहस्रं च शतेनापि परसैन्यं निकृंतति ॥ २ ॥ इत्यष्टविधराहुः ॥ दिशि यस्यां स्थितश्चंद्रः सव्यमार्गेण राशिगः ॥ राशिचंद्र

स विज्ञेयः सर्वदा स्वरवेदिभिः ॥ १ ॥ इति राशिचन्द्रः ॥ १ ॥

**उदयचंद्रः २**




**मासचंद्रः ३**




समसप्तशलाकाख्ये कृत्तिकादिसमन्विते ॥ शुक्लपक्षे द्वितीयायां यत्र भेऽभ्युदितः शशी ॥ १ ॥ इति उदयचंद्रभूमिः ॥ २ ॥
चक्रे सप्तशलाकाख्ये वहन्मासर्क्षगः शशी ॥ मासचंद्रो भवेदेवं ज्ञातव्यः स्वरवेदिभिः ॥ १ ॥ इति मासचंद्रभूमिः ॥ ३ ॥

**पक्षचंद्रः ४**



पूर्वोत्तरगतः शुक्ले कृष्णे पश्चिमदक्षिणे ॥ पक्षभुक्तिप्रमाणेन पक्षचन्द्र इहोच्यते ॥ १ ॥ इति पक्षचंद्रभूमिः ॥ ४ ॥

दिनचंद्रः ५




तात्कालिकचंद्रः ६




चक्रे सप्तशलाकाख्ये ऐंद्र्यां मध्येऽर्कभं न्यसेत् ॥ ततो वामेन चंद्रर्क्षं दिनचंद्र इहोच्यते ॥ १ ॥ इति दिनचंद्रभूमिः ॥ ५ ॥

दिनऋक्षात्तु सव्येन सपादघटिकाद्वयम् ॥ प्रतिनाड्यां भवेद्भुक्तिरेष तात्कालिकः शशी ॥१॥ इति तात्कालिकचन्द्रः ॥ ६ ॥

चन्द्रमंडलभूः ७




अयनभानुः १




सप्तमो विंबरूपेण प्रत्यक्ष इह दृश्यते । वामाग्रे जयदश्चंद्र एवं सप्तविधः स्मृतः ॥ १ ॥ इति सप्तविधचंद्रः ॥ ७ ॥

दक्षिणायनगो भानुर्जयदो याम्यपश्चिमे ॥ उत्तरायणसंस्थोपि जयदः शक्रसोमयोः ॥ १ ॥ इति अयनभानुः ॥ १ ॥

अयमेव दिनभानुः तत्कालभानुश्च २




तत्कालभानुश्च २ सूर्यबिंबभूः ३

| | | |
|---|---|---|
| ई ० | पू सू | ० आ |
| उ ० | | ० द |
| ० वा | ० प | ० नै |

सप्तरेखांकिते चक्रे भानुभं यत्र संस्थितम् ॥ दिनभानुर्भवेदेवं चंद्रवच्चेष्टकालिकः ॥ १ ॥ इति दिनभानुस्तात्कालिको भानुश्च ॥ प्रत्यक्षं दृश्यते यस्यां भानुबिंबं दिशि स्थितम् ॥ दक्षपृष्ठस्थिता एते कर्त्तव्या जयकांक्षिभिः ॥ १ ॥ २ ॥ इति यामले सूर्यबिंबभूः ॥

## तिथियोगिनीचक्रम् १

| | | |
|---|---|---|
| ई महालक्ष्मी ८।३० | पू ब्राह्मी १।९ | आ कौमारी ३।११ |
| माहेश्वरी उ २।१० | | वाराही द ५।१३ |
| चामुंडा ७।१५ वा | इंद्राणी ६।१४ प | वैष्णवी ४।१२ नै |

## तत्कालयोगिनी २

| | | |
|---|---|---|
| ई २०।८ ३२ | पू १।९ यामार्द्ध ४ | आ १२ ३।११ |
| १० उ २।८ | | ५।१३ द २० |
| ७।१५ वा २८ | १४।६ प २४ | ४।१२ १६ नै |

पूर्वस्यामुदये ब्राह्मी प्रथमे नवमे तिथौ ॥ माहेश्वरी चोत्तरस्यां द्वितीयादशमीतिथौ ॥ १ ॥ एकादश्यां तृतीयायां कौमारी वह्निको-

णगा ॥ चतुर्थी द्वादशी प्रोक्ता वैष्णवी नैर्ऋती तथा ॥ २ ॥ वाराही दक्षिणे भागे पंचमी च त्रयोदशी ॥ षष्ठी चतुर्दशी चैव इंद्राणी पश्चिमे स्थिता ॥ ३ ॥ पूर्णिमायां च सप्तम्यां वायव्ये चंडिकोदयः ॥ नष्टचंद्रदिनाष्टम्यां महालक्ष्मीः शिवालये ॥ ४ ॥ इति तिथियोगिनी ॥

यत्रोदयगता देवी ततो यामार्द्धभुक्तिदा ॥ भ्रमंती तेन मार्गेण भवेत्तत्कालयोगिनी ॥ ५ ॥ इति तत्कालयोगिनी ॥

वारयोगिनी ३

| | | |
|---|---|---|
| ई रा | पू सू | आ मं |
| उ चं | | गु द |
| श वा | शु प | बु नै |

द्वितीयस्तिथिकालः २




इंद्रचंद्राग्निनैर्ऋत्ये याम्ये तोयानिले हरे ॥ सूर्यादिषु च वारेषु वर्जयेद्वारयोगिनीम् ॥ ६ ॥ दिक्स्थानां संमुखे दृष्टिर्विदिक्स्था वारुणे मता ॥ कोणस्थानां च कोणे च तिथिदिश्युदयः क्रमात् ॥ ७ ॥ जयदा पृष्ठदक्षस्था भंगदा वामसंमुखी ॥ त्रिविधं योगिनीचक्रमित्युक्तं ब्रह्मयामले ॥ ८ ॥ इति वारयोगिनीचक्रम् ॥

मध्यबाह्यक्रमेणैव वामं प्रातिपदादिषु ॥ वर्तमाने तिथौ कालं वर्जयेदाश्रयद्वये ॥ १ ॥ ० ॥ इति तिथिकालः ॥

### षट्त्रिंशत्कालः ३

| | | |
|---|---|---|
| ० | ० | ० |
| ० | | ० |
| ० | ० | ० |

### वारकालः ४

| | | |
|---|---|---|
| वाह्य ० | पू सू मध्य | वाह्य चं |
| श मध्य | | मं मध्य |
| शुक्र वाह्य | गुरु मध्य | बु वाह्य |

षट्त्रिंशद्ध्रुवकं कृत्वा गताहानि च योजयेत् ॥ अष्टशेषे भवेत्कालो जयदः पृष्ठदक्षिणे ॥ १ ॥ इति यामले षट्त्रिंशत्कालः ॥ शन्यर्कभौमजीवेषु मध्ये कालः प्रकीर्तितः ॥ वाह्ये शुक्रेंदुसौम्येषु वर्जनीयः सदा रणे ॥ १ ॥ ॥इति वारकालचक्रम् ॥

### वायूचक्रभूः ८३

| | | |
|---|---|---|
| | पू | |
| उ | | द |
| | प | |

### हंसचारभूः ८४

| | | |
|---|---|---|
| ० | पू | |
| उ | | द |
| | प | |

दक्षे पृष्ठे स्थितो वायुर्जयदो भवति ध्रुवम् ॥ वामाग्रे भंगदः प्रोक्तः सर्वयुद्धेषु सर्वदा ॥ १ ॥ इति वायुचक्रम् ॥

युद्धकाले यदा चंद्रः स्थायी जयति निश्चितम् ॥ यदा सूर्यप्रवाहस्तु यायी विजयते तदा ॥ १ ॥ पार्थिवे सक्षतं युद्धं संधिर्भवति वारुणे ॥ विजयो वह्नितत्त्वेन वायौ भंगो मृतिस्तु खे ॥ २ ॥

पूर्णनाडीगतः पृष्ठे शून्भंगं तदग्रतः ॥ शून्यस्थाने गतः शत्रुर्म्रियते नात्र संशयः ॥ ३ ॥ पूर्वोत्तरदिशोश्चंद्रभानौ पश्चिमयाम्ययोः ॥ स्थितस्तत्र जयी युद्धे स्थायी यायी क्रमेण च ॥ ४ ॥ वामनाड्युदये चंद्रः कर्तव्यो वामसन्मुखम् ॥ सूर्यवाहे तथा सूर्यः पृष्ठदक्षिणगो जयेत् ॥ ५ ॥ इति स्वरोदये शारीरभूमिः ॥

रुद्रभूः मतांतर.

| ई रु ४ | पू<br>सू ४ | आ<br>शु ४ |
|---|---|---|
| श ४<br>उ | | मं ४<br>द |
| चं ४<br>वा | गु ४<br>प | रा ४<br>नै |

अथ रुद्रकालः ॥ इंद्रो वायुयमेशकं च हुतभुग् यक्षेशदैत्येश्वरौ सूर्यादौ घटिकाचतुष्कमुदये रौद्रो भ्रमन्सर्वदा ॥ युते कुक्कुटमेषहस्तिमहिषी स्याद्वंद्वयुद्धे जयो मृच्छखेचरबालवादविजयः पृष्ठे तु वामे जयः ॥ १ ॥ इति रुद्रभूमिः ॥

एतानि भूबलान्यत्र ज्ञातव्यान्युदितः क्रमात् ॥ संनिपाते विशेषेण भूमिमेलापको बली ॥ १ ॥ मासाख्या च तुरंगाख्ये दिनाख्या कविसंगरे ॥ यामाख्या कोटसंग्रामे सूक्ष्माख्या खलके रणे ॥ २ ॥ मासे पक्षे दिने नाड्यां यदुक्तं भ्रमणं पुरा ॥ यथा दिने तथा रात्रौ ज्ञातव्यं स्वरवेदिभिः ॥ तस्माद्वीक्ष्य प्रयत्नेन बलं देयं स्वरोदये ॥ ३ ॥ युद्धस्य प्राग्दिने सायं व्रतस्थः स्वरपारगः ॥ भास्करस्य महामंत्रं जपेदयुतसंख्यया ॥ ४ ॥ दशांशं होमयेत्कुंडे त्रिकोणे द्वादशांगुले ॥ अर्कस्य च शमीपुष्पैर्मध्वाज्यार्कपरिप्लुतैः ॥ ५ ॥ "ॐ ह्रूँ ह्रीं हूँ सः सूर्याय नमः" इति मंत्रः स्वाहांतं होमयेत् ॥

युद्धारंभे हयारूढः स्वरज्ञो दृढमानसः ॥ पुनरेव जपेन्मंत्रं शतकं सूर्यसम्मुखम् ॥ ६ ॥ शुक्लवासोत्तरे कृत्वा ततः सूर्यं विलोक-

येत् ॥ यावच्च दृश्यते चिह्नं शुभं वा यदि वाशुभम् ॥ ७ ॥ संपूर्णतेजसा युक्ते व्यक्ते निकटवर्तिनि ॥ श्वेते च कर्बुरे पीते सूर्ये यायी जयी भवेत् ॥ ८ खंडिते खंडसंयुक्ते छिन्ने भिन्ने च वक्रिते ॥ धूम्रे कृष्णेऽरुणे सूर्ये स्थायी जयति सर्वदा ॥ ९ ॥ भूबलानि समाप्यंते चतुराशीतिसंख्यया ॥ यदाश्रयबलादाशु शत्रुश्रीः करगामिनी ॥ १० ॥ अब्देप्यब्दार्द्धमासे निजदलसहिते वासरे चैव यामे यामस्यार्धे मुहूर्ते भ्रमति च घटिका तद्वदाशाष्टकेऽपि ॥ संग्रामे चातुरंगे कृविरणखलके कोठयुद्धे भटानां निःसंदेहं जयार्थं नरपतिगदितं भूबलं तथ्यसारम् ॥ ११ ॥ इति श्रीनरपतिजयचर्यायां स्वरोदये षडंगे सप्ताध्याये भूबलाध्यायश्चतुर्थः ॥ ४ ॥

अथ मृत्युंजयमंत्रः । पुनरन्यत्प्रवक्ष्यामि मंत्रयंत्रादिकं बलम् ॥ यस्य प्रभावतो युद्धे दुर्बलस्य बलं भवेत् ॥ १ ॥ चतुरस्रं चतुर्द्वारं त्रिरेखं पद्मगर्भितम् ॥ हस्तत्रयप्रमाणं च तंडुलैर्मंडलं लिखेत् ॥ २ ॥ सर्वलक्षणसंपूर्णं सर्वावयवसंयुतम् ॥ मासभूमिप्रवेशे च गोमयेनोपलेपिते ॥ पद्मपत्रे लिखेद्देवांश्चतुःषष्टिप्रमाणतः ॥ एकैकपद्मपत्रेषु वससंख्यादलेदले ॥ ३ ॥ भैरवी भैरवा सिद्धिर्ग्रहानागा उपग्रहाः ॥ पीठोपपीठसंयुक्ता दिक्पालैश्च समन्विताः ॥ ३ ॥ इति मृत्युंजययंत्रम् ॥

कर्णिकायां न्यसेद्देवं शिवं सांगं सहस्रकम् ॥ प्रणवादिनमोंतैश्च नाममंत्रैस्ततोर्चयेत् ॥ ५ ॥ मंडलाग्रे लिखेत्पद्मं वीरं तत्र निवेशयेत् ॥ तीर्थोदकान्वितैः कुंभैः सदूर्वाक्षतपल्लवैः ॥ ६ ॥ मृत्युंजयेन मंत्रेण शतवाराभिमंत्रितैः ॥ अभिषिंचेत्ततो वीरं शुभलग्ने स्वरोदयी ॥ ७ ॥ "ॐ जूंसः" इति मृत्युंजयमंत्रः ॥

अभिषेकमंडलम् ॥




अभिषिक्तस्ततो वीरः संग्रामे विजयी भवेत् ।
शस्त्रैर्न भिद्यते तस्य शरीरं शत्रुचोदितैः ॥ ८ ॥
एतन्मंडलमध्यस्थोऽभिषिक्तः पुरुषो यदा ॥ ततः प्रभृतियुद्धेषु शत्रुं जयति सर्वदा ॥ ९ ॥ राज्यभ्रष्टो लभेद्राज्यं क्षीणायुर्म्रियते न च ॥
मुक्त्वा पीडां ग्रहाः सर्वे शांतिं कुर्वंति सर्वदा ॥ १० ॥ इति अभिषेकविधिः ॥

अभिषेकात्परं पूजा कर्तव्या पूर्वमंडले ॥ मृत्युंजयेन मंत्रेण पूर्वोक्तविधिना ततः ॥ ११ ॥ "ॐ जूं : सः " ॥ पश्चात्समर्पयेन्मंत्र रणदीक्षा भवेदियम् ॥ तया समन्वितो वीरस्त्रिदशैरपि दुर्जयः ॥ ॥ १२ ॥ इति रणदीक्षा ॥

पूर्वोक्तमंडलस्यांतर्योधशस्त्राणि विन्यसेत् ॥ पूजयेद्विधिवत्तानि ततो जागरणक्रिया ॥ १३ ॥ " ॐ खां खीं खूं खैं खौं खः रौद्रमूर्तये खड्गाय नमः" ॥ इति खड्गमंत्रः ॥

" ॐ क्रां क्रीं क्रूं क्रैं क्रौं क्रः " ॐ भैरवरूपाय रक्षायुधाय फलकाय नमः ॥ इति फलकमंत्रः ॥ "ॐ लां लीं लूं लैं लौं लः इंद्रायुधाय धनुषे नमः ॥ " इति धनुर्मंत्रः ॥

"ॐ श्रां श्रीं श्रूं श्रैं श्रौं श्रः " ब्रह्मादिपंचदेवतामूर्त्तये पंचबाणाय नमः ॥ इति पंचबाणमंत्रः ॥

"ॐ क्रां क्रीं क्रूं क्रैं क्रौं क्रः शूलिनो मूर्तये भैरवायुधाय कुंताय नमः" ॥ इतिकुंतमंत्रः ॥

"ॐ अघोरेश्वरीचामुंडे महाचामुंडे छ्रां छ्रीं छ्रूं छ्रैं छ्रौं छ्रः भगवतीमूर्तये कात्यायनीछुरिकायै नमः" इति छुरिकामंत्रः ॥

इति रणांगपूजाविधिः ॥

छागौ मातुलभाग्नेयौ तद्धोमकृतडोरके ॥ मृत्युञ्जयेन मंत्रेण दातव्यं ग्रंथिसप्तकम् ॥ १ ॥ एवं कृतविधानेन जायते रणकंकणम् ॥ दक्षहस्तप्रबद्धेन युद्धे च विजयीभवेत् ॥ २ ॥ इति यामले रणकंकणम् ॥

कर्पूरं कुंकुमं चैव गोरोचनसमन्वितम् ॥ कोकिलाक्षस्य लेखिन्या श्वेतवस्त्रेति शोभने ॥ ३ ॥ ॐकारद्वयमध्यस्थं साध्यनाम पटे लिखेत् ॥ तद्गर्भस्थं हकारं च टकारपरिवेष्टितम् ॥ ४ ॥ पृथ्वीसंपुटमध्यस्थं वर्गाष्टकयुतं ततः प्रणवाद्यरिनामेह हुंफडंतं दिगष्टके ॥ ५ ॥ मंत्रमेतं शतं जप्त्वा पट्टं तन्मूर्ध्नि बन्धयेत् ॥ भीरुं नयति वीरत्वं समरे च जयप्रदम् ॥ ६ ॥ इति वीरपट्टविधिः ॥

पूर्वोक्तेन विधानेन रणपट्टमितो लिखेत् ॥ कृत्वा हनुमतो रूपं हृदि मंत्रममुं लिखेत्॥ "ॐ ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः हनुमते नमः ॥" मंत्रमध्ये लिखेन्नाम निजयोधस्य संभवम् ॥ मूर्ध्नि बद्धेन तेनैव हनुमत्तुल्यविक्रमः ॥ ७ इति स्वरोदये रणपट्टविधिः ॥

त्रिशूलं दक्षिणे हन्ते कपालं वामके तथा ॥ भैरवं रूपं पूर्वद्रव्यैः समालिखेत् ॥ त्रिपुरामंत्रमभ्यां ग्रंथनेन तु वेष्टयेत् ॥ मूर्ध्नि बद्धेन तेनैव त्रैलोक्यं जयति ध्रुवम् ॥ ८ ॥ ऐं क्लीं सौं त्रिपुरायै नमः ॥ इति त्रिपुरीमंत्रः ॥ इति जयपट्टविधिः ॥

कन्याकर्तितसूत्रेण अष्टोत्तरगुणेन च ॥ कर्तव्यो दोरकस्तेन स ग्रंथिः कटिमानतः ॥ मृत्युंजयेन मंत्रेण ग्रंथयोऽष्टोत्तरं शतम् ॥ कृत्वैवं मेखला जाता कटिबद्धारिनाशिनी ॥ "ॐ जूं सः" इति मेखलामंत्रः ॥ ब्रह्माणीकवचं कृत्वा यो योधः प्रविशेद्रणम् ॥ प्रभवंति न तस्यांगे प्रहाराः शत्रुनोदिताः ॥ इति कवचम् ॥ अनुलोमविलोमेन मंत्रं मृत्युंजयं न्यसेत् ॥ रक्षांतं च षडंगेषु न्यासोऽयं शत्रुवारणः ॥ इति न्यासः ॥ रसना घटिका ग्रस्ता अंगुष्ठोनामिकातले ॥ एतन्मुद्राप्रभावेण संग्रामे विजयी भवेत् ॥ इति मुद्रा ॥ अष्टोत्तरसहस्रं च अघोरं मंत्रमुत्तमम् ॥ जपयित्वा ततो घोरं मंत्रराजमनुत्तमम् पूर्वोक्तैरेव च द्रव्यैर्भूर्जपत्रे सुशोभने ॥ लिखेन्मृत्युंजयं मन्त्रं तन्मध्ये वीरनामकम् ॥ मृत्युञ्जयेन मंत्रेण ग्रथितं तच्च नामकम् ॥ रक्षां कृत्वा करे बद्ध्वा संग्रामे विजयी भवेत् ॥ "ॐ जूं सः इति रक्षा ॥

आरण्यफलकं मूलं पुष्यार्केण तु गृह्यते ॥ कन्याकर्तितसूत्रेण शतघ्नेन तु दोरकम् ॥ ग्रंथयेन्मृत्युञ्जयेन प्रत्येकं च पृथक् पृथक् ॥ अष्टोत्तरशतेनैव जायते वीरकंकणम् ॥ ९ ॥ "ॐ कुमारि अवतर२ हर बाणाग्रशासिनी त्रिपुरुषं सत्येन सर्वायुधं भंजय २स्वाहा" इति मंत्रः ॥

अंकसंस्थेन तेनैव दुर्जयस्त्रिदशैरपि ॥ स्तंभयेत्सर्वशस्त्राणि सर्वशक्तिसमन्वितः ॥१०॥ इति वीरकंकणम् ॥

अथौषधयः ॥ ईश्वरी ब्रह्मदंडी च कुमारी वैष्णवी तथा ॥ वाराही वज्रिणी चंडी तथा रुद्रजटाभिधा ॥ ११ ॥ लांगली सहदेवी च

पाठाराजी पुनर्नवा ॥ मुद्गरी भूतकेशी च सोमराजी हनूजटा ॥ १२ ॥ श्वेतापराजिता गुंजाश्वेता च गिरिकर्णिका ॥ क्षुद्रिका शंखिनी चैव विडंगी शरपुंखिका ॥ १३ ॥ खजूरी केतकी ताडी पूगी स्यान्नारिकेलिका ॥ अंजनः कांचनारश्च चंपकाश्मंतकः कुहूः ॥ १४ ॥ अपामार्गोऽर्कभृंगौ च ब्रह्मवृक्षो वटस्तथा ॥ शतमूली बलायुग्मं गोजिह्वोपलसारिका ॥ १५ ॥ अष्टलोह रसा वज्री हरिद्रा तालकं शिला ॥ एताश्चौषधयो दिव्य जयार्थं संग्रहेद्बुधः ॥ १६ ॥ सूर्येंदुग्रहणे प्राप्ते दीपोत्सवदिनत्रये ॥ पुष्यमूलार्कयोगे च महानवमिवासरे ॥ १७ ॥ खादिरेण च कीलेन प्रोद्धरेत्ता महौषधीः ॥ बलिपूजाविधानेन सर्वकर्मसु सिद्धिदाः ॥ १८ ॥

तत्र मंत्रः ॥ येन त्वां खनते ब्रह्मा इंद्रो विष्णुर्महेश्वरः ॥ तेनाहं खनयिष्यामि तिष्ठ तिष्ठ महौषधि ॥ १९ ॥ तदोद्धृता कटीसूत्रं शिरः प्रभृतिषु स्थिता ॥ त्रिदशैरप्यवध्योऽसौ युद्धे चैव चतुर्विधे ॥ २० ॥ इति यामले औषधानि ॥

वज्री चंडी च चक्री च त्रिशूली मुद्गरी तथा ॥ देहस्था समरे पुंसां सर्वायुधनिवारिणी ॥ २१ ॥ गृहीतं पुष्यनक्षत्रे अपामार्गस्य मूलकम् ॥ लेपमात्रेण वीराणां सर्वशस्त्रनिवारणम् ॥ २२ ॥ अंजनः कांचनारश्च चंपकोश्मंतकः कुहूः ॥ लेपेन विजयी युद्धे वज्रदेहो भवेन्नरः ॥ २३ ॥ खर्जूरीमुखमध्यस्था कटिबद्धा च केतकी ॥ भुजदंडस्थितस्तालः सर्वशस्त्रनिवारणः ॥ २४ ॥ दक्षबाहुस्थितश्चार्को वामेंदुहृदये धरा ॥ रुद्रः पृष्ठस्थितो युद्धे वज्रदेहो भवेन्नरः ॥ २५ ॥ त्रिलोहवेष्टितं कृत्वा रसं वज्राभ्रसंयुतम् ॥

वक्त्रस्थं च करस्थं च सर्वायुधनिवारणम् ॥ २६ ॥ गिरिकर्णीं शमीं गुंजां श्वेतवर्णां समाहरेत् ॥ चन्दनेनान्विताः सर्वास्तिलकेन जयी रणे ॥ २७ ॥ अधः पुष्पी शिखा चैव श्वेता च गिरिकार्णिका ॥ गोरोचनसमायुक्तं तिलकं शत्रुमोहनम् ॥ २८ ॥ कनकार्कवटो वह्निः षडिंदुः पंचमस्तथा ॥ करोति तिलकं यस्तु पश्येत्तं पंचधा रिपुः ॥ २९ ॥ कृष्णसर्पकपालं तु चितामृत्तिकयान्वितम् ॥ सितगुंजां वपेत्तत्र तस्या मूलं समाहरेत् ॥ ३० ॥ कृततिलकं भटं दृष्ट्वा पश्येत्स्वं श्वावृतं रिपुः ॥ श्वगणैर्भक्ष्यमाणं तु पातितं च ततो भुवि ॥ ३१ ॥ छाया यस्य जले जाति संग्राह्यः काशमर्दकः ॥ अनेन तिलकेनारिः कूपं वापीं प्रपश्यति ॥ ३२ ॥ इति स्वरोदये तिलकम् ॥

ब्रह्मदंडी च कौमारी ईश्वरी वैष्णवी तथा ॥ वाराही वज्रिणी चंडी महालक्ष्मीस्तथैव च ॥ ३३ ॥ एताश्चौषधयो दिव्यास्तथैता मातरः स्मृताः ॥ हृदि गुल्फे करे बद्धाः सर्वशस्त्रनिवारिकाः ॥ ३४ ॥ इति यामले ढक्काः ॥

वंगसीसकशुक्लाभ्रहेमतारसमन्वितैः ॥ वज्रायसादिभिर्युक्तः क्रियते पारदो रसः ॥ ३५ ॥ वज्राणां द्रावणं वक्ष्ये पारदस्य च बंधनम् ॥ लघुद्रावं च लोहेषु संयोगार्थं परस्परम् ॥ ३६ ॥ अस्थिशृंखलमध्यस्थं कृत्वा वज्रं निरुन्धितम् ॥ जलभांडे विनिक्षिप्य स्वेदयेद्दिनसप्तकम् ॥ ३७ ॥ वंगिकारससंघृष्टं नष्टविष्टं तु पारदम् ॥ ठिक्काकंदस्य मध्यस्थं बंधनार्थं ततः पुटे ॥ ३८ ॥ रेतितं लोहचूर्णं तु टंकणेन तु भावितम् ॥ लघुद्रावि भवेद्देवं

ताम्रपात्रे न संशयः ॥ ३९ ॥ सर्वांस्तानेकतः कृत्वा मुखमध्यस्थिता भवेत् ॥ गुटिका जायते रम्या नाम्नी वज्रांगसुन्दरी ॥ ४० ॥ मुखस्था सिद्धिदा प्रोक्ता जरामृत्युविनाशिनी ॥ संग्रामे विजयी वीरो वज्रदेहो महाबलः ॥ ४१ ॥ सर्वलोकप्रियो नित्यं नारीणां वल्लभस्तथा ॥ गुटिकेयं समाख्याता यथोक्ता ब्रह्मयामले ॥ ४२ ॥ इति वज्रांगसुन्दरी गुटिका ॥

सिंही व्याघ्री मृगी हंसी चतुर्धैवं कपर्दिका ॥ एतासां लक्षणं वक्ष्ये प्रभावं च यथाक्रमम् ॥ १ ॥ सिंही सुवर्णवर्णा च व्याघ्री धूम्रा सरेखिका ॥ मृगी तत्र विजानीयात्पीतपृष्ठी सितोदरी ॥ २ ॥ हंसी जलतरा श्वेता विदंता नातिदीर्घिका ॥ एवं विशेषान्विज्ञाय ततः कर्म समाचरेत् ॥ ३ ॥ औषधी सिंहिका नाम तस्य मूलस्य यो रसः ॥ सिंही कपर्दिका मध्ये क्षेप्यस्तन्मूलसंयुतः ॥ ४ ॥ पिधाय वदनं तस्याः सिक्थेन च समन्वितः ॥ अस्यां वक्त्रस्थितायां तु सिंहवज्जायते नरः ॥ ५ ॥ मदोन्मत्ता गजास्तस्य दर्शनेन पराङ्मुखाः ॥ रणे राजकुले द्यूते विवादे चापराजितः ॥ ६ ॥ इति सिंही ॥

व्याघ्रीरसेन संघृष्टः पारदो मूलसंयुतः ॥ पूर्ववत्साधयेद्व्याघ्रीं फलं चैव तथाविधम् ॥ ७ ॥ इति व्याघ्री ॥

मृगसूत्रेण[1] संभिन्ना मृत्तिका रससंयुता ॥ मृगधिष्ण्ये क्षिपेन्मृग्यां तस्याः फलमतः शृणु ॥ ८ ॥ मुखमध्ये स्थितायां च वशी भवति मानवः ॥ रतिकाले मुखस्थायां बालाप्राणहरो नरः ॥ ९ ॥ इति मृगी ॥

---

१ मृगमूत्रेण इति पा० ।

हंसपादीरसैर्घृष्टः पारदो मूलसंयुतः ॥ हंसीमध्ये क्षिपेद्धीमान् मुखस्था सर्वसिद्धिदा ॥ १० ॥ ग्रहाः पीडां न कुर्वंति दुष्टारिष्टं तथैव च ॥ स्थावरं जंगमं चैव विषं नश्यति तत्क्षणात् ॥ ११ ॥ इति हंसी ॥ इति यामलीये स्वरोदये कपर्दिका समाप्ता ॥

कृत्तिका च विशाखा च भौमवारेण संयुता ॥ तद्दिने घटितं शस्त्रं संग्रामे जयदायकम् ॥ १ ॥ इति यामले योगघटितशस्त्राणि ॥ अपामार्गरसेनैव यानि शस्त्राणि लेपयेत् ॥ जायंते तानि संग्रामे वज्रसाराणि निश्चितम् ॥ १ ॥ इति शस्त्ररक्षा ॥

विद्युत्पातमृतास्थीनि पेषयेत्करकांबुना ॥ अनेन लेपनं कुर्यात् सनाहफलकेपि वा ॥ २ ॥ तत्र लग्नानि शस्त्राणि त्रुटंति च नमंति च ॥ न भिंदंति शरीराणि पुष्पाणीव मृदूनि च ॥ ३ ॥ इति यामले शस्त्रमोटनम् ॥

कृष्णसर्पशिरांस्यष्टौ विषं पंचपलानि च ॥ छुछुंदरीवसाष्टौ च तथाच गृहगेधिका ॥ १ ॥ कृष्णस्य वृश्चिकस्याष्टौ कपिकच्छूः पलाष्टकम् ॥ द्वे पले हरितालस्य कृकलासरसः पलम् ॥ २ ॥ लांगलीकरवीराभ्यां त्रीणि त्रीणि प्रकीर्तिताः ॥ एतेषां शोधितं कल्कं भल्लातकसमायुतम् ॥ ३ ॥ सर्वेषामेव शस्त्राणां लेपोयं समुदाहृतः विद्धास्तु तैर्ये मनुजास्त्यजंते जीवितं ध्रुवम् ॥ ४ ॥ रक्तकंचुकया नारी रक्तप्रावरणा च या ॥ नटदारुसमायुक्ता पर्वतानपि साधयेत् ॥ ५ ॥ गृहीत्वा मक्षिकां नीलां षड्बिंदुकीटकान्विताम् ॥ शस्त्रलेपेन घाताद्धि जायंते कीटका व्रणे ॥ ६ ॥ इति स्वरोदये शस्त्रलेपः ॥

षड्विंशत्या चतुःषष्ट्या शतेनाष्टोत्तरेण वा ॥ मयूरोलूकपक्षाणां तन्मानं ग्रंथिपिच्छिका ॥ १ ॥ ग्रहणे मृतिपर्यंतं रक्तसूत्रेण वेष्टयेत् ॥ इष्टमंत्रं जपेत्सत्यं सिद्धं रणेऽरिनाशनम् ॥ २ ॥ निसर्गमूलजातेन गच्छ गच्छ परं ध्रुवम् ॥ सर्वोच्चस्थानगो धीरःस्वसैन्यविजयावहः ॥ पैच्छिकस्य विधिश्चायं ब्रह्मयामलभाषितः ॥ ३ ॥ इति यामले पैच्छिकविधिः ॥

लांगली ब्रह्मदंडी च कृष्णोन्मत्तरसान्विता ॥ मर्दयित्वाविकं चर्म पश्चाद्यंत्रं समालिखेत् ॥ १ ॥ काकरक्तं तथा विष्टा चितांगारहलाहलम् ॥ काकपिच्छस्य लेखिन्या लिखेद्यंत्रं यमार्गलम् ॥ २ ॥ मध्यबीजस्य मध्यस्थं शत्रुनाम ससैन्यकम् ॥ बाह्ये तु वायुबीजेन वेष्टयेत्त्रिगुणं पुनः ॥ ३ ॥ वायुमंडलगं कृत्वा वायुबीजेन रंजिकाम् ॥ द्वादशस्वरसंयुक्तं वेष्टयेत्सव्यमार्गतः ॥ ४ ॥ ताम्रकस्यास्य नादेन व्याकुलीभूतमानसाः ॥ बलं मुक्त्वा महावीराः पलायंते महारणात् ॥ इति ताम्रकविधिः ॥

हेमायस्त्रपुरौप्याणां समैर्भागैस्ततः पुनः ॥ द्वादशघ्नेन[1] ताम्रेण कारयेज्जयकाहलम् ॥ १ ॥ काहलीरससँल्लिप्तां वादयेत्तां रणांगणे ॥ कृत्वा नादं प्रविश्यंति बलिष्ठा अतिशत्रवः ॥ २ ॥ इति यामले काहलविधिः ॥

ताम्रकस्य विधानं तु ढक्कायामपि कारयेत् ॥ तथैव फलमप्युक्तं समरांगणभूमिषु ॥ १ ॥ इति यामले ढक्काविधिः ॥

तुंबिनी चित्रकं दंडी कृष्णोन्मत्तरसान्विता ॥ मार्जयेन्मौरजं चर्म सप्तवारान्पुटद्वयम् ॥ १ ॥ दंडी च चित्रका दंती लज्जालुरस-

---

१ द्वादशांशेन इति पा० ।

संयुता ॥ मुखे विमर्दयेत्तेन जायते वाद्यभाजनम् ॥ २ ॥ ब्राह्मी जाती कुमारी च विशुद्धस्मोदकान्विता ॥ इष्टमंत्राभिजप्तं तु जयार्थं वाद्यभाजनम् ॥ इति मुरजविधिः ॥

अग्निहोत्रश्मशानांत्यजातिगेहसमुद्भवम् ॥ भस्मत्रितयमादाय कर्तव्यं तस्य कुट्टनम् ॥ १ ॥ इंद्रवृक्षमयं कार्यं मुसलोलूखलादिकम् ॥ चतुरस्रे च पद्मे च द्वारहीने च मंडले ॥ २ ॥ स्थापित्वो लूखले तत्र कुर्युस्तद्भस्मकुट्टनम् ॥ चतुर्वर्णोद्भवाः कन्याश्चतुः षष्टिप्रमा-णतः ॥ ३ ॥ चतुर्विंशतिसंख्यानां रासगीतेन संयुतम् ॥ तं रासं संप्रवक्ष्यामि सर्वं मंत्रमयं शुभम् ॥ ४ ॥ ॐ कालकुकुरुरुडु सुसु-दुयंतदुदुसुत्तिडव भणुभल्लिकरं तडीकं एहाएहं किं पिछिएह मंसंड इसुग्जउसुग्रड इति रासगीतम् ॥

एतद्भस्मकृतां रेखां लंघयंति न वैरिणः ॥ क्षिप्यते च रिपोः सैन्यं भंगमायाति तत्क्षणात् ॥ १ ॥ इति भस्माधानम् ॥ श्रोत्रियब्राह्मणः कारुण्यं करोति ॥ किं स्नानैः किं प्रोक्षणैर्मलं गतं गतमेव ॥ मारणे मोहने स्तंभे विद्वेषोच्चाटने वशे ॥ एकं यमार्गलं यंत्रभेदेन बहुधा स्थितम् ॥

द्वादशारचक्रम् ॥




द्वादशारं लिखेच्चक्रं वृत्तत्रयविभू-षितम् ॥ उष्ट्रीमंत्रं च तद्बाह्ये यम-श्लोकं च मध्यतः ॥ ॐ ह्रीं ष्ट्रींवि-कटदंष्ट्रानन हुंफट् ॥ उष्ट्रीमंत्रमिमं जाप्यं दशसाहस्रसंख्यया ॥ मध्वा-ज्याक्तै रक्तपुष्पैः सहस्रं होमये-

त्ततः ॥ १ ॥ ततः सिद्धो भवेन्मंत्रो यथेप्सितफलप्रदः ॥ यस्य प्रभावमात्रेण शत्रवो यांति संक्षयम् ॥ २ ॥ इत्युष्ट्री ॥

यमराजस्य पद्यं तु प्रोच्यमानं मया शृणु ॥ यमराजसदोमेयय-भेदोरुणयोदय ॥ यदयोनिरयक्षेययक्षेयंवनिरामय ॥ ३ ॥ इति यमश्लोकः ॥

इमं यमश्लोकं द्वात्रिंशत्सहस्राणि जपेत् ॥ घृतमधुरक्तपुष्पैः सहस्रकं होमयेत् ॥ ततः सिद्धो भवति ॥ मनसेप्सितानि कार्याणि करोति ॥ चितागारविषं रक्तं कृष्णोन्मत्तरसस्तथा ॥ एतैर्नरास्थिलेखिन्या यंत्रं प्रेतपटे लिखेत् ॥ ४ ॥ साध्यनाम च तन्मध्ये हूं च राजिकया कृताम् ॥ यमरूपमिदं साक्षान्महिषासनगं कुरु ॥ ५ ॥ कृष्णाष्टम्यां चतुर्दश्यां गंतव्यं पितृमंदिरे ॥ नग्नो मुक्त-शिखो भूत्वा मद्यमांसैः प्रपूजयेत् ॥ ६ ॥ क्षिप्तोच्छिष्टशरावेषु कृष्णसूत्रेण वेष्टयेत् ॥ श्मशानभूमिमध्यस्थः सप्ताहान्मारयेद्रिपुम् ॥ ७ ॥ इति स्वरोदये मारणविधिः ॥

रोचनां कुंकुमं चंद्रं कृष्णोन्मत्तरसान्वितम् ॥ रोहितोद्भवलेखिन्या भूर्जपत्रे लिखेदिदम् ॥ १ ॥ साध्यनाम च तद्गर्भे बाह्ये चैकाररं-जिका ॥ वह्निमंडलगं कृत्वा रक्तसूत्रेण वेष्टयेत् ॥ २ ॥ सिक्थकेनावृतं कृत्वा सुराकुंभे विनिक्षिपेत् ॥ पूजयेद्रक्तपुष्पैश्च सप्ताहान्मोहयेद्ध्रुवम् ॥ ३ ॥ इति स्वरोदये मोहनविधिः ॥

शिलातालहरिद्राश्च मेषमूत्रसमन्विताः ॥ कोकिलाक्षस्य लेखिन्या नीलरक्त पटे लिखेत् ॥ १ ॥ साध्यनाम च तन्मध्ये रंजिकाक्कं निवेशयेत् ॥ पर्व-ताकृतियंत्रं च शिलातलनिवेशितम् ॥ २ ॥ पूजयेत्पीतपुष्पैस्तु कुंकुमेन च

वा पुनः ॥ स्तंभनं देहमनसोः सप्ताहाज्जायते रिपोः ॥ ३ ॥ इति यामले स्तंभनम् ॥

निंबाक्षचित्रकैस्तुल्यैर्महिषीरुधिरान्वितैः ॥ प्रेतवस्त्रेर्कलेखिन्या लिखेद्यंत्रमिदं वरम् ॥ १ ॥ साध्यसाधकयोर्नाम परस्परपराङ्मुखम् ॥ व्यतिक्रमाक्षरं चापियंत्रमध्ये निवेशयेत् ॥ २ ॥ रंजिकाफट्समायुक्तं महिषाश्वांतरे कृतम् ॥ निंबवृक्षतले न्यस्तं सप्ताहाद्द्वेषकारकम् ॥ ३ ॥ इति स्वरोदये विद्वेषण विधिः ॥

काकविड्विषरक्तेन शिवध्वजपुटे शुभे ॥ काकपक्षस्य लेखिन्या लिखेद्यंत्रं स्वरोदयी ॥ १ ॥ साध्यनाम लिखेत्तत्र चतुष्कोणेषु मध्यगम् ॥ सविसर्ग खकारेण त्रिरुच्चारेण रंजिका ॥ २ ॥ उष्ट्रीरूढं कृतं यंत्रं बद्धं काकगले ततः ॥ सयंत्रे वायसे मुक्ते ततस्तूच्चाटनं भवेत् ॥ ३ ॥ इति यामले उच्चाटन विधिः ॥

कालेयरोचनाचंद्रैर्लज्जालुगजवारिभिः ॥ मदनोद्भवलेखिन्या यंत्रं भूर्जे लिखेदिदम् ॥ १ ॥ साध्यनाम च तन्मध्ये क्लींकारं रंजिकान्वितम् ॥ नरा कृतिकृतं यंत्रं सिक्थकेन च वेष्टयेत् ॥ २ ॥ त्रिमधुरे स्थापितं च रक्त पुष्पैश्च पूजितम् ॥ सप्तरात्रेण तद्यंत्रं वशीकरणमुत्तमम् ॥ ३ ॥ इति स्व रोदये वशीकरणविधिः ॥ एवं सर्वेषु कार्येषु विधियुक्तं तु कारयेत् ॥ तत स्तु सिध्यते यंत्रं सत्यं सत्यं न संशयः ॥ १ ॥ हनूमंतं कालरात्रिं महा मारीं खगाधिपम् ॥ भैरवं क्षेत्रपालं च फणींद्रं गणनायकम् ॥ २ ॥ पताकायां लिखेदेतदष्टकं पूर्वसूचितम् ॥ ततः सारतरं ज्ञात्वा प्रथमं विस्तराद्वदेत् ॥ ३ ॥ आरण्यपलहीतूलं संगृहीतं शुभे दिने ॥ कन्याकर्तितसूत्रेण दिने वस्त्रं विनिर्मितम् ॥ ४ ॥ सार्धहस्तत्रयं

श्वेतं शेषं तत्र प्रदापयेत् ॥ हरिद्राहरितालेन शैलेयसंयुतेन वा ॥ ५ ॥ लिखेद्धनुमतो रूपं पंचद्व्यंगुलमानकम् दीर्घदंतं करालांगं दीर्घबाहुनखान्वितम् ॥ ६ ॥ वामहस्तेध्वजं कुर्याद्दक्षिणे मेरुपर्वतम् बद्धक्रमं महारौद्रं जिह्वालांगूलळोलितम् ॥७॥ रक्तवस्त्रं सकौपीनं शिखामुकुटधारिणम् ॥ हृत्पद्मे विन्यसेत्तस्य निजनाथस्य नामकम् ॥ ८ ॥ हनूमतो लिखेत्तत्र मूलमंत्रं दलाष्टके ॥ मालामंत्रेण तद्बाह्ये सव्यमार्गेण वेष्टयेत् ॥ ९ ॥ ॐ ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः हनूमतोयं मूलमंत्रः ॥ ॐ वज्रकाय वज्रतुंड कपिल पिंगल ऊर्ध्वकेश महाबलपराक्रम रक्तमुख तडिज्जिह्व महादंष्ट्रोत्कट कटतीव्रकपालिन् महादृढप्रहार लंकेश्वर महासेतुबंधन शैलप्रवाह गगनचर एह्येहि भगवञ्शतसहस्रसूर्यसमानरूप भैरवाज्ञापयेति एह्येहि दीर्घलांगलेन अमुकशत्रुं वेष्टय वेष्टय भंजय २ खं खं रे रे हुं फट् ॥ इति मालामंत्रः समाप्तः ॥ गात्रेषु दापयेद्रेखैश्चतुष्षष्टिप्रमाणकैः ॥ षड्वर्णान्विन्यसेच्चापि सरनाग्रे द्विरेखया ॥१॥ स्तंभिनी मोहिनी चैव रोधिनी भंजिनी तथा ॥ गात्रेषु विन्यसेद्देवीः प्रणवादिनमोंतगाः ॥ २ ॥ लकारं पर्वते दद्यात्पुच्छदंडे बुकारकम् ॥ चुकारं मुखमध्यस्थं हुंकारं च तदग्रतः ॥ ३ ॥ वदने मस्तके गुह्ये मूलमंत्रं न्यसेद्बुधः लांगूले मातृकां वापि क्षादिकान्प्रणवादिकम् ॥ ४ ॥ मस्तकोपरि कर्तव्या मातरो ग्रहसंयुताः ॥ अष्टम्यां च चतुर्दश्यां प्रतिष्ठां कारयेत्ततः ॥ ५ ॥ सुपर्वे चैव नक्षत्रे ताराचंद्रबलान्विते ॥ रक्तांबरधरो मंत्री रक्तगंधानुलेपनः ॥ ६ ॥ रक्तपुष्पकृताटोपः संपत्सन्नद्धविग्रहः ॥ उद्धरेदक्षतैः पद्ममष्टपत्रं सुशोभनम् ॥ ७ ॥ स्तंभिनी मोहनी चैव रोधिनी भंजिनी तथा ॥ पूर्वादितश्चतुर्दिक्षु क्रमाद्देवीर्निवेश-

येत् ॥ ८ ॥ उड्डीयाणादिकान्पीठान्स्थापयेदीशकोणतः ॥ भरवीं भैरवां सिद्धिं ग्रहा नागा दिशाधिपाः ॥ ९ ॥ प्रत्येकं क्रमयोगेन न्यसेत्पत्राष्टके बुधः ॥ पूजा चैव क्रमेणैव कर्तव्या स्वरमंडले ॥ १० ॥ नानाप्रकारशोभाढ्ये कर्पूरागरुवासिते ॥ चंद्रोदयकृताटोपे ध्वजाष्टकविभूषिते ॥ ११ ॥ मंडलस्यास्य मध्ये तु कुर्यादूर्ध्वं ततः पटम् ॥ स्नापयेत्पंचगव्येन दर्पणोदरमध्यगम् ॥ १२ ॥ अग्निमारुतबीजेन विदध्यादासनं ततः ॥ मूलमंत्रं न्यसेन्मूर्ध्नि हनुदेवस्य मांत्रिकः ॥ १३ ॥ ॐ हां हूं हनुमते नमः इति मूलमंत्रः ॥

अंगेषु विन्यसेदस्य षट्स्वरान् दीर्घसंज्ञकान् ॥ ककारादिक्षकारांतान् स्तंभिन्यादिषु विन्यसेत् ॥ १४ ॥ पंचोपचारमिश्रैश्च मद्यमांसाशनैस्ततः ॥ पूजयेत्सकलान्देवान्प्रणवादिनमोंतकान् ॥ १५ ॥ पूजां कृत्वा विधानेन ध्यानं कृत्वा विचक्षणः ॥ सुशोभनप्रयोगेण सिद्धिर्भवति सर्वदा ॥ १६ ॥ विचित्रवस्त्रसंयुक्तं बाह्याभरणभूषितम् ॥ रक्तवस्त्रं महाभीमं सर्वलोकभयंकरम् ॥ १७ ॥ ध्यानं लक्षं जपेत्तस्य मूलमंत्रं नवाक्षरम् ॥ मध्वाज्यरक्तपुष्पैश्च होमं कृत्वा दशांशतः ॥ १८ ॥ कुमारीर्भोजयेत्तत्र चतुष्षष्टिप्रमाणतः ॥ आचार्ये दक्षिणां दद्यान्नगरं ग्रामखेटकम् ॥ १९ ॥ काष्ठपाषाणधातूनां पूजा या निर्मितापि च ॥ प्रतिष्ठा क्रियते तत्र देशे ग्रामे पुरेऽपि वा ॥२०॥ न दुर्भिक्षं भवेत्तत्र न च व्याधिभयं भवेत् ॥ परचक्रागमो नैव व्याधिभिश्च न पीड्यते ॥२१॥ न पतत्यशनिस्तत्र न च रोगभयं भवेत् ॥ डाकिनी भूतवेतालाः पिशाचोरगराक्षसाः ॥ २२ ॥ हनूमतः प्रभावेण

विषपीडा न जायते ॥ हनूमतः पताकेयं गजाश्वोपरि संस्थिता ॥ २३ ॥ धारिता सा प्रयत्नेन रिपुसैन्यस्य सन्मुखी ॥ हनूमतः पताकेयं गजा श्वादीन् पराक्रमेत् ॥ २४ ॥ तस्या दर्शनमात्रेण व्याकुलीभूतमानसाः ॥ नश्यंति रिपवस्तस्य सिंहस्येव यथा मृगाः ॥ २५ ॥ इति स्वरोदये हनुमत्पताका ॥

अथ रक्षां प्रवक्ष्यामि सर्वसिद्धिप्रदायिकाम् ॥ स्तंभिनीं शत्रुसैन्यस्य भूभुजादिवशंकरीम् ॥ १ ॥ रोचनाकुंकुमाभ्यां च भूर्जपत्रे सुशोभने ॥ २ ॥ सुवर्णमयलेखिन्या यंत्रमष्टदलं लिखेत् ॥ साध्यनाम च तन्मध्ये मूलमंत्रं दलाष्टके ॥ ३ ॥ मालामंत्रश्च तद्बाह्ये त्रिधा ह्रींकारवेष्टितम् ॥ त्रिलोहवेष्टितं कृत्वा कटिबाहुशिरस्थितम् ॥ ४ ॥ धारयेद्यस्त्विमां रक्षां तस्य विघ्नं न जायते रणे राजकुले द्यूते व्यवहारे पराजये ॥ ५ ॥ शस्त्रं नाक्रमते तस्य वज्रदेहो महाबलः ॥ उपसर्गादिदोषेषु विषे स्थावरजंगमे ॥ ६ ॥ न भयं विद्यते तस्य स्त्रीणां चैवातिवल्लभः ॥ तस्य पीडां न कुर्वंति ग्रहाश्चैव उपग्रहाः ॥ ७ ॥ न तेषां दुष्कृतं किंचिन्न भयं तस्य विद्यते ॥ जलजाग्निभयं नास्ति व्याघ्रतस्करजं भयम् ॥ ८ ॥ ज्वराः सर्वे प्रणश्यंति त्र्याहिकाद्या विशेषतः ॥ इयं हनुमतो रक्षा सर्वोपद्रवनाशिनी ॥ ९ ॥ इति स्वरोदये हनुमद्रक्षाविधिः ॥ पिच्छाकारं पटं कृत्वा पताकावद्विधानतः ॥ चंद्रार्कग्रहणे प्राप्ते हनुमंतं लिखेत्ततः ॥ १ मातृकायां जपेत्तत्र यावन्मुक्तिः प्रजायते ॥ होमयेच्च दशांशेन तिलसर्षपकादिभिः ॥ २ युद्धकाले च तत्पिच्छं गजाश्वोपरि संस्थितम् ॥ दर्शनं शत्रुसैन्यस्य भंगो भवति निश्चितम् ॥ ३ ॥ इति स्वरोदये हनुमत्पिच्छकविधिः ॥ मदनेन हनुं कृत्वा पूर्वलक्षणलक्षितम् ॥ वर्तितं चैव लांगूलं कारयेत्साधकेश्वरः ॥ १ ॥ परचक्रस्य ये मुख्यालांगूलस्थानुकारिणः ॥

गजाश्वरथयानानि बहिःस्थानि तु कारयेत् ॥ २ ॥ पूर्वमंत्राक्षरैर्भव्यैँ लांगूलेन तु वेष्टयेत् ॥ वेष्टयेत्प्रतिमां सर्वामापादतलमूर्धजाम् ॥ ३ ॥ स्थापयेत्पूर्वविधिना परचक्रस्य सन्मुखम् ॥ दर्शनात्परचक्रस्य भंगमायाति तत्क्षणात् ॥ ४ ॥ अथवा होमयेत्तत्र लांगलीलवणं विषम् ॥ राजिका तुषकेशास्थित्र्यूषणं निंबमेव च ॥५॥ षट्कोकणकुंडमध्ये तु निंबाक्षचित्रकोद्भवाः ॥ समिधो ज्वालयेत्तत्र नैर्ऋत्याभिमुखे स्थितः ॥ ६ ॥ होमयेद्धनुमंत्रेण सहस्रैकं दिने दिने ॥ दिनसप्तकमध्ये तु शत्रौ पीडा ततो भवेत् ॥ ७ ॥ अंगदाहो महापीडा विस्फोटो गंधलूतिका ॥ म्रियते नात्र संदेहः संग्रामं कुरुते यदि ॥ ८ ॥ इति स्वरोदये हनुमन्मंत्रहोमविधिः ॥

मालामंत्रं पठेद्यस्तु हनूमतो रणांगणे ॥ तस्यांगं वज्रवद्युद्धे हनूतुल्यपराक्रमम् ॥ १ ॥ ॐ ह्रींह्रांह्रेंह्रैंह्रौंह्रः इति मालामन्त्रः ॥ पुनरन्यत्प्रवक्ष्यामि वेधं परमदुर्लभम् ॥ मांडूकं नाम विख्यातं सर्वशास्त्रेषु गोपितम् ॥ १ आनयेन्निर्व्रणं शुद्धं भूर्जपत्रं सुशोभनम् ॥ तस्मिंस्तु खररक्तेन वामकर्णोद्भवेन तु ॥ २ ॥ चितांगारविषैर्युक्तं कृष्णोन्मत्तरसेन च ॥ कुलिके विलिखेद्यंत्रं नैर्ऋत्याभिमुखस्थितः ॥ ३ ॥ प्रेतवच्चिंतयेत्साध्यं मुक्तकेशं विवस्त्रकम् ॥ युद्धायुधैः कृतं यंत्रं कृत्वा मध्येरिनामकम् ॥ ४ ॥ तन्नाम रेखया भिंद्यात्कोपाविष्टस्तु साधकः ॥ पीडयित्वा तु यंत्रं तु शालूरस्य मुखे क्षिपेत् ॥ ५ ॥ कीलयेत्पुष्टलोहेन शल्यकांडमयेनवा ॥ आनयेदारनालं च सप्तगेहोद्भवं ततः ॥ ६ ॥ तन्मध्येदर्दुरं क्षिप्त्वा तद्भांडं मुद्रयेत्ततः ॥ तापयेद्युद्धकालेपि चितांगारानलोपरि ॥ ७ ॥ गात्रस्तंभो मनःस्तंभो वायुपीडा तथोदरे ॥ म्रियतेरिर्न संदेहो यदि शक्रसमो रणे ॥ ८ ॥ इति स्वरोदये मंडूकयंत्रविधिः ॥

शिलातालहरिद्राभिरर्कपत्रयुगे लिखेत् ॥ कोकिलाक्षस्य लेखिन्या स्तंभांतं रिपुनामकम् ॥ १ ॥ त्रिठकारैः समावेष्टय तद्बाह्ये पार्थिवं पुरम् ॥ वज्राष्टक समोपेतं रेखाषोडशदीपितम् ॥ २ ॥ मायाबीजेन संवेष्टय त्रिधांकुशनिरोधितम् ॥ तद्यंत्रं योजयित्वा तु कंटकैः कीलयेत्ततः ॥ ३ ॥ क्षिपेद्वल्मीकमध्ये तु पाषाणैस्तत्र पूरयेत् ॥ पश्चात्समारभेद्युद्धं विवादं साध्यसाधकः ॥ ४ ॥ गात्रस्तंभो भवेदेवं मनस्तंभस्तथैव च ॥ जिह्वास्तंभो विवादे च साध्योऽसौ जायते ध्रुवम् ॥ ५ इति स्तंभनयंत्रविधिः ॥

अर्कपत्रयुगे नाम चितांगारेण वेष्टयेत् ॥ पूर्ववत्कीलयेत्पश्चाच्छिलयाच्छादयेद्दृढम् ॥ १ ॥ एतद्यंत्रप्रभावेण मनोभंगो भवेत्पुनः ॥ अथ प्रविश्य संग्रामे म्रियतेऽरिर्न संशयः ॥ २ ॥ इति शत्रुभंगविधिः ॥

रेफयुक्तं हकारं च वषट्स्वरविभूषितम् ॥ आर्तनामोदरे कृत्वा ह्रींकारं रेफसंयुतम् ॥ नादबिंदुसमायुक्तमोंकारं संपुटे स्थितम् ॥ १ ॥ दिक्षु वज्राष्टसंभिन्नं षोडशस्वरवेष्टितम् ॥ वज्राग्रेषु च सर्वेषु मलमंत्र यथेप्सितम् ॥ २ ॥ आदिबीजोदरे नाम दत्त्वा तस्य परिस्फुटम् ॥ लिखित्वा वेष्टितं सर्वं मायया वेष्टितं त्रिधा ॥ ३ ॥ कलिमंडलदंडाख्यं यंत्रं विघ्नविनाशनम् ॥ श्वेतांबरधरो मंत्री शुभध्यानपरायणः ॥ ४ ॥ उत्तराभिमुखो भूत्वा लिखेद्यंत्रं शुभोदये ॥ कांस्यभाजनमध्ये तु चंदनेन सुगंधिना ॥ ५ ॥ लिखेद्दर्भस्य लेखिन्या मुष्टित्रयप्रमाणतः ॥ सुगंधिकुसुमैः श्वेतैरष्टोत्तरशतेन च ॥ ६ ॥ अर्चयेद्विधिवद्यंत्रं फलं यावद्दिने दिने ॥ लिखितं पूजितं चैव प्रक्षालयेज्जलेन तं ॥ ७ ॥ तज्जलं पीतमात्रं तु परविद्याविनाशनम् ॥ शाकिनीभूतवेतालाः पिशाचोरगराक्षसाः ॥ ८ ॥ भवंति निष्प्रभाः सर्वे यंत्रस्यास्य प्रभावतः ॥

शूलं विष्टंभिकाजीर्णं लूताविस्फोटकादयः ॥ ९ ॥ अभिचारकृतो दोषो विषं स्थावरजंगमम् ॥ गर्भे च वेदना यस्या गूढगर्भस्तु यो भवेत् ॥१०॥ एवं रोगैस्तु दुःखार्ताः स्वस्थाः स्युः सर्वजंतवः ॥ वंध्यापि लभते पुत्रं मृतवत्सा च जीवसूः ॥ ११ ॥ दुर्भगा सुभगा चैव यंत्रस्यास्य प्रभावतः ॥ कृत्याः प्रशमनं यांति मारुतश्लेष्मपैत्तिकाः ॥ १२ ॥ जीर्णज्वराश्च विषमाः शीतदहज्वरात्मकाः ॥ एवमप्यास्थितं यंत्रं करोति विपुलां श्रियम् ॥१३॥ इति स्वरोदये कलिकुंडलयंत्रविधिः ॥

शांत्यर्थं निजनाथस्य जयार्थं रणकांक्षिणाम् ॥ यंत्रं मृत्युंजयं नाम प्रवक्ष्यामि समासतः ॥ १ ॥ हंसमध्यगतं नाम मृत्युंजयपुटीकृतम् ॥ रक्षरक्ष समायुक्तं बाह्यरेखात्रयावृतम् ॥ २ ॥ चवर्गस्य तृतीयो यो बिंदुषट्स्वरभूषितः ॥ हायंतःसविसर्गश्च मंत्रोयं प्रणवादिकः ॥ ६ ॥ पद्ममष्टदलं बाह्ये जंभाद्या दिग्दले स्थिताः ॥ विदिक्षु प्रणवं न्यस्य पत्रं षोडशकं बहिः॥४॥ स्वराःषोडश दातव्याः प्रत्येकं सर्वतो दिशि ॥ द्वात्रिंशत्पत्रकं पद्मं तद्बाह्ये विनिवेशयेत् ॥ ५ ॥ कादियुक्तौ हसौ वर्णौ स्थापयेत्क्रमशस्ततः ॥ चतुष्षष्टिदलं बाह्ये भैरवाद्यांस्ततो लिखेत् ॥ ६ ॥ भैरवी भैरवा सिद्धिर्ग्रहा नागा दिशाधिपाः ॥ पीठोपपीठ संयुक्तं क्षेत्रपालादिरष्टकम् ॥ ७ ॥ आनयेन्निर्व्रणं भूर्जं ग्रंथिहीनं सुशोभनम् वर्णभेदेन संगृह्य ब्राह्मणादिक्रमेण च ॥ ८ ॥ ककारादित्रिद्रव्येण गोकारस्य त्रयेण च ॥ षड्द्रव्यैर्यंत्रमालिख्य साध्यनामसमन्वितम् ॥ ९ ॥ सवर्णमयलेखिन्या उत्तराभिमुखं निशि ॥ चंद्रवारे लिखेद्यंत्रं मृत्युंजयविधानकम् ॥ १० ॥ अनेन मदनस्थेन कृत्वा लिंगं सुशोभनम् ॥ पंचामृतेन दिव्येन स्नापयेत्सप्तवासरान् ॥ ११ ॥ पश्चाच्च भक्तकं

देयं लक्षैकमयुतं ततः ॥ साध्यनामयुतं मंत्र रक्षार्थमुद्धरेत्ततः ॥ १२ ॥ पूजयेच्छ्वेतपुष्पैश्च कर्पूरागरुचंदनैः छादयेत्पट्टवस्त्रेण सप्ताहाच्छांतिकं भवेत् ॥ १३ ॥ मध्वाज्यं गुग्गुलुं तालश्रीपर्णैः सप्तसर्षपैः ॥ पद्माकारेण कुंडेन होमं कुर्याद्दशांशतः ॥ १४ ॥ शमीदूर्वासमिद्भिश्च रुद्राशाभिमुखस्थितः ॥ मुद्रां च खेचरीं बद्ध्वा स्वाहांतं होमयेत्ततः ॥ १५ ॥ मुच्यंते रोगिणोरोगात्पापात्मा पापवर्जितः ॥ त्यक्त्वा पीडां ग्रहा क्रूराः सौम्यतां यांति नान्यथा ॥ १६ ॥ शाकिनीभूतवेतालाः पिशाचोरगराक्षसा ॥ ज्वरास्तस्य प्रणश्यंति त्र्याहिकैकांतरांदिकाः ॥ १७ ॥ विषं नाक्रमते देहे स्थावरं चाथ जंगमम् ॥ उपविषाणि सर्वाणि निर्विषाणि भवंति च ॥ १८ ॥ अभिचारकृता दोषा ये केचिद्यत्र भूतले ॥ ते सर्वेऽपि क्षयं यांति काष्ठं वह्निगतं यथा ॥ १९ ॥ वैरिणो मित्रतां यांति प्रसादं कुरुते प्रभुः ॥ अवश्या वश्यतां यांति राजस्त्रीक्षुद्रजंतवः ॥ २० ॥ राज्याद्भ्रष्टो लभेद्राज्यं षण्मासस्य प्रयोगतः ॥ अपुत्रो लभते पुत्रं दुर्भगः सुभगो भवेत् ॥ २१ ॥ युद्धकाले कृतं यत्रं विधिनानेन भूपतिः ॥ अर्चयित्वा विशेद्युद्धे त्रिदशैरपि दुर्जयः ॥ २२ ॥ ग्रीवाबाहुशिरःकट्यां धारयंति च ये नराः ॥ कृत्वा रक्षामिदं यंत्रं मृत्युस्तेषां न विद्यते ॥२३॥ इदं मृत्युञ्जयं यंत्रं विघ्नमृत्युविनाशनम् ॥ अप्रकाश्यं मयाख्यातं लोकानां हितकाम्यया ॥ २४ ॥ किं पुनर्बहुनोक्तेन प्रभावेण प्रयोजनम् ॥ एतद्यंत्रकृता रक्षा त्रैलोक्यं वशमानयेत् ॥ २५ ॥ उद्याने च नदीतीरे शुभदेशे शुभे दिने ॥ कृते शांत्युत्तरे काले तल्लिंगं निक्षिपेद्भुवि ॥ २६ ॥ सर्वकामिकयंत्रेषु सिद्धिर्भवति नान्यथा ॥ २७ ॥ इति श्रीनरपतिजयचर्यायां यामलीयस्वरोदये मृत्युंजयनामयंत्रविधिः समाप्तः ॥

अथार्घकांडम् ॥ अर्घकांडं प्रवक्ष्यामि अन्नैः षट्कै रसैः क्रमात् ॥ मासाक्षरं कालाक्षरं प्रश्न सर्वं विमिश्रयेत् ॥ १ ॥ हरेद्दादशभिर्भागं जानीयाच्च न संशयः चैत्राद्यं गणयेद्विद्वान् विषमं हि समं तथा ॥ २ ॥ विषमेअर्घवृद्धिः स्यान्मर्घं च समे भवेत्॥ अकचटतपयशश्चि-पिटाक्षराः शालिगोधूमयुगंधराकला संजायते ॥ आईख घढथफरषाः अधराः ॥ मुद्गा माषातिलाश्चैव अतसी बहु जायते ॥ ईउग-जडदबलसा उत्तराः ॥ मसूरास्तिलका ज्ञेया यवधान्यादयः ॥ इऐघढ-धभवाःवर्तुलाः ॥ आढकी लंकारवीलकंप्रबल्लरी ॥ ओ औ अं अः ङ ञणनमा दग्धाः ॥ दुर्भिक्षं जायतेशीघ्रंनास्ति संदेहकारकम् ॥ ३ ॥ इत्यर्घकांडम् ॥

अथार्घकांडम् । अर्घकांडमिति ॥ १ ॥ २ ॥ ३ ॥ इत्यर्घकांडम् ।

अथार्घं संप्रवक्ष्यामि वर्षमासादिसंभवम् ॥ येन विज्ञानमात्रेण वणिजां सिद्धिरुत्तमा ॥ १ ॥ आश्लेषा स्वातिज्येष्ठार्द्राशततारायमाह्वयम् ॥ दश पंच मुहूर्तानि षट् पंच भानि कीर्तयेत् ॥ २ ॥ प्राजापत्योत्तरा-स्तिस्रो विशाखा च पुनर्वसुः ॥ पंचाद्धानि मुहूर्तानि त्रिंशत्संख्या पराणि च ॥ ३ ॥ ऋक्षभुक्तिप्रमाणेन मुहूर्तैः स्वरसंख्यया ॥ संक्रमो वर्तते यत्र ज्ञेयश्चंद्रांशकस्तथा ॥ ४ ॥ इति द्वितीयार्घकांडम् ॥

अथार्घमिति ॥ १ ॥ २ ॥ ३ ॥ रव्यादीनां गुणा अशुद्धत्वान्नोक्ताः ॥ ४ ॥ इति द्विती-यार्घकांडम् ।

अथातः संप्रवक्ष्यामि यदुक्तं ब्रह्मयामले ॥ सप्तांगराज्यलोकानां वृद्ध्यर्थं ग्रहशांतिकम् ॥ १ ॥ ग्रहपीडा गृहे यस्य युद्धकाले विशे-षतः ॥ न युद्धं तेन कर्तव्यमित्युक्तं ब्रह्मयामले ॥ २ ॥ देशदुर्गे ग्रहाक्रांते समायातेऽरिसंकटे ॥ अवश्यं येन योद्धव्यं तदर्थं शांति-

कं वदेत् ॥ ३ ॥ क्रूरग्रहे समायाते छत्रसिंहासनादिषु ॥ देशाश्वकुंजरादीनां कर्तव्यं ग्रहशांतिकम् ॥ ४ ॥ ग्रहाः पुण्यं ग्रहाः पापं ग्रहा मृत्युपराजयौ ॥ हानिर्मृत्युः सुखं दुःखं व्याधिरारोग्यमेव च ॥ ५ ॥

अथात इति ॥ १ ॥ २ ॥ ३ ॥ ४ ॥ ५ ॥

नरा अरातिरोगैश्च तथा शस्त्रप्रहारकैः ॥ शाकिनीभूतवेतालैः पीड्यंते ग्रहपीडया ॥ ६ ॥ घातपातादिदोषाश्च विकारा दिव्यसंभवाः ॥ राजमित्रप्रकोपाश्च जायंते ग्रहपीडया ॥ ७ ॥ गंडांतमूलजातानां लग्नादौ रिष्टयोगके ॥ दुष्टदेशादिपीडायां गोचरे गोचरे व्यधे ॥ ८ ॥ दुष्टे रिष्टे समायाते कर्तव्यं ग्रहशांतिकम् ॥ ग्रहपूजा तथा होमं स्नानद्रव्याणि कल्पयेत् ॥ ९ ॥ रव्यारौ ताम्रजौ कुर्याज्जीवज्ञौ स्वर्णसन्निभौ ॥ रौप्यौ चंद्रसितौ कार्यौ शेषा लोहमया ग्रहाः ॥ १० ॥

नरा इति । अरातिः पीडा ॥ ६ ॥ ७ ॥ ८ ॥ ९ ॥ १० ॥

अथवा स्वस्ववर्णाभैः पिष्टद्रव्यैश्च कारयेत् ॥ यज्ञोपवीतवस्त्रैश्च स्वग्रहाः परियाजयेत् ॥ ११ ॥ नवमृत्सुरूपां वेदीं कृत्वा हस्तप्रमाणिकाम् ॥ तत्र रव्यादयः स्थाप्याः स्वस्वकृतया यथोक्तया ॥ १२ ॥ मंडलं भास्करं मध्ये शशिनं पूर्वदक्षिणे ॥ त्रिकोणं दक्षिणे भौमे रुद्रे ज्ञं धातुराकृतिम् ॥ १३ ॥ पद्माकारं गुरुं सौम्ये चतुरस्रं भृगुं न्यसेत् ॥ पूर्वस्यां पश्चिमे सौरिं दंडवत्परिकल्पयेत् ॥ १४ ॥ वायव्ये खड्गवत्केतुं राहुं च मकराकृतिम् ॥ एवं विचार्य विलिखेत्पूजयेद्विधिना ततः ॥ १५ ॥ स्ववर्णफलपुष्पाणि नैवेद्यं विविधानि च ॥ नवधा बलिमालाश्च वासांसि नवधा पुनः ॥ १६ ॥

अथवेति । स्वस्ववर्णाभैः रव्यादिग्रहवर्णाभैः ॥ ११ ॥ १२ ॥ १३ ॥ १४ ॥ १५ ॥ १६ ॥

रंजितानि स्ववर्णैश्च गंधधूपादिभिस्तथा दीपाक्षतादिभिः सम्यक् पश्चादावाहयेद्ग्रहान् ॥ १७ ॥

रंजितानीति आवाहयेत् तत्तन्मंत्रैरित्यर्थः । तेषां मंत्राः । ॐ आदित्याय काश्यपेयाय आदितिसूनवे दिव्यमूर्तये यज्ञोपवीतमाल्यधराय आणिमाद्यष्टगुणसंयुक्ताय धीमयाय जगच्च- क्षुषे सर्वलोकपूजिताय इदमर्चनं गृहाण इत्यावाह्येति मंत्रेण पूजयेत् । इति सूर्यमंत्रः ॥ ॐ सोमाय यज्ञोपवीतमाल्यधराय महेश्वरजटामुकुटवासिने ममार्चां गृहाण शांतिं कुरु स्वाहा ॥ इति चंद्रमंत्रः । ॐ अंगारकाय भूमिपुत्राय दिव्यमूर्तये रक्तवस्त्राभरणाय यज्ञोपवीतमाल्यधराय ममार्चनं गृहाण शांतिं कुरुकुरु स्वाहा इति कुजमंत्रः । ॐ बुधाय चंद्रपुत्राय दिव्यमूर्तये हेमाभरणाय यज्ञोपवीतमाल्यधराय ममा० । इति बुधमंत्रः । ॐ बृहस्पतये दिव्यमूर्तये देव- गुरवे पीतवस्त्राभरणधराय यज्ञोपवीतमाल्यधराय ममा० । इति गुरुमंत्रः । ॐ शुक्राय धवल- वस्त्राभरणाय यज्ञोपवीतमाल्यधराय ममा० ।इति शुक्रमंत्रः । ॐ शनैश्चराय दिव्यमूर्तये महारौद्राय कृष्णवस्त्राभरणाय यज्ञोपवीतमाल्यधराय ममा० । इति शनिमंत्रः । ॐ राहवे सैंहिकेयाय दिव्यमूर्तये विवदुष्टमुखाय रक्तदृष्टये सर्गग्रहाय कृष्णवर्णायाधऊर्द्धर्व्यापिने कृष्ण- वस्त्राभरणाय यज्ञोपवीतमाल्यधराय ममार्चनं० इति राहुमंत्रः । ॐ केतुभ्यः एकोत्तरशतेभ्य आदित्यसमवर्णरूपवस्त्राभरणेभ्यो यज्ञोपवीतमाल्यधरेभ्यो समार्चनं गृह्णीत शांतिं कुरुतंकुरुत स्वाहा । इति केतुमंत्रः ॥ १७ ॥

अथ स्तोत्रम् ॥ बंधकपुष्पसंकाश रक्तोत्पलसम प्रभो ॥ लोकनाथ जगदीश क्षांतिं यच्छ प्रभाकर ॥ १८ ॥ शंखकुंदमृणालाभ काश- पुष्पसमद्युते ॥ शशांक रोहिणीभर्त्तः सदा शांतिं प्रयच्छ मे ॥ १९ ॥ पृथिवीगर्भसंभूत बंधुजीवसम प्रभो ॥ शांतिं ददातु मे नित्यं कुमारांगारक प्रभो ॥ २० ॥ शिरीषपुष्पसंकाश पिपिलाशोथवा पुनः ॥ सोमपुत्रो बुधश्चैव सदा शांतिं प्रयच्छतु ॥ २१ ॥ सिंबलीकलिकाकारो भोगप्रकारकारकः ॥ केवलः कांचनाभासा आरोग्यायुःप्रदो बुधः ॥ देवमंत्री महातेजा गुरुः शांतिं प्रयच्छतु ॥ २२ ॥ सितकुंदेंदुसंकाशः शुक्लवस्त्रविभूषितः ॥ शांतिं ददातु वो नित्यं दैत्यमंत्री स भार्गवः ॥ २३ ॥ नीलोत्पलदलश्यामः कृष्णांजननिभोपमः ॥ शनैश्चरग्रहः पुंसां सदा शांतिं प्रय- च्छतु ॥ २४ ॥ अतसीपुष्पसंकाशो नीलांजनसमद्युतिः ॥

शांतिं ददातु वो नित्यं राहुश्चंद्रार्कमर्दनः ॥ २५ ॥ सिंदूररुधिराकारो रक्तपद्मनिभोपि वा ॥ केतुरारक्तवर्णांगः सदा शांतिं प्रयच्छतु ॥ २६ ॥ इति स्तोत्रम् ॥

अथ स्तोत्रम् । बंधूकेति ॥ १८ ॥ १९ ॥ २० ॥ २१ ॥ २२ ॥ २३ ॥ २४ ॥ ॥ २५ ॥ २६ ॥ इति स्तोत्रम् ।

अर्कः पलाशः खदिरो ह्यपामार्गोथ पिप्पलः ॥ औदुंबरः शमी दूर्वा कुशश्च समिधः क्रमात् ॥ २७ ॥ मध्वाज्यगुग्गुलुं रालं तिलाश्च सितसर्षपाः ॥ यवांश्च तैलसंयुक्तान्रक्तपुष्पाणि होमयेत् ॥ २८ ॥ कृत्वा चाष्टदलं कुंडं मेखलात्रयसंयुतम् ॥ होमयेत्तत्र द्रव्याणि मिश्रितानि ग्रहं प्रति ॥ २९ ॥ सूर्यादिभिश्च मंत्रैश्च सम्यक् ध्यानसमन्वितः ॥ शतान्यथ सहस्राणि लक्षाणि नव होमयेत् ॥ ३० ॥ तत्र मंत्राः॥ ॐ ह्रौं ह्रीं ह्रौं सः सूर्याय स्वाहा ॥ ॐ स्रौं स्रीं स्रौं सः सोमाय स्वाहा ॥ ॐ क्रौं क्रीं क्रौं सः कुजाय स्वाहा ॥ ॐ ह्रौं ह्रीं ह्रौं सः बुधाय स्वाहा॥ ॐ ज्ञौं ज्ञीं ज्ञौं सः बृहस्पतये स्वाहा॥ ॐ हौं हीं हौं सः शुक्राय स्वाहा ॥ ॐ षौं षीं षौं सः शनैश्चराय स्वाहा ॥ ॐ छ्रौं छ्रीं छ्रौं सः राहवे स्वाहा ॥ ॐ फौं फीं फौं सः केतुभ्यः स्वाहा ॥ इति ग्रहमंत्रेण होमः ॥ ग्रहार्थं मंडलं कुर्याच्छोभायं चक्रमादिकम् ॥ सर्वलक्षणसंपूर्णं सर्वावयवसंयुतम् ॥ ॥ ३१ ॥ सुसमे भूप्रदेशे च गोमयेनोपलेपिते ॥ पुष्पप्रकरशोभाढ्ये कर्पूरागरुवासिते ॥ ३२ ॥ हस्तहस्तार्धमुष्टीनां प्रधानं नवसंख्यया ॥ ग्रहवर्णाक्षतैलेख्यं शांत्यर्थं ग्रहमंडलम् ॥ ३३ ॥ चतुरस्रं चतुर्द्वारं नवद्रव्यसमन्वितम् ॥ नवपद्मान्वितं मध्ये कर्तव्यं ग्रहमंडलम् ॥ ३४ ॥ दिगधीशाष्टकं बाह्ये तथा चैव ध्वजाष्टकम् ॥ मध्यमादिषु विन्यस्य दिनेशादिक्रमेण च ॥ ३५ ॥

पद्ममध्ये स्थितं कुंभं पूरितं तीर्थवारिणा ॥ एलामनःशिलादारुपद्मकोशीरकुंकुमम् ॥ ३६ ॥ यष्टीमधुशताह्वा च स्नानं भास्करशांतये ॥ कुमुदं कुंजरोन्मादं पंचगव्यसमन्वितम् ॥ ३७ ॥ शुक्तिस्फटिकसंयुक्तं स्नानं चंद्रस्य शांतये ॥ फलिनी चंदनं बिल्वमेलाचंदनहिंगुलैः ॥ ३८ ॥ मांसी रक्तानि पुष्पाणि स्नानं भौमार्तिशांतिकृत् ॥ हेमशुक्तिभवं मूलं गोमयं मधु रोचना ॥ ३९ ॥ फलाक्षतसमायुक्तं स्नानं बुधविकारनुत् ॥ मदयत्पल्लवाजातीपुष्पाणि सितसर्षपाः ॥ मध्वाज्यमिश्रितं स्नानं जीवस्य मुनिभाषितम् ॥ ४० ॥ इति नरपतिजयचर्यास्वरोदये ग्रहशांत्यध्यायः ॥

अर्कः पलाश इति ॥ २७ ॥ २८ ॥ २९ ॥ ३० ॥ ३१ ॥ ३२ ॥ ३३ ॥ ३४ ॥ ३५ ॥ ३६ ॥ ३७ ॥ ३८ ॥ ३९ ॥ एवं सर्वेषां ज्ञेयम् ॥ ४० ॥ इति हरिवंशपाठकविरचिता जयलक्ष्मीस्वरोदयटीका समाप्ता ।

॥ समाप्तोऽयं ग्रंथः ॥

---


पुस्तक मिलनेका ठिकाना-

खेमराज श्रीकृष्णदास,
"श्रीवेंकटेश्वर" स्टीम् प्रेस,
खेतवाडी-बम्बई.

गङ्गाविष्णु श्रीकृष्णदास,
"लक्ष्मीवेंकटेश्वर" स्टीम् प्रेस,
कल्याण-बम्बई.